श्रीस्वामिनारायणो विजयतेतराम्

1.2

अनादिमुक्तराज-

श्रीमुक्तानंदस्वामिविरचितम्

# ब्रह्मसूत्रभाष्यरत्नम्

गुर्जर-

भाषांतरसहितम्



मूल्यम्

रूप्यकचतुष्टयम्

मूल्य ४--०--०

श्रीस्वामिनारायणो विजयतेतराम्

श्रीप्रकटपुरुषोत्तम ॐ श्रीस्वामिनारायण-

पट्टशिष्य—

श्रीमुक्तानंदस्वामिविरचितम्

# ब्रह्मसूत्रभाष्यरत्नम्

सटिप्पनम्

---

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥

भवभूतिः

---


श्रीस्वामिनारायणभगवत्प्रीत्यर्थम्, आचार्यादीनां च संतोषार्थं

सद्गुरुवर्यश्रीमदीश्वरचरणदासस्वामिप्रेरणया

प्रकाशक :—

अहमदावादजैनसोसायटीनिवासी परीखवल्लभदासात्मजबलदेवदासः

तथा च

राजकोटवासी चावडावटंकीयः भीमजीभाईतनुजहीरजीभाईः

---

प्रथमावृत्तिः

विक्रमसंवत् १९९२ श्रावणः ∴ ई. १९३६ जुलाई

मूल्यं रूप्यकचतुष्टयम्

॥ पूर्णब्रह्म पूर्णपुरुषोत्तम श्री स्वामिनारायण भगवान ॥



# किञ्चित् प्रास्ताविकम् ।

विदितमेवैतद् विशेषविदुषां विदुषां यत् किलास्मिन्नसारे संसारे सांसारिकपरितापपरिक्लिष्टमनसां जन्ममरणाद्यनेकदुःखपरंपराऽनुभवविक्लवात्मनां शाश्वतसुखप्राप्तिपरिश्रमकरणे प्रतिक्षणं प्रयतमानानामपि वास्तवशर्मप्राप्तिविधुराणां क्वचन च विषमिश्रमधुलेशलिप्तासिधारावत् परिणामे भयंकरदुःखजनकसुखाभाससंप्राप्तितः क्षणं संतुष्टहृदयानां दुर्व्यामोहव्यामूढमनसां निखिलदुर्व्यवसायक्रियायामेवाहर्निशं व्यापृतानां पापाचारप्रवृत्तौ च प्रवर्तमानानामपि दंभतः पुण्यमार्गप्रवृत्तिज्ञापने तत्पराणां क्वचिच्च भौतिकविज्ञानमात्रेणैवास्य विश्वस्योपकृतिः संपत्स्यत इत्येवं विश्वोद्धारव्यापारे कीलोत्पाटिवानरवद् व्याप्रियमाणानां क्वचिच्च स्वीयबुद्धिबलमाश्रित्यैवाहर्निशं कल्याणसाधनसंशोधकानां कुत्रचन च सुतरां दुरूहसंतमसाक्रांतमहारण्यानीपरिभ्रष्टानर्घ्यसुरत्नसंशोधनवत् स्वकीयाज्ञानसंछन्ने स्वस्मिन्नेवानर्घ्यनुज्ञानसंमार्गणे प्रवर्तमानानां भिन्नभिन्नमार्गैः परिभ्रम्यमाणानां स्वकल्पितमिथ्यासाधनावाप्तित एवाहमिन्द्रत्वमास्थितवतां पञ्चजनानां निखिलानामपि जनानां सर्वाऽपि प्रवृत्तिः सर्वतः सुखसंपादनमूलिकैवेति । परमत्र केन पथा केन च साधनेन कस्याप्तजनस्यायतिहितकृता शासनसमाश्रयणेनात्र परत्र चातिमधुरमविनाशि चातुलसुखं निःश्रेयसं वासादनीयमित्येतदपि विचारणीयं सुधीपरिष्कृतैः । यद्यपि विलोक्यन्ते पन्थानः सुबहवो, दरीदृश्यन्ते च साधनान्यपि भूरीणि, दृष्टिपथमायान्त्यपि संख्यातीतानामाप्तजनाभासानां विपुलानि शासनान्यत्र जगति, परं 'हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः' इति न्यायेन स्वस्मिन् हंसत्वापादनं जलमिश्रपयःपृथक्कारवत् तत्तन्मिश्रपयःसदग्रहणं चेत्येतत् सुक्लिष्टतरं खलु ।

सत्यप्येवमिह ये वर्तंते बुद्धिमन्तः प्रज्ञाप्राग्भारावहस्तितदेवगुरवो निखिलवेदवेदनविज्ञातसारासारवस्तुनिचयाः शास्त्रांभोधिविगाहनावाप्ततथ्यवस्तुस्वरूपाः हंसत्वाश्रयणे पयःपृथक्कारे चापि सुतरां शक्ता विपश्चितस्तैस्तु निश्चितमेवैतद् यदिह प्रवर्तमानेष्वनेकेष्वपि मोक्षपथेषु सुतरां समीचीनः श्रेष्ठश्च पन्था वेदान्तमेवेति; सत्स्वपि साधनेषु बहुषु नितरामवन्ध्यं फलजनकं च साधनं तु वेदांतापरपर्यायकोपनिषत्प्रोक्तं ज्ञानमेव श्रौतं; तथा च संख्यातीताप्तवर्गीयहितशासनेषु सत्स्वपि सुतरां समादेयमाचरणीयं तु शासनं श्रीमदौद्धवीयमेवेति।

तत्र किल वेदांतशास्त्रे प्रमाणभूतानामौपनिषदां वाक्यानां परस्परं समन्वयः केन पथा ज्ञातव्यः, परस्परं विरोधाभावेऽपि मंदप्रज्ञतया ज्ञायमानं वैरुद्ध्यं केन विज्ञानेन व्यपोहनीयम्, अर्थसरणिश्च मिथः संश्लिष्टा कथं विज्ञाता स्यादित्येतदर्थं परमकारुणिकेन कलिकालप्रसृताज्ञानसंतमसापोहदिवाकरेण पुरुषोत्तमावतारेण भगवता श्रीमद्वेदव्यासेन ब्रह्मसूत्राणि निरमीयंतेति सुविदितमेव । द्वापरस्य शेषभागकाले भगवान् श्रीबादरायणः ऋग्यजुःसामाथर्वाभिधानकं

वेदविभागं विरच्य जैमिन्यादिशिष्येभ्योऽध्यापयामास । तदा जैमिनिर्वैदिककर्मनिष्ठानां कर्मकांडरूपवेदविभागस्य व्यवस्थादर्शकं पूर्वमीमांसाख्यमुत्कृष्टनिबंधमभान्त्सीत्, तद्गुरुः श्रीमद्वेदव्यासश्च मुमुक्षूणां ज्ञानोपासनारूपवेदभागव्यवस्थादर्शकमुत्तरमीमांसाख्यमहानिबंधं व्यरीरचत् । तदयमेव जैमिनिकृतनिबंधः कर्ममीमांसा वा पूर्वमीमांसेति कथ्यते, श्रीव्यासकृतश्च महानिबंधो ब्रह्मसूत्रं वा ब्रह्ममीमांसा वेदांतदर्शनं वोत्तरमीमांसेति चाभिधीयते ।

एतद्ब्रह्मसूत्रोपरि सुबहूनामाचार्याणामनेकानि भाष्याण्युपलभ्यन्ते; वृत्तयो वार्तिकानि टीकाश्चापि बह्व्यो विलोक्यन्ते; स्वस्वमतानुकूल्येनैतद्ब्रह्मसूत्रोपरि कस्यचिद् भाष्यं वा टीका न भवेदेवंप्रकारको नास्ति कश्चित् संप्रदायो वैदिको वा पौराणिकोऽस्मिन् भारतवर्षे इत्येवं कथने न काचिदप्यतिशयोक्तिः । श्रीशंकराचार्यादिसंन्यासिनां केवलाद्वैतवादीनि भाष्यादीनि दृश्यन्ते; शैवसंप्रदाये चावधूताचार्यादीनां, वैष्णवसंप्रदाये च रामानुजाचार्य–मध्वाचार्य–निंबार्काचार्य–वल्लभाचार्यप्रभृतीनामाधुनिकबलदेवविद्याभूषणादीनां चापि भाष्यादीन्यालोक्यन्ते; नैतावदेव परं व्याकरणाचार्यश्रीपाणिनेर्गुरोः श्रीमदुपवर्षपंडितस्य बौद्धायनमुनेश्च वृत्तयोऽप्येतद्ब्रह्मसूत्रोपरि वर्तन्ते, परमिदानीं ता नोपलभ्यन्ते। द्राविड–नीलकंठ–भास्करादिपंडितानां भाष्याण्यपि सन्त्येव; किं बहुना, एतद्वेदांतदर्शनोपरि केनचित् पंडितप्रकांडेन किंचिन्नैव लिखितमिति प्रायशो न वक्तुं शक्यते; एवमेव परिपाटीप्रवृत्त्या श्रीमत्स्वामिनारायणसंप्रदायेऽपि ब्रह्मसूत्रोपरि भाष्यं निरमायि; यत् खलु 'ब्रह्मसूत्रभाष्यरत्नम्' इत्याख्यया प्रथितम् । निर्माताऽस्य भाष्यरत्नस्य पंडितधुरंधरः श्रीमुक्तानंदस्वामीति निःसंशयं ज्ञातुं शक्यते स्वोपज्ञश्लोकादेवेतः

'श्रीमतां व्याससूत्राणां मुक्तानंदः करोम्यहम् ।
सुखबोधं भाष्यरत्नं व्यासाभिप्रायबोधकम् '॥

इत्येवमारंभे स्वयमेव कर्ता स्वकीयं नामोपलिखति, अन्ते चापि—

'ध्यात्वा भक्त्यांघ्रिपद्मं निजहृदि ललितं स्वामिनारायणस्य ।
मुक्तानंदेन दुर्गे पुरमधिवसता भाष्यरत्नं मयेदम् ॥
सूत्राणामुत्तमानां रचितमविततं यर्हि शारीरकाणाम् ।
गोपालानंदनामालिखदतिनिपुणो मत्कृतौ मत्सहायी ॥ १ ॥

इत्येवं कृतवान् स्वीयं नामनिर्देशं सुस्पष्टम् । स्वामिनारायणीयमेतद् भाष्यरत्नं मुक्तानंदमुनिविरचितं प्रायः सर्वसंप्रदायान्तरीयाचार्यकृतेभ्यस्तत्तद्भाष्येभ्यः सर्वातिशायि सर्वोत्कृष्टं सुस्पष्टमनतिविस्तृतं भगवद्बादरायणमतस्य सुस्पष्टतया प्रतिपादकं प्रायः सौम्यसरलसुज्ञेयसुस्पष्टस्वतिशयशुद्धसंस्कृतभाषोपनिबद्धं स्वकीयसंप्रदायप्रतिपादकत्वेऽपि मूलसूत्रकारमताविरोधि खंडनमंडनशैलीपुरःसरं विशिष्टाद्वैतमतविस्फोटकं सर्वांशपूर्णतया सहृदयजनाह्लादकं

वर्ततीति ज्ञास्यंति निष्पक्षदर्शनाः पंडितप्रवराः साद्यंतपर्यालोचनयाऽस्य भाष्यरत्नस्य। यद्यपि विशिष्टाद्वैतमतं यथा रामानुजीयैः स्वीक्रियते तथैव श्रीमत्स्वामिनारायणीयैरप्यूरीक्रियते, तथापि श्रीमत्स्वामिनारायणस्वीकृतं विशिष्टाद्वैतमतं श्रीरामानुजस्वीकृताद्विशिष्टाद्वैतमतात् किंचिद्विशिष्यते; यथा तदेतदस्मिन् भाष्यरत्ने द्वितीयाध्यायप्रथमपादस्य द्वाविंशे सूत्रे विस्तारपूर्वकं प्रतिपाद्यत इति तत्रैव विलोकनीयम्। सुतरां सुगृहीतनामधेया एतद्भाष्यरत्ननिर्मातारः श्रीमद्मुक्तानंदस्वामिचरणाः कदा कतमच स्थलविशेषं स्वकीयपवित्रजनुषा विभूषितवन्त इत्यादि सर्वमपि प्रास्ताविकादेतस्मादनन्तरमेव निर्दिष्टात् तदीयजीवनवृत्तादवसेयं सुधीभिः शिष्टवाचकैः।

अस्य भाष्यरत्नस्य प्रथमे समन्वयाध्याये परब्रह्मज्ञापकानां स्वोपबृंहकस्मृतिसहितानामुपनिषद्वाक्यानामसंख्यत्वात् प्रतिवाक्यं तन्मीमांसानुपलब्धेः संशययुतानां केषांचिदेव वाक्यानां विचारद्वारेण कृष्णद्वैपायनानुष्ठितैस्तन्न्यायैः–संदिग्धवाक्यविषयकाधिकरणैस्तथाभूतानां संशययुतानामपि वाक्यानां निर्णयो भवतीत्येवं कतिचिदेव वाक्यानि तात्पर्यलिंगसमन्वयेन परब्रह्मज्ञापकानि सूत्रितानि; तेषु कतिचित् प्रसिद्धलिंगानि वाक्यानि प्रथमपादे मीमांसितानि; कतिचिचानतिप्रसिद्धलिंगानि वाक्यानि द्वितीयपादे मीमांसितानि, तृतीयपादे च स्पष्टतया परब्रह्मस्वरूपप्रतिपादकानामुपनिषद्वाक्यानां मीमांसाप्रसंगादधिकारिवर्णनस्य विधानम्; चतुर्थपादे त्वस्पष्टतया परब्रह्मलिंगप्रतिपादकानां कतिपयानां वेदांतवचनानां मीमांसाप्रकारो निरूपितः।

ततश्च द्वितीये विरोधपरिहाराध्याये पूर्वाध्यायनिरूपितसमन्वयस्य वेदांतविरुद्धस्मृतितर्कादिभिः प्राप्तस्य विरोधस्य परिहारः कृतः। तत्र प्रथमपादे सांख्यप्रभृतितर्कविरोधं परिहृत्य स्वसिद्धांतप्रतिपादनमकारि; द्वितीयपादे च वैदिकतर्कावलंबनेन सांख्यप्रभृतिपक्षांतरेषु दूषणमदायि समग्रश्च श्रुतिविरुद्धशास्त्रमतसिद्धांतो निराकारि, तृतीयपादे तु श्रुतिष्ववांतरविरोधपरिहारपूर्वकमाकाशादिभूतसमुत्पत्तिः प्रदर्शिता, जीवश्च नित्योऽजोऽणुर्ज्ञाताऽनाद्यज्ञानेनानादिबद्ध इति च निरूपितमस्ति; चतुर्थपादे च भूतानामिवेन्द्रियाणामपि ब्रह्मण उत्पत्तिरुत जीववन्नित्यत्वमित्येतद् विचारितम्, सर्वेषां च नामरूपव्याकरणं निरूपितम्।

ततश्च तृतीये साधनाध्याये स्वरूपासकोपास्योपासनभेदा आश्रमधर्मादयश्च निर्णीताः। तत्र प्रथमपादे नित्यत्वादियुक्तस्य जीवस्य गत्यागतिनिरूपणमकारि तदवस्था च व्यचारि; द्वितीयपादे जीवावस्थानिरूपणपूर्वकं तस्यैव नित्यत्वादिगुणकस्योपासकत्वप्रदर्शनम्, सर्वज्ञत्वादिगुणगणवतः श्रीनारायणस्य स्वरूपलक्षणाभिधानपूर्वकमुपास्यत्वनिरूपणम्; तृतीयपादे च तदुपासनाविशेषाणां गुणोपसंहारः, कथमुपासनमित्याकांक्षायां च तन्निरूपणम्, परविद्याप्रकारस्य प्रतिपादनं च, चतुर्थपादे तु विद्यांगभूतानामाश्रमधर्माणां वर्णनम्, विद्यात एव पुरुषार्थ इति च प्रकाशनम्।

ततश्च चतुर्थे फलाध्याये फलविशेषनिर्णयः । तत्र प्रथमपादे उपासनप्रकारपूर्वकमुपासकस्योपासनव्यवस्थानादिकमुक्तम्; द्वितीयपादे जीवकलापस्योपासकस्योत्क्रांतिदशाया वर्णनमथवोपासकस्योपासनसामर्थ्याद्धृदयाविर्भूतेन नारायणेन प्रकाशितनाडीमार्गस्य सुषुम्णाख्यमूर्द्धन्यनाड्या देहादुत्क्रमणाभिधानम्; तृतीयपादे अर्चिरादिना मार्गेण परविद्यावतां हिरण्यगर्भत्रिलोचनादिदेवतास्थानातीतं पुरुषोत्तमाभिधपरब्रह्मश्रीनारायणस्य परमसुखरूपं ब्रह्मशब्दवाच्यं पदं प्राप्यं निरूपितं प्रकृतिवियुक्तमात्मानमक्षरब्रह्मात्मकतयोपासीनानामपुनरावृत्तिलक्षणा च गतिर्निरूपिता; चतुर्थपादे च परब्रह्मप्राप्तानां स्वरूपाविर्भावादिप्रकारप्रदर्शनं परब्रह्मप्राप्तस्य भक्तस्यावस्थावर्णनं च ।

इत्यादि स्पष्टमत्र विषयाभिधानमभिधीयते । एतदेव भाष्यरत्नमनादिमुक्तराजश्रीमन्मुक्तानंदस्वामिकृतमक्षरशो वर्तते । अत्र यानि दृश्यन्ते टिप्पनकानि तानि प्रायो निर्गुणदासस्वामिकृतानीति ज्ञेयम् । यदि चेदेतत्कर्तृनाम्नैव किंचिद्विपर्यासीकृतमन्यद् भाष्यरत्नं चात्रोपलब्धं भवेत् तर्हि तदर्वाचीनं नवीनैरेवोद्भावितमिति सुधीभिर्ज्ञातव्यम् । भाष्यरत्नमेतल्लिखितप्रत्याकारेण द्वित्रप्रत्यन्तरसंतुलितेन समपादि श्रीमदनादिमुक्तराजगोपालानंदस्वामिशिष्यरत्नश्रीमद्निर्गुणदासस्वामिविनेयश्रीमदीश्वरचरणदासस्वामिभिरत्रत्यसरसपुरस्थस्वामिनारायणमंदिरस्थैः । ततश्च तैरेव निरणाय्येतद् भाष्यरत्नं मुद्रिताकारतया प्रसिद्धिमुपनेतुम्; मुद्रापणकार्ये च नियोजितोऽहं तैरेव स्वामिवर्यैर्मुद्रकादिकृताशुद्धीर्दूरीकर्तुं साद्यंतं च स्पष्टाक्षरैर्मुद्रापयितुम् । मयाप्यस्य मुद्रापणकार्ये मुद्रकादिकृताशुद्धीर्निरासयितुं सुविशदाक्षरैश्च मुद्रापयितुं सावधानतया साद्यंतं निरीक्ष्य मनोलक्ष्यपूर्वकं प्रयस्तमेव, तथापि दृष्टिदोषस्य स्वाभाव्यान्मानुषभावस्य दोषबाहुल्यप्राचुर्याच्चात्राक्षरयोजकादिकृतास्त्रुटयश्चेद् दृष्टिपथमागच्छेयुस्तर्हि 'गच्छतां स्खलनं क्वापि भवत्येव प्रमादतः । हसन्ति दुर्जनास्तत्र समादधति सज्जनाः' इत्येतं न्यायं मनसिकृत्य कृपापीयूषपूर्णान्तःकरणैः पंडितप्रकांडैरसूयादिदोषनिवहं पंडिताग्रण्यनादृत्य दूरीकृत्य संशोधनीयास्ता इत्येवमाशास्ते एतद्भाष्यरत्नमुद्रापणकार्यनियुक्तोऽयं विद्वज्जनकृपाकांक्षी–

म्हेतांपनामा–

मयाशंकरतनुजन्मा गिरिजाशंकरः शास्त्री.



ब्रह्मसूत्रभाष्यरत्न कर्ता-




॥ अनादि मुक्तराज सद्गुरु श्री मुक्तानंद स्वामी ॥

# श्रीमन्मुक्तानंदस्वामिनां जीवनवृत्तम्।

श्रीविक्रमभूपालस्याष्टादशशताब्द्याः प्रायः प्रांतसमये दिव्यचंद्राख्यप्रसिद्धपुरवास्तव्यैका कुलीना धनाढ्यवणिक्पुत्री जैनधर्मानुगामिनी रतनबाईनाम्नी दैवेच्छावशात् तरुणावस्थायामेव वैधव्यभागजनि। तस्याः किंचिदपत्यमपि नाभूत्। कुटुंबे नगरे च तत्प्रवृत्तिप्रसारेण शोकः सुतरां व्यानशे। तत्पितुरुपरि प्रापदियं महती विपत्तिः। 'मूर्खश्च पुत्रो विधवा च कन्या विनाग्निना दाहमहो करोति' इत्यभियुक्तोक्तेस्तन्मातापितरौ धर्मविघातकतादृगापत्तिसमये किंकर्तव्यतामूढौ समजनिपाताम्। तादृक्तारुण्यवतीं पुत्रीं निरीक्ष्य वैधव्यभाजं केषां सुचेतसां मनः परितापं नायायात्? इत्येवमेव तद्दुःखमग्नयोस्तन्मातापित्रोः समयो व्यत्येतुं प्रावर्तत; परं रतनबाई तु कस्यांचिदन्यविधायामेव विचारश्रेणौ विचरते स्म। जगतः स्वरूपं तया संपूर्णतया पर्यैक्षि; तज्जन्यसुखादीनां क्षणिकत्वं प्रत्यक्षीकृत्य साधुसाध्वीप्रभृतीनां व्याख्यानेषु वैराग्यस्यैव प्राधान्यं यद् विलोक्यते तद्धेतुरतया सम्यगबोधि; निश्चयं च कृतवती सा यदयं संसारो यदि मामत्यजत् तर्हि मयाऽपि त्यक्तव्य एवायमिति। इत्येवं निश्चयवतीमुदासीनां च तां विलोक्य तन्माता यदैकदा बहुशः सांत्वयामास तदा सुस्पष्टमाख्यायि तया—'मातः! मां दुःखमग्नां दृष्ट्वा भवद्भिः कैश्चिदपि न मनाग् दुःखमग्नैर्भाव्यम्। संसारेऽस्मिन् न कोऽपि सुखी। मद्विधा नैके दरीदृश्यन्ते दुःखिनः। तदेतद् दुःखं तु नाहं गणयामि; अहं तु समभिलप्याम्येतदेवाथो सर्ववासनाः परित्यज्य केवलं धर्मध्याने विचरितुं जैनधर्मदीक्षामुपादाय साध्वीजीवनमेव जीवितुं च। अयमेव मे सुतरां दाढर्यभागन्तिमो निश्चयः।'

रतनबाईपितरौ जैनधर्मरागिणावभूताम्। साधुसाध्व्युपरि तयोरतीवादरः समभवत्। तौ तु तदेतन्निश्चयमाकर्ण्यातिशयितमापेदाते सानंदाश्चर्यम्; पुत्र्या धर्मभावनां विज्ञानं च विलोक्य ताभ्यां झटिति दीक्षाग्रहणायानुमतिः प्रकटीचक्रे। ततस्तु दीक्षोत्सवस्य सुदिनमपि निर्णीतम्; प्रावर्तत महानुत्सवः, जैनसाधुसमीपे जग्राह च जैनधर्मदीक्षां सा। अथ तद्रतनबाईमार्गः पार्थक्यमापेदे तज्जननीजनकादिमार्गात्। साश्रुनयनैः सर्वैः कुटुंबिजनैः स्वस्वगृहं प्रतिजग्मे। रतनबाईचित्तवृत्तेर्वैराग्यासक्ततां विलोक्य तत्पितरौ यावज्जीवं तत्संबंधिचिंतानिवृत्तेः शांतिमापतुः। दीक्षाग्रहणानन्तरं सा रतनबाई साधुसाध्वीनां संघं दृग्गोचरीकृत्य जैनोपाश्रये निवासमकार्षीत्। जैनधर्मस्य प्रवचनश्रवणेन साधुजनसमागमेन च तस्याः कतिचन मासास्तु व्यत्ययुः। अमुकसमयानन्तरं कुत्रचिद् बहिःप्रदेशे गमनं कार्यमिति सा निश्चयमपि करोति स्म; परंतु दैवगतिः खलु विचित्रा; जनेन चिंतितं किल विपर्यास्यते दैवेन। यज्ञियसुगंधिहुतद्रव्यैःसह यत्किंचिदपि हिंगुसंसर्गो यथा तत्सुगंधिद्रव्येषु प्रसारयति दुर्गंधं तथैव तस्मिन्नुपाश्रयेऽपि तेषां तपस्विनां व्याख्यानसारस्यप्रशंसया सह किंच कुशंकाप्रसरोऽपि चर्चास्पदीबभूव।

अथ तस्मिन्नेव समये सौराष्ट्रमंडलस्थामरावती (अमरेली) ग्रामनिवासी सत्पुरुषः श्रीमूल्दासाभिधो रामानुजीयसाधुर्गोंडलशाखीयो वर्तते स्म। यस्य किल साधुत्वमुत्तमचारित्र्यं चमत्कारजननी च प्रतिभा सम्यक् ख्यातिभागजनि। स साधुराजः समाजग्मिवान् स्वशिष्यवर्गप्रार्थनया दिवबंदरे। तं प्रति लोकानामादर उत्साहश्चातीव वृद्धिंगतो दरीदृश्यते स्म।

रजन्याः पाश्चात्ययामो यत्किंचिदेव व्यतीतोऽभूत्। पक्षिणामारावः क्वचिदपि श्रवणगोचरतां नायासीत्, वियत्स्थतारामंडलं नीरवतया किंचिन्निरीक्षणं कुर्वदिव प्रकाशते स्म, विरलांधकारे च वृक्षा अपि नैश्चल्यपूर्वकं स्तब्धीभूयावतिष्ठन्ते स्म, किं बहुना सर्वत्र शून्यतासाम्राज्यमेवालोक्यते स्म। तादृग्विधे तत्काले शय्योत्थायं कृतेश्वरस्मरणः साधुः श्रीमूल्दासः कलशं पाणावादाय ग्रामाद् बहिः शौचाचारार्थं निरगच्छत्। ग्रामबहिर्देशस्थकूपं प्रति तद्दृष्टिर्यावत्प्रससार तावत्तु दृग्गोचरीबभूवैका श्वेताकृतिश्चलनक्रियावती। तां दृष्ट्वा विचारमग्नः स्तब्धवान् मूल्दासः। पुनश्च दृशि स्थिरीकृतायां परिहितश्वेतवस्त्रा काचित् स्त्री एव भासते स्म न पुमान्। जिज्ञासया तर्कविशेन च मूल्दासः सुतरां स्थिरतामापन्नवान्, तां प्रति गंतुं निश्चित्य च शनैः संचक्राम तद्दिशाम्। अतीव समीपीभूय यावत् समीक्षते तावत्तु श्वेतवस्त्रसज्जा स्वेष्टदेवतं प्रार्थयन्ती दृक्पथमाययावेका साध्वी, या किल कूपपातं कर्तुं समुत्सुकाऽभूत्। कूपतले स्ववपुः स्थितिं कुर्यादित्येतदर्थं तया स्वोत्तरीयांचले पाषाणभारो बध्यते स्म। मूल्दासस्त्वरितं तत्संकल्पमज्ञासीत्, निरणैषीच्च तत्सामयिकं स्वकृत्यम्।

साध्वी सा यावद् गतवती कूपतटं त्वरितक्रमा तावत्तु मा मेति प्रोच्चैः प्रभाष्य, अनुधावित्वा च झटिति तत्पाणिं परिगृह्य समाचकर्ष तां मूल्दासः। तस्मिन्नेव क्षणे तद्दुःखनिवृत्तिः समभूत्। अवदच्च सा—'को भवान्? म्रियमाणां त्यजतु माम्, नाहं जीवितुमुत्सहे' इत्येवं कथयंती रुरोद भृशम्। मूल्दासस्तद्धस्तं नैव त्यक्तवान्, सधैर्यं च सांत्वयामास यथा—भगिनि! कथं म्रियसे? किं दुःखं वर्त्तते? तदेतच्छ्रुत्वा रतनबाई दिङ्मूढेवावतस्थे। मूल्दासस्य दुःखनिवृत्तिं कुर्वन्ति सांत्वनवचनानि समाकर्ण्य धैर्यमापन्नया तया स्वकीयं निर्बलं हृदयं स्थिरीचक्रे। यथा कस्यचिद् विश्वस्तप्रियजनस्य पुरस्तान् मनसो रहस्यवार्ता स्वयमेव निःसरेत् तथैव तत्पवित्रसाधोः पुरस्तात् तत्साध्व्या ऐतिह्यं स्वयमेव निःससार। मूल्दासो ज्ञातवान् यत्—कुलीना धार्मिकीयं बाला वैधव्यदशायां प्राप्य वैराग्यं गृहीतवती दीक्षाम्; दीक्षावस्थायां च यद्यपि चीर्णानि घोराणि तपांस्यनया तथापि जैनधर्मस्य नवविधां शीलमर्यादां संपूर्णतया पालयितुमक्षमः साधुसाध्वीसहवासः कृतवानिमामेतद्दुःखमग्नामिति। स एवैतत्प्रसंगप्रापणे प्रथमकारणम्। इत्येवं ज्ञात्वा मनसि मूल्दासो बहुशो बोधयामास तां मानुषस्वभावपरिस्थितिं संगप्राबल्यं च। एकलशृंगिपराशरप्रभृतितपस्विधुरंधराणामपि संगा-

देव विकारोऽजायतेत्यादि सम्यक् श्रावयित्वा पुनस्तामवोचत पुत्रि ! नायं ते दोषः, नवा त्वया सह भ्रांतस्य तस्य साधोर्दोषः, किंतु भवतां या सहवासरीतिः सैव खल्वेतद्दोषपात्रम्। विकारजनकसंयोगेषु निवासं कृत्वा संयमपालनमशक्यमेव। अथ यज्जातं तज्जातमेव, मा खिद्यस्व, तवेदमाचरणं ज्ञानपूर्वकं नैवाजनि; अकस्मादेवेदं पापं प्रमादतः प्रादुरभूत्, तन्निवारणस्य प्रायश्चित्तं पश्चात्ताप एव, 'पश्चात्तापेन मनुजो मुच्यते पाप्मना ध्रुवम्' इतीदं विपश्चितां मतम्। एतादृशो दुर्लभमानुषदेह एवमेव विनाश्य इतीदं न युज्यते त्वत्सदृशसाध्व्याः, जगन्निंदां सहस्व, जीव च पुनः पवित्रतापूर्वकम्। त्वद्गर्भस्थबालकस्यैवं मदृष्टौ विनाशनेनाहं स्त्रीहत्याबालहत्याद्वयमेवाप्नुयामितीदं न युक्तम्। तदेतद्वचांसि कर्णगोचरीकृत्य साध्वी सा साश्रुधारमरुदत्, तदंतर्लीना वैराग्यवृत्तिस्तां ज्वालयति स्म। सा जगाद—'भ्रातः ! मदपकीर्तिर्वा मे श्याममुखं तु सोढुं शक्यते मया; परं तत्साधुपुरुषस्य किं भावि ? तत एतद्दुश्चरित्रप्रकटीभवनात्पूर्वमेव मन्मरणं युज्यते। मज्जीवनेन तु स साधुरकस्मात्स्वकृतप्रमादजन्यदुष्कीर्तिभयादवश्यं करिष्यत्यात्मघातम्। इत्यस्यां परिस्थितौ प्रादुर्भवन्त्यां मम जीवनं किं प्रतिभाति युक्तं भवताम् ?' इत्येतदाकर्ण्य मूलदासः क्षणं तु विचारमूढ इव समपद्यत; ततश्च किंचिन्निश्चित्य बभाषे—'प्रियभगिनि ! मनागपि खेदं मा कुरु। त्वं मे भगिन्येवासीति मन्यस्व। एहि मे निवासस्थलम्। त्वं तत्र निश्चिंता निवसस्व। तस्य पवित्रसाधोर्दुष्कीर्तिर्मयैव स्वीकरिष्यते। न मेऽस्ति जगतो भयम्। भवत्सदृशपवित्रात्मनां हत्या निवारणीयैव मया'।

निशम्य तन्मूलदासवचः सा साध्वी तन्महत्तामुदारतां पवित्रतां च पर्यालोच्य महदाश्चर्यमग्नैव समजनि; प्रभूतसाधुसाध्वीनां सहवासं कृत्वाऽपि तया तादृगप्रतिमसाधुता नैव कदाचिदनुभूयते स्म। मूलदासवचःप्रभावात् तस्या धार्मिक्यात्मश्रद्धा पुनर्जाज्वल्यमाना समपद्यत। स्वकीयवर्तनकलंकं स्वापकीर्तिसहनपूर्वकं वैराग्यरसमध्य एव जीवित्वा क्षालयितुं निश्चिकाय सा। मृत्युदेवं नमस्कृत्य मूलदासानुगमनेन जीवनस्य विकटमार्गः स्वीचक्रे तया। प्रभातकालात् पूर्वमेव तावुभौ पुण्यात्मानौ दिवनगरस्थसाधुमंडलीपुण्याश्रमं प्राप्य स्थितिमकुर्वाताम्।

ततस्तु प्रभातं प्रादुरभूत्। व्यवसायवन्तो जनाः स्वं स्वं व्यवसायं कर्तुं निर्गच्छन्ति स्म। कुत्रचिच्च मानवयूथे काचिन्नवीनैव वार्ता चर्चास्पदीभूता श्रूयते स्म। जैनोपाश्रयसमीपे तु विशेषेण कलकलः श्रवणविषयीभवति स्म। कतिचनशिष्टजैनानां वदनानि खेदमेदुराणि दृक्पथमायान्ति स्म। कोलाहलो वृद्धिमापत। तत्क्षणमेव वार्ता प्रकटीबभूव यज्जैनोपाश्रयतः साध्व्येका पलायतेति। जैनसमाजस्तु निशम्यैतां वार्तां भयग्रस्त इव किंकर्तव्यतामूढ एवाजनि। तत्कालमेवान्यतः प्रादुरभूद्वार्ता यदियं साध्वी वर्तते मूलदासाश्रमे। झटिति तज्जनयूथं रोषपरिपूर्णं मूलदासाश्रमं प्रति गंतुं निष्क्रान्तम्। कोलाहलं गृहागतं श्रुत्वा मूलदासः सन्मुखमागमत्,

सत्कारपूर्वकमासनदानं च कृतवान्। महाजनमंडलमपि मूलदासस्य परिचितपूर्वां पवित्रतां प्रातिभशक्तिं च परिभाव्य क्षणं तु मौनीभूतमवास्थित, परं क्रोधवेगस्यौत्कट्येन शनैः शनैः साध्वीविषयकप्रश्नकरणे प्राभवत्। मूलदासेनापि महाजनमंडल्याः प्रकोपस्वरूपं सम्यक्तया निर्यैक्षि; तादृगवस्थायां च निर्दोषतयाऽपि साध्वीमपराधभाजं सुरक्षितुं प्रार्थनाकरणं वा विनयनं तु निरर्थकमेवेत्यपि विचारितम्। ततोऽतीव शांतिपूर्वकं गंभीरभावं चालंब्य भगवद्रामचंद्रस्मरणं मनसि विधाय वक्तुं प्राक्रमत—'भ्रातरः! मानवः खलु प्रमादपात्रम्। महान्तोऽपि प्रमाद्यन्ति। अहं तु पामरः प्राणी। नास्ति मयि मनागपि पात्रता। अनुग्रह एव कार्यो मयि भवद्भिः। मयैव पापेन साध्वीयं पापे प्रक्षिप्ता। तद्गर्भस्थबालकस्याहमेव पिता। अनेनैव हेतुना अस्या आश्रयदानं मया कृतम्। इतः प्रभृति सहानया भवतां धर्मसंबंधोऽन्योऽपि वा कश्चित् संबंधो निवर्तत एव। अहमेवैतस्याः साध्व्या एतद्बालकस्य च रक्षकः पोषकश्च भविष्यामीत्येतदुद्घोष्यते मया भवत्समक्षम्। भवन्तः सर्वेऽपि शांताः सन्तो निवर्तध्वं स्वस्वगृहान्। अस्मिन् विषये नास्ति केषांचिदपि स्वाश्रया क्षतिः। अस्माकं पापमस्माभिरेवानुभविष्यते। सत्यप्येवं मत्संबंधे युष्माभिर्यथेष्टं यदपि कर्तुं शक्यते तदवश्यमेव कार्यम्। तद्विषये स्वातंत्र्यमेव वः। भवन्तो मे गौरवपात्रम्। अतोऽन्यद् विशेषनिवेदनं नैवाशासिष्यते श्रीमद्भिरित्येतदाशासेऽहम्'।

श्रुत्वैतानि वचनानि महाजनमंडल्याः केचनाधीराश्चंडप्रकृतयो मनुजाः कोलाहलं चक्रिरे। समुत्थाय च तैर्हस्तोत्क्षेपपूर्वकमारेभे दुर्वाच्यवचनवृष्टयः कर्तुम्। महान् कलकलः समुद्भावि। जनसंमर्दश्चापि क्षणादेव प्रादुरभूत्। सर्वेऽपि जना धिक्कारशब्दप्रहारान् प्राजह्रुर्मूलदासं प्रति। तदेवं क्षणादेव सुविख्यातसाधोः पावनी महत्ता समुज्ज्वलकीर्तिश्च जनसमाजस्य तिग्मवाक्प्रहारैर्ध्वस्तविशस्ता भवति स्म। मूलदासस्तु स्वकृतमहाशुभकर्मणा स्वान्तः शांतिमेवानुभूतवान्। श्रीमद्रामभजनं कुर्वन् स्वस्थतयैव तां घोरामवमाननामपकीर्तिरूपां ज्वलदंगारवृष्टिं च सप्रेम सेहिवान्। जल्पकाः क्षणं जल्पकीभूय निववृतिरे। जनसंमर्दश्चापि निरस्तः। विपद्वार्दलं विशीर्णम्। प्रतिगृहं सैव वार्ता ग्रामे चर्चास्पदीबभूव। धिक्कारादन्यत् किंचनापि न श्रूयते स्म। ततश्च महाजनमंडलस्योग्रकोपं निश्चित्य मूलदासस्तद्ग्रामान्निर्गत्य प्रयातवानमरावतीं (अमरेली) नगरीं साध्वीसहितः।

दीपनिर्वाणे सति प्रकाशस्थानं संतमसेनेव मूलदासस्य कीर्तिप्रदीपिकायां निर्वाणायां तत्कीर्तिस्थानानि दुर्यशोमयांधकारैश्छन्नानि धिक्कारमयानि जज्ञिरे। तदेतत् सर्वमपि परमसंतोषपूर्वकं सेहे मूलदासः। वैराग्यप्रतिमामिव तां साध्वीं परिपालयन् स्वभगिनीमिव रामायणादिधार्मिकग्रंथानां धर्मरहस्यानि बोधयन् समयनिर्गमनं कृतवान् सः। ततश्च तत्पवित्रसाध्व्याः स्वाभाविक्यां वैराग्यवृत्तौ धर्मस्य भक्तेश्च बीजानि प्रादुर्भवन्ति स्म, तस्या ज्ञानमपि परमेश्वरविषयकश्रद्धायां दृढीभूय प्रतिदिनं भक्तिमार्ग एव समाससञ्ज।

इत्येवं गतवति काले पश्चात्तापपुण्यकाले प्रोज्जागर एव मूलदासस्य धर्मभक्तिपरोपकाराणां प्रदीप्तसंस्कारान् मातृद्वारा प्राप्य पूर्णसमये कन्यैका जज्ञे रूपगुणसंपन्ना तपस्विनीतन्वाः । कन्यायाः सौम्याकृतिः स्वभावत एव सर्वान् मुग्धान् कृतवती । प्रतिदिनं तत्कायकांतिर्ववृधे । गतवत्सु वर्षेषु तदीयनैसर्गिकस्वभावाय सर्वोऽपि जनः स्पृहयांचक्रे । राधानाम्ना सर्वेऽपि बभाषिरे ताम् । सारल्येन लज्जया गांभीर्येण सद्वर्तनेन च वशीचक्रे सर्वान् सा ।

राधायाः किशोरवयोनिर्गमानन्तरमथैकस्मिन् दिवस आनंदरामनामा कश्चित् तेजस्वी युवकः समाजगाम मूलदासनिवासाश्रमे । स युवा कनोजग्रामीणः सरवरीओ ब्राह्मण आसीत् । सद्विद्यां संपाद्य तीर्थाटनं कर्तुं निरियाय सः । तस्मिन् समये द्वारिकां गच्छन् मार्गे रात्रिनिवासायामरावतीम् (अमरेली) आगत्य स्थितिं करोति स्म । तीर्थेष्वन्यत्र च साधुजनान् मार्गयन् सत्संगमभिलष्यन् स मूलदासप्रसिद्धिमाकर्ण्य तन्निवासाश्रममागतवान् । तत्राश्रमे प्रेमपूर्वकं तत्सत्कारः समजनि । मूलदासमहत्तापि तदा द्वैगुण्यमाप्ता प्रतिदिनं वर्धते स्म । जनैः क्रमशस्तत्साधुता परोपकारवृत्तिश्च सम्यग् ज्ञायते स्म । आनंदरामस्तमाश्रममाश्रित्य सत्यमेवानंदमुपलब्धवान् ।

अथ स युवा ब्राह्मणो यत्र प्रभाते प्रयाणमियेष तद्रात्रावेव महोग्रज्वराक्रान्तोऽस्वस्थशरीरश्चाभवत् । आश्रमवासिभिर्योग्योपचारैरुपचरितोऽपि तज्ज्वरावेशो नैव मंदीबभूव । रतनबाई राधाऽपि च प्रतिक्षणं तत्संनिधिमपरित्यज्य तदुपचारमकुर्वाताम् । अष्टसु वा दशसु दिनेषु गतवत्सु तन्मांद्यं भयजनकं समपद्यत, शरीरं चातीव कार्श्यमापेदे । राधान्तःकरणं तदा सुतरां दुःखभागभूत् । स्वकीयं भोजनपानादि सत्वरं निर्वर्त्य सा दयाभावतस्तत्परिचर्यामेव कृतवती दध्यावेतदेव यत् कदाऽयं विदेशीयः पान्थः स्वास्थ्यभाक् स्यात् । ईश्वरकृपया ज्वरावेशो निवृत्तः किंचित् । आनंदरामः स्वास्थ्यमभजन् मनाक् । अथैकदा क्षुधावेशवैवश्येन प्रभातादर्वागेव किंचिदशनपदार्थं मार्गितवान् सः । तदा तद्धर्मसंकटमेवापत् । ब्राह्मणशरीरमिति विजातीयपक्वान्नं कथं दीयेत कथं च क्रियेत धर्मविधिबाधः ? । अन्यच्च किंचिदशनमपि तदावश्यं दातव्यमेति विचार्य सर्वैरानंदराम एव तद्विषये पृष्टः—भवद्देशरीतिरियमस्माभिः श्रुतपूर्वा यत् काचित् कुमारी ज्ञात्यन्तरजाताऽपि चेत् तत्पकान्नभोजने नैव कश्चिद् दोष इति । तदेवमस्मिन्नापत्काले यदि चेद्यूयमनया राधया संसाधितमन्नं भुञ्जीध्वं तर्हि निष्पाद्येतानया शीघ्रमेव । देशकालमनुसृत्यानंदरामेणानुज्ञातम् । राधयाऽपि सत्वरमेव प्रेमपूर्वकं सघृतशर्करा यवागूर्निष्पादयांचक्रे, यां समास्वाद्यानंदरामः शांतिं संतोषं चानुभूयोपकारप्रदर्शिन्या दृष्ट्या निरीक्षामास । तदनु क्रमशो मांद्यं निववृते । स्वल्पदिनैरेवानंदरामः सम्यक्तया नीरोगो जज्ञे । राधाऽपि तावत्पर्यंतं दयाभावाधीना तं संसेव्य भोजयामास । आनंदरामश्चापि कौटुंबिकजनवत् सर्वैः सह परिचयमापेदे, येन च तत्रैव स्थितिं कर्तुं तच्चित्तं लोलुपतां भेजे ।

कुमारी राधा कस्मैचिद्योग्यवराय चेद्दीयते तर्हि सम्यगित्ययं विचारस्तु सर्वेषामेव चेतसि प्रथमतः स्थितिं चकारेति तदानंदरामस्य सौशील्यं सुभगाकृतिश्च सर्वानाचकर्ष । अथान्यदा साध्वी रतनबाई स्वकीयमभिलायं सविनयं निवेदितवती पुरस्तादानंदरामस्य । आनंदश्चापि तत्पवित्रात्मनां सत्संगं मोक्तुं नैव प्रबभूव । आश्रमवासिनामुपकारं चारित्र्यं च पर्यालोच्य तद्धृदयमाकृष्टपूर्वमेवाभूत्, तथा च राधायाः सच्चरित्रं संस्कारयुतं चापि जीवनं तत्परिणयप्रौत्सुक्यं वर्धयामास येन च स प्रसन्नतापूर्वकमेव तदभिलापमनुमेने । तदनंतरं तु दैवकृपैवैतादृग्वरकन्यायुगलं संयोजयतीति निर्धार्य निर्विलंबं तल्लग्नदिनं निश्चिक्ये, सुनिष्पन्नं चापि तल्लग्नं सविधि । आनंदरामेण तदारम्य स्वाभिधानं मूलदाससाधुमार्गीणं स्वीचक्रे । वरकन्ययो रूपगुणावस्थादि संस्कारसादृश्यं चापि विलोक्य जनैरानंदपूर्वकं प्रशंसा चक्रे, शिष्टजनैश्चापि सहर्षमाशीर्वादाः प्रददिरे ।

सगुणौ दंपती निर्गमयामासतुः कियन्तं कालं धर्माचरणतः । अथो कियत्कालानंतरं सुपात्रताकृष्टो वेदव्यासो मत्स्यगंधोदरमिव भक्तप्रवरो विदुरो दासीकुक्षिमिव नैष्ठिकब्रह्मचारी हनुमानंजनोदरमिवैको महाननादिमुक्तः श्रीमद्राधोदरमवततार, प्रादुर्बभूव च तत्पुत्ररूपेण जगति । पुत्रस्य रत्नसमां दीप्तकांतिं रूपं च दृग्विषयीकृत्य पितरौ स्वमतिशयभाग्यं प्रशशंसतुः, सर्व आप्तजनवर्गश्च समभवदानंदमग्नः । अयमेव तत्पुत्रप्रवरो भगवतः श्रीस्वामिनारायणस्य जीवनयज्ञेऽर्पणीभूतः सद्गुरुः श्रीमुक्तानंदस्वामी । तत्सौन्दर्यस्यायमेवैको दृष्टांतः पूर्तिकरो यद् भगवान् श्रीस्वामिनारायणः स्वयमेव तस्मै समादिदेश—भवता सर्वदैव स्वशरीरं वस्त्रावृतं करणीयम्; यदि काचित् स्त्री भवतः सौंदर्यमुग्धा सती चित्तचांचल्यं चेत् करिष्यति तर्हि तत्पापभाग् भवानेव भविष्यतीति । भगवत आज्ञां प्रमाणीकृत्य मुक्तानंदस्वामी नित्यमेव स्वशरीरं वस्त्रच्छन्नं रक्षति स्म ।

मातापितरौ पुत्रं मुकुंददास इत्याख्ययाऽऽहूवताम् । गतवति वयसि मुकुंददासो ज्ञानग्रहणशक्तिं संप्राप्तवान् पिता च स्वकीयां सद्विद्यां तस्मै अर्पयितुमारेभिवान् । कृतवांश्च तं प्रवीणं गायनकलायामपि । मूलदासशिष्यौ हाथीरामयदुरामाभिधौ विद्वांसावास्ताम्; तयोरग्रे शास्त्राणां काव्यानां चाभ्यासं सम्यक्त्वेन कृतवान् मुकुंददासः । नैसर्गिकबुद्धिप्रागल्भ्येन सर्वशास्त्राणां रहस्यं सत्वरमेव बुद्धवान् सः । 'विना भगवन्तं सर्वमपि नश्वरम्; भगवत्प्राप्त्यर्थं च निष्कामादि धर्मं दृढीकृत्य तद्भक्तिरेवावश्यं कर्तव्ये'ति सर्वशास्त्ररहस्यमबोधि तेन । यथा यथा वयोवृद्धिः समभूत् तथा तथा वैराग्यवशतस्तच्चित्तं गृहवासादुदासीनमेव भवति स्म, परमन्यतो मातापित्रोर्मोहस्तु प्रतिदिनमवर्द्धतैव तस्मिन् सुपुत्रोपरि; येन च ताभ्यां योग्यवयसि समावृत्त एवाग्रहपूर्वकं मुकुंददासस्य लग्नग्रंथिरबध्यत ।

तदनन्तरं तु मुकुंददासस्याकुलता सुतरामवर्धिष्ट; स इदं विचारितवान्—अरे! अहं तु निमग्नोऽस्मिन् संसारे; यदि चेदस्मिन्नेव निमज्ज्येत तदा पुनर्निर्गमनं कदा स्यात्? एकतो मातापित्रोर्मोहः, अन्यतो मुकुंददासीयवैराग्यवृत्तिरौदासीन्यवतीति पक्षद्वयी प्रादुरभूत्। यदा यदा संसारात् पलायितुं तेनायत्यत तदा तदा मातापितृभ्यां पत्न्या च नानाविधान्तराया अक्रियन्त। परं मुकुंददासचित्तं तु संसाराल्लुब्धं सत् प्रत्युत वैराग्यवासनामेवोग्रस्वरूपामापन्नवत्। पर्यंते लोकलज्जां त्यक्तुमेव निश्चितवान् सः। बहु विचार्य च निरीक्षितमपीदं तेन यत्—लोकलज्जा प्रभुभक्तिश्चेति द्वयं परस्परं विरुद्धं सत् पृथक् पृथगेव दिशं गच्छतीति। ततश्च स्वां धारणां सफलीकर्तुं प्रत्यैक्षि योग्यावसरस्तेन।

कियत्कालानंतरं मुकुंददासः स्वकीयामाजीविकां स्वातंत्र्येण निर्वर्तयितुममरावती (अमरेली) नगरात् पंचक्रोशान्तरेऽमरापुरग्रामं गत्वा निवासमकरोत्। इत्येवं स स्वतंत्रां स्थितिं किंचित् प्राप्तवान् परं कस्यचित् सद्गुरोः संशोधनाय तद्धृदयमतीवातुरमजनिष्ट। अन्यतश्च तन्मातापितरौ पत्नी चापि तद्वैराग्यवृत्तिं खंडयितुमनेकान् प्रयत्नाँश्चक्रुरेव। ततस्तु तेन लोकलज्जां त्यक्तुमेव निरणायि। बुद्धिपूर्वकमेव चित्तविभ्रमदशामुरीकृत्योन्मत्तवत् भ्रांतवान् सः। 'राम गटागट महुडी फूली; राम गटागट महुडी फूली' इतीदं वाक्यं मुहुर्मुखेनोच्चार्य ग्राममध्ये दधावे तेन। नैतावदेव परं लोकानां यत् किंचिदपि वस्तु गृहीत्वा यथेष्टमन्यगृहं निनाय सः। कियन्ति दिनानि तु कुतूहलमेवेदमिति विज्ञाय लोका असहिषन्त, परं क्रमशः खिन्ना अभूवन्। मातापित्रोस्तत्पत्न्या अपि तन्निमित्तक्लेशसहनमवृधदेव। ततस्तु सर्वैर्निश्चितमेवेदं यन्मुकुंददासस्य चित्तमभ्राम्यदेव, तत्स्वास्थ्यं नैव संभवतीति। एतन्निश्चयानन्तरं सांसारिकी स्वार्थप्रीतिः शनैर्निवृत्ताऽभूत्। तत्पत्नी च पितरावपि तत्संबंधं त्यक्तुमैहन्त। सांसारिकसंबंधिनामित्येवं मोहन्यूनत्वमवबुध्य मुकुंददासस्तस्यामेव स्थितौ गृहत्यागं कृतवान्, तत्संबंधिनश्च स्वयमेवोपाधिनिवृत्तेः संतोषमभजन्। इत्येवं स्वजीवनयज्ञे दैहिकसंबंधिनां स्वीयसर्वस्वस्य च त्यागरूपां प्रथमाहुतिमहौषीन्मुकुंददासः।

स्वयं मुक्तकोटौ तु प्रथमत एवासीत्, तथा च रतनबाईपवित्रपश्चात्तापस्य मूलदासीयविशुद्धचारित्रस्य च संयुक्तः प्रभावो गर्भवासादेव राधामातृद्वारा स प्रत्यैषीदिति मूलदेव चिरकालाद्विद्यमाना तन्निष्कामधर्मसिद्ध्यभिलाषा पूर्णस्वरूपेणाथो जजागार। ततोऽसौ सद्गुरुप्राप्त्यर्थमेव यत्नं शीघ्रं कृतवान्। ध्रांगध्रापुरनिवासिनो द्वारकादासाभिधविरागिसाधोर्नाम केनचिदुक्तमिति सत्वरमेव तत्रागच्छन्मुकुंददासः। कतिचन मासान् शिष्यत्वांगीकारपुरःसरं तं संसेव्य प्रभूतां तत्प्रीतिमवाप्तवान्। अन्यदा तत्प्रसन्नतामवलोक्य स्वकीयां निष्कामधर्मसंपादनेच्छां तस्मै निवेद्यानुग्रहं कर्तुं प्रार्थितवान्। तदा तं सुपात्रशिष्यं प्रति स्वीयं निष्कपटभावं प्रकटीकृत्य जगाद द्वारिकादासः—भ्रातः! अहमेव तद्विषये नास्मि संपूर्णः। ततस्त्वं गच्छ वांकानेर-

ग्रामे साधुकल्याणदाससमीपम्। तत्र त्वदिच्छा सफलीभूता संपत्स्यते'। तदेतच्छ्रुत्वा मुकुंददासो झटिति निर्गत्य वांकानेरमभिययौ। तत्रापि सुतरां दीनभावेन तं संसेव्य प्रसन्नीकृतवान्; तस्मिन् समये कल्याणदासो निष्कामित्वेनातीव ख्यातिमुपलब्धवाँल्लोकेषु। तच्छिष्या अपि तं महात्मतयोद्घोषयामासुः। तद्वपुः सुंदरं पुष्टं कांतिमच्च बभूव। पित्तलकौपीनं कारयित्वा तत्र तालकं बद्धवान् सः। तदतिरिक्तश्चापि विरागिडंबरः सुतरां तस्य प्राकाशत। तदेतद्बाह्याडंबरेणाशां धृत्वा स्वोपरिप्रसन्नीभूतं कल्याणदासं प्रति निवेदयाञ्चक्रे स्वकीयं निष्कामभावदृढीकरणाभिलाषम्। विरागी कल्याणदासो मुकुंददासीयसेवया सुपात्रत्वेन चातीव प्रससाद। ततश्च रहसि तमाकार्य स्वमनोरहस्यं ज्ञापयामास यत् चत्वारिंशद्वर्षकालात् पूर्वं यदा काशीयात्रां कृत्वा स्वयं प्रतिनिवृत्तस्तदा मध्ये मार्गपृच्छानंतरं कयाचित् स्त्रिया करविलासपूर्वकं मार्गप्रदर्शनमक्रियत। तत्कालीनं तत्स्त्रीकरविलासं स्वयमद्यापि नैव व्यस्मरदिति स्वकीयचित्तवृत्तिस्थितिनिवेदनपूर्वकं प्रकटीचकार तद्विषयिणीमपूर्णताम्। पुनरपि सविशेषं कथयामास यत् मुकुंददास! इदं तु वस्तु योगिधुरंधराणामपि दुर्लभम्। भवता यदिष्यते तत्तु यदि भवेद्भगवतः प्राप्तिर्यदिवा संपद्येत भगवत्कृपां प्राप्तवतां मुक्तपुरुषाणां समागमस्तर्ह्येव लभ्येत; तथापि भवान् गच्छतु सरधारग्रामम्। तत्र श्रूयते तुलसीदासनामैकः पवित्रसाधुः। स कदाचित् करिष्यति सफलां भवतो वांछाम्।

मुकुन्ददासः सत्वरं ययौ सरधारग्रामम्। तुलसीदासं मिलित्वा तत्पावित्र्यं चावलोक्य तत्संनिधाववात्सीत्। तुलसीदासचित्तमपि मुकुंददासरूपेण गुणैश्च मुग्धमभूत्। ततस्तं निवासयामास स्वसमीप एव, प्रददौ च तस्मै स्वाश्रमस्य महंतपदवीम्। अथो तत्समये श्रीमदुद्धवावतारः स्वामी श्रीरामानंदः प्रदेशपर्यटनं कुर्वन्नाजगाम तत्र कतिभिर्दिवसैः। रामानंदस्वामिनां दर्शनमुपदेशश्रवणं च कृत्वा मुकुंददासस्यालौकिकमेव तं प्रत्याकर्षणं समपद्यतः, यतः शुद्धसाधुता प्रभुत्वं च तस्मिन्नेवादृश्यत तदा। तुलसीदासस्तदेतज्ज्ञात्वा मतांतरजन्यद्वेषभावतो मुकुंददासोपरि निवेशयामास निरोधरूपमंकुशम्, तथा तथा मुकुंददासस्य रामानंदस्वामिसमीपनिवासेच्छाऽतीव तीव्रा समभूत्; तेन तत्संबंधिनी प्रार्थनाऽपि रामानंदस्वामिपुरतोऽकार्षीत्; परं रामानंदस्वामिभिरिदमेवोक्तम्—तुलसीदासस्य दुःखं द्वेषश्च प्रोद्भवतीति नागंतव्यं भवता मत्समीपे। भवतोर्गुरुशिष्ययोः क्लेशोपाधिरसमभ्यं न रोचते। रामानंदस्वामिनामेतदाज्ञया मुकुंददासस्यातीव हृदयाघातो बभूव, परं येन प्रारब्धो जीवनयज्ञः स कथं निरुध्येत? रामानंदसद्गुरोरमृतसमा वाणी कथं न श्रूयेत? गृहपश्चाद्भागेऽतिशयसंकटरथ्यायां (नवेळी) समुपविश्य रात्रौ वर्षन्तीं मेघधारां शिरसि प्रतीष्यापि रामानंदस्वाम्युपदेशं शुश्राव सः। एकस्मिन् दिवसे तलारक्षेण चौर इति बुद्धया मुकुंददासो ध्रियते स्म। प्रश्नपारंपर्येण मुकुंददासी-

यसमुत्कटधर्मजिज्ञासा सर्वत्र प्रसिद्धाऽभूत्; तदिदमुपश्रुत्य तुलसीदासोऽतीवादृतवान् द्वेषं रामानंदस्वामिनं प्रति। रामानंदस्वाम्यपि तमेतमुपाधिं दूरीकर्तुं निर्जगाम ग्रामान्तरम्। मुकुंददासस्तु तदेतत् कर्णगोचरीकृत्य सुतरामंतर्व्यथामापन्नवान्। तेन निरीक्षिता तुलसीदासस्य स्वार्थबुद्धिः स्वं प्रति। तन्मुक्तेरुपायं च मार्गयामास सः। तुलसीदासः कृपण आसीदित्येतद् ज्ञातवान् मुकुंददासः। ततस्तेनाश्रमाद्दीयमानं सदाव्रतदानमतिशयौदार्येण दातुमारब्धम्। तदेतत् तुलसीदासाय नारोचत। तेन सूचितमपि मुकुंददासस्य संकोचपूर्वकं सदाव्रतदानं कर्तुम्। तथापि मुकुंददासः परोपकाराय यथापूर्वमेव सदाव्रतदानमकार्पीदित्येतत्सोढुं नैवाशक्नोत् तुलसीदासः। स तं निष्कासयामासाश्रमात्। मुकुंददासस्य तु स्वेष्टापत्तिरेवापद्यत। तेन तुलसीदाससविधे लिखिताऽनुज्ञा लेखयाञ्चके, अमुच्यत चैवम्। ततस्तु निष्पाद्यैवं स्वकीयं हेतुं निर्गत्य च सत्वरं रामानंदममिलन्मुकुंददासः। दंडवत् प्रणम्य स्वामिनं शिष्यीकर्तुं च प्रार्थयामास। परं शिष्यत्वं किं सुखेन लभ्यते? तदीयां पात्रतां परीक्षितुं रामानंदस्वामी आज्ञापयामासैवम्—यदि चेच्छिष्यत्वमिष्यते तर्हि नो भक्तस्य मूलुभाईत्याख्यस्य लाङ्गलाकर्षणं कर्तव्यमिति। संसारविषयकस्तीव्रवैराग्यो यद्यप्यवर्ततैव परं सद्‌गुरुकृपाज्ञानवान् मनुष्यः कथं चाल्येत? मुकुंददासः स्वामिनामाज्ञां शिरसि धृत्वा कृपिकारस्थूलवस्त्राणि सानंदं परिधाय लांगलग्राहं निरगात्। तदा तन्मुखोपरि ग्लानिजन्यश्यामतास्थाने प्रत्युतानंदलहर्यः प्रादुरासन्। रामानंदस्वामिभिः परीक्ष्य सम्यग् विज्ञातं यन्मुकुंददास्य दासत्वं सत्यमेवेति। ततस्तं स्थापयामास स्वसमीपे, वंथीयाग्रामे च वैष्णवीं दीक्षामर्पयित्वा मुक्तानंदेति नाम निर्धारितम्। सद्‌गुरुकृपया मुक्तानंदस्वामी चिरेप्सितां निष्कामसिद्धिं परमसाधुतां चासादितवान्। प्रतिदिनमवर्द्धत तदीयः प्रतापः। नैकान् मुमुक्षून् स कृतवान् निष्कामिनः। तदनन्तरं रामानंदस्वामिनां साधुषु महंतपदवीमवाप्य गुरूपदेशतः कुर्वन् भगवद्भक्तिं रामानंदस्वामिनामेव भाविकथनानुसारेण प्रकटप्रभुसमागमं प्रतीक्षितवान्।

अथ विक्रममहाराजस्य षट्पञ्चाशदधिकाष्टादशशताब्द्याः श्रावणमासस्य कृष्णषष्ठीप्रभातं सौराष्ट्रप्रांतीयलोजग्रामस्याप्रतिमं सुप्रातमभूत्। तदा तत्रालौकिकःसूर्य उदेति स्म, मायिकांधकारनिवृत्तिपूर्वकं तत्र दिव्यं तेजः प्रादुर्भवति स्म। रामानंदस्वामिनां गुरुपदाधस्तात् तत्र पंचाशत् सत्साधवो रामानंदस्वामिनामाज्ञया स्थितिं कुर्वन्ति स्म। तदा श्रीरामानंदस्वामिनो भुजनगरे निवासमकार्पुः। सर्वस्यां साधुमंडल्यां नित्यकर्मणि प्रवृत्तायां सुखानंदनामैकः साधुरष्टादशवर्षदेशीयमेकं ब्रह्मचारिणं नीलकंठाभिधं तपस्विनं सहानीय तत्स्थानं प्रत्यानयामास। ब्रह्मचारिणस्तपस्विवेषमत्याकर्षणीं तेजस्विमूर्तिं चावलोक्य सर्वसाधुमनांस्याकृष्टान्यभवन्। मुक्तानंदस्वामी सादरं समर्प्यासनं निवेशयामास तं समुचित आसने। परस्परं प्राथमिकीं वार्तां

कृत्वा साधूनां सिद्धांतमवगंतुं नीलकंठब्रह्मचारी जीवेश्वरमायाब्रह्मपरब्रह्मसंबंधिनो विविधान् प्रश्नान् करोति स्म। मुक्तानंदस्वामी निरभिमानतया सरलभावेन च तत्स्वरूपाणि कथयांचभूव। ब्रह्मचारिणा संतोषपूर्वकं तदश्रावि; साधूनां साधुतां सम्यग्विज्ञानं च विलोक्य विनयपुरःसरतदाग्रहेण तत्र स्थितिश्चाकारि। प्रतिदिनं ब्रह्मचारिसमागमेन साधवोऽधिकाधिकानंदेन सह ब्रह्मविद्यां समासेदुः। सर्वेषामपि स्वाभाविको गुरुभावो ब्रह्मचारिणं प्रति बध्यते स्म तथापि ब्रह्मचारी स्वयमेव शिष्यभावमनुरुध्यते स्म। मुक्तानंदः स्वामी यद्यपि महंतपदवीमारूढस्तथापि ब्रह्मचारिसंसूचनानि नम्रभावेनांगीकृतवान्। भगवत्कथादिप्रसंगेषु स्त्रीवर्गसभा पृथगेवोपविशेदित्येतां ब्रह्मचारीच्छां स्वीकृत्य परंपराप्राप्तामपि प्रणालिकां बुद्धिपूर्वकमेव संत्यक्तवान्। एतेन रामानंदस्वामिनां केचनानुगामिनश्चिरंतनरूढ्यवलंबनमेव श्रेयस्करमित्यवलंब्य ममत्वभावं पृथगवस्थानं चक्रुः। इत्येतमुपाधिमपि विषह्य मुक्तानंदस्वामी संप्रदायविशुद्ध्यर्थं सत्यमार्गमूरीकृतवान्। इत्येवमनेकरीत्या नीलकंठब्रह्मचारिणमनुसृत्य मुक्तानंदस्वामी स्वकीयमहंतपदवीमानस्य ममतायाश्च परित्यागरूपामतिदुष्करामाहुतिं हुतवान् जीवनयज्ञे। किंच तयोरुभयोर्मध्य ईदृशो गाढस्नेहोऽबध्यत येन ताभ्यां संकल्पोऽपि कृतोऽभूद् यद् रामानंदस्वामी चेदनुज्ञां दास्यति तर्हि आवाभ्यामुभाभ्यामपि वने गत्वोग्रं तपश्चरणं कर्तव्यमिति। स्वल्पसमयेनैव रामानंदस्वामिभिः सह ब्रह्मचारिनीलकंठस्य समागमोऽभूत्। तत्समयत एव रामानंदस्वामिभिः शिष्यवर्गः संसूचितः—यं वयं प्रतीक्षामहे सोऽयमागत एव। ततः श्रीस्वामिभिरेकस्मिन्नेव वर्षे ब्रह्मचारिणं दीक्षयित्वा सहजानंदेति नाम निर्धारितम्। स्वकीयमाचार्यपदमपि तस्मै प्रदत्तम्। मुक्तानन्दसदृशं सर्वसाधुगुणसंपन्नं चिरंतनं प्रौढवयस्कं महंतीभूतमपि शिष्यं परित्यज्य नवीनमल्पवयस्कं शिष्यं श्रीसहजानन्दस्वामिनमाचार्यपदे स्थापितवान्। तदेतत् बहुशिष्येभ्यो नारोचत। मुक्तानन्दसमकालीनाः केचनाचार्यपदमपेक्षमाणा ईर्ष्यामत्सरासूयाभिराक्रान्ताः। तादृग्विधानामग्रणी रघुनाथदासो द्वेषभावतः कतिचन साधून् नीत्वा पृथग्गमनमपि कृतवान्। सत्यप्येवं रामानन्दस्वामिनामाचार्यस्थानार्हः श्रीमुक्तानन्दस्वामी तु सहजानन्दस्वामिनां योग्यतामाकलय्य प्रसन्नीबभूव। सहजानन्दपात्रता स्वस्मादधिकेति योग्यविचारं सत्यभावमनुसृत्य नैव तत्याज। इत्येवमीर्ष्यामत्सरासूयादोषाणां महाहुतिं मुक्तानन्दस्वामी प्रदत्तवान् स्वजीवनयज्ञे।

आचार्यपदारोहानन्तरं सहजानन्दस्वामिनां प्रतापः समाधिप्रभृतिद्वाराऽविच्छिन्नं वर्धते स्म। येन च चिरंतना नवीनाश्चानेके शिष्यास्तं प्रभुमवधार्य तदीयं भजनं स्मरणं च कर्तुं समासजन्। देशान्तरे भ्राम्यन् मुक्तानन्दस्वामी यदेमां वार्तामशृणोत् तदा तच्चित्तमपि भ्रान्तमभूत्। नैकविधाः शंकास्तच्चित्तमदूयन्त। विना हेतुं स्वकीयमहत्त्वं वर्धयतीति तेन ज्ञातम्।

प्रत्यक्षं गत्वा स मयोपालंभनीयः, इत्येवं निर्धार्य प्रतिग्रामं पर्यटन् यत्राभूत् सहजानन्दस्वामी तस्मिन् ग्रामे समाजगाम मुक्तानन्दस्वामी। समाधिसंबंधे स्वकीयामश्रद्धां निवेदयामास, तत्समर्थने च भारपूर्वकमिदं बभाषे यत् समाधिरूपं वस्तु महतां योगिनामपि दुर्लभम्। तदिदं यस्य कस्यापि संभवेदितीयं मिथ्या वार्ता नैव कर्तुं योग्येति। मुक्तानन्दस्वामी यस्यां सभायां निषण्णः सन्निमां वार्तामकृत तस्यामेव सभायामुपविष्टस्य कस्यचित् साधोः श्रीसहजानन्दसमीहया सत्वरं समाधिः समपद्यत। सहजानन्दस्वामी तु किंचिदपि प्रत्युत्तरान्तरमकृत्वा सविनयमिदं निवेदयामास मुक्तानन्दस्वामिनां पुरतः—स्वामिन्! अस्यैव साधोः समाधिरभूत्; तदस्य नाडीप्राणान् निरीक्षतु भवान्। मुक्तानन्दस्वामी तु स्तब्धीभूय तन्नाडीप्राणान् निरैक्षिष्ट समाधिलक्षणान्यपि जानाति स्म। अल्पसमयानन्तरमेव स साधुर्जाग्रदवस्थां प्राप्तः सन् समाधिस्थितेर्वर्णनमपि करोति स्म। अवदच्च यथा—श्रीसहजानंदसेवायां रामानंदस्वामी मया दृष्टः। तेन च संदिष्टमपीदम्—श्री सहजानंदः स्वयं भगवानेव। मुक्तानंदस्वामी च वाच्य एवं यत् कथमत्र शंकसे?। एतदद्भुतघटनाया अस्वीकारः कथं क्रियेत? तत्सहयोगे च प्रभुरेवायमित्यपि कथं मन्येत? इत्यस्यां स्थितौ मुक्तानंदोऽतीव मोहं प्राप्तः। मोहावेशवैवश्येन खिन्न औदासीन्यमावहन् सर्वैःसह स्नानार्थमगच्छत्। शौचक्रियायै पलाशवृक्षघटामध्ये विचारमग्न एव प्रतिग्रमानो मुक्तानंदस्वामी सहसैव तेजसो महासमूहं दृष्टवान्, तत्रैकां मनोहरमूर्तिं च ददर्श। सावधानं निरीक्षमाणः स्वकीयं सद्गुरुं रामानंदस्वामिनमेव विलोकयामास। झटिति सहर्षं धावन् तच्चरणयोराललोठ। कंठश्चापि प्रेमगद्गदः समपद्यत। रामानंदस्वामी कथयामास—मुक्तानंद! मया कथितपूर्वमेवेदं यत् किल वयं डमरुवादका एव केवलम्। नाटकसूत्रधारस्तु पश्चादेवागमिष्यतीति। तदिदं विस्मृतं किम्?। अधुना तु स आगत एव वर्तते। भवतः संशयः कथं न निवर्तते? श्री सहजानंदस्वामी स्वयं भगवानेव। अहं तु तस्य सेवकः। तस्मात् तं दृढमाश्रय। सर्वसंशयं परित्यज। इतीदं कथयित्वा रामानंदस्वामी बभूवादृश्यः।

मुक्तानंदस्वामिनामन्तःकरणमथ सुतरां निःसंदिग्धमभवत्। तटभंगे निरुद्धं पय इव तत्संशयच्छेदे मुक्तानंदस्वामिनां प्रेम श्रीसहजानंदं प्रति ववृधेतमाम्। महिमपूर्वकमुत्पेदे स्वतीव पूज्यबुद्धिः। स्वयमेवारण्ये भ्रांत्वा पुष्पोच्चयं च कृत्वा ग्रथितवान् स पुष्पाणां हारम्। सहर्षं प्रसन्नवदनपुरःसरं च प्रतिन्यवर्तत। स्नानस्थले समागत्यातिशयेनादरतो लुलोठ श्रीसहजानंदप्रभोश्चरणारविंदयोः। स्वग्रथितहारं च परिधाप्य सदैन्यं ययाचे स्वापराधक्षमाम्। भगवान् श्रीसहजानंदोऽपि सप्रेम सादरं च सांत्वयामास। इत्येवं निश्चयतो महाविघ्नीभूतसंशयस्याहुतिमर्पयित्वा मुक्तानंदस्वामी जीवनयज्ञस्य भव्यतां वर्धयित्वा सहजानंदस्वामिनामनन्यं शिष्यभावमासेदिवान्।

तदनन्तरं तु तेन ज्ञानवार्तायां श्रीसहजानंदप्रभोरपारमहिमनि च स्वकीया प्रवृत्तिर्वेग-पूर्वकमवर्ध्यंत। हिमालयान्निर्गते गंगाप्रवाह इव तदीयामृतसमानवाणीप्रवाहे सर्वेऽपि स्नानमकार्षुः। भगवान् श्रीसहजानंदोऽपि स्वशिष्यवर्गमाज्ञापयति स्म यत् प्रतिवर्षमेकमासमपि मुक्तानंदस्वामिसमागमोऽवश्यमेव कर्तव्यः। प्रभुप्रतापेन मुक्तानंदवचनबलाल्लोकानां समाधिरपि भवति स्म। वयोज्ञानसाधुतादिभिः सर्वश्रेष्ठं रामानंदस्वामिनां पुरातनशिष्यं च मुक्तानंदस्वामिनं भगवान् श्रीस्वामिनारायणोऽपि सर्वसाधूनामग्रेसरं स्थापयामास। नैतावदेव परं सत्संगस्यौत्कृष्ट्याय मुक्तानंदस्वामिन एतावानाग्रहः समभूत्, एतादृशश्च स्नेह आसीत् तस्य सर्वसत्संगिषु येन भगवान् स्वयमेव सत्संगमातेति तमकथयत्। भगवत्प्रदत्तकठिननियमानां पालनायाशक्तान् स्वयमेव तद्द्वारमुद्धृत्य प्रोत्साहयामास मुक्तानंदस्वामी; तेन च भगवानपि सुतरां प्रससाद; यतस्तस्य दयालुस्वभावः श्रेयस्करोऽभिप्रायश्च भगवतोऽतीव प्रीतिजनक आसीत्।

एकदा मुक्तानन्दस्वामी पंचाशत्साधूनां मंडलं सहादाय जगाम मरुमंडलम्। आत्मानन्दस्वामी अपि सहैवाभूत्। तस्मिन् समये भगवता सर्वपरमहंसेभ्यः षड्रसभोजनस्य नियमो दत्तः (अर्थात् मधुरं वा घृतादियुतं नैव भोक्तव्यम्; अन्यरसभोजनमपि यत् प्राप्यते तदपि एकत्रीकृत्य जलमिश्रं च कृत्वा मिश्रगोलकाकारमापाद्यैव भोक्तव्यमिति) संप्रदायस्यारंभ एवासीदिति प्रतिस्थलं सत्कारस्थाने प्रायोऽनादर एव साधूनामभवत्। एतादृक्समये भिक्षाया अपि दौर्लभ्यमभूत्। तत्रापि मरुमंडलमिति मुक्तानन्दस्वामिनः साधुमंडलसहितस्य भिक्षाप्राप्तेरभावेनोपवासत्रिकं जायते स्म, तथापि सर्वे साधवः शांतिपूर्वकं भगवद्भजनं कुर्वन्ति स्म। चतुर्थदिवसे यत्र साधुभिर्निवासः कृतस्तत्रैको ब्राह्मण आगतवान्। तेन साधूनां वर्तनं ध्यानपरायणतां च दृष्ट्वा कतिचन प्रश्ना अपि अपृच्छ्यन्त। मुक्तानन्दस्वामिभिर्भगवत्संबंधिनी कियद्वार्ता क्रियते स्म, येन ब्राह्मणस्य साधूनां सुपात्रत्वमिति श्रद्धाऽभूत्। ततः स भोजनाय यदा प्रार्थयामास तदा मुक्तानन्दस्वामिभिरुक्तम्—भोजनाय तु वयमागमिष्यामः, परमस्माकं गुरुभिः षड्रसभोजनस्य नियमः प्रदत्त इति चेत् पच्यते क्षिप्रैव तर्हि वयमागंतुं शक्नुमः। तत्रापि क्षिप्रायां घृतमपि चेन्न निक्षिप्येत तदैवास्माभिरागन्तुं शक्येतेति। ब्राह्मणस्तु तादृक्साधुतामाकलय्य साश्चर्यं तत्स्वीकृत्य भोजनाय निमंत्रितवान्। गृहं गत्वा तेन क्षिप्रा कार्यते स्म। साधवोऽपि भोजनायागमन्। ब्राह्मणेनैकस्मिन् पात्रे विष्णुनैवेद्याय क्षिप्रां निष्कास्य तत्र किंचिद् घृतमपि क्षिप्तम्। तदनन्तरं विष्णवे निवेद्य सा प्रसादरूपा क्षिप्रा सर्वक्षिप्रायां निक्षिप्यते स्म। साधूनां पंक्तिर्निषसाद। तदा वचनस्य मूर्तिरिति ख्यात आत्मानन्दस्वामी भगवतो वचनैक्यमपि नोल्लंघ्यमिति तीक्ष्णप्रतिज्ञापालको ब्राह्मणं पृष्टवान्—क्षिप्रायां घृतमपि क्षिप्तं तु नास्ति? ब्राह्मणेनोक्तम्—स्वामिन्! क्षिप्रायां भवन्निमित्तं तु नैव किंचिदपि घृतमक्षेपि; केवलं देवप्रसादीभूता क्षिप्रैव किंचिद् घृतमिश्राऽत्र निक्षिप्ता। तदेतच्छ्रुत्वैवात्मानन्दस्वामी उत्थितवान्, बभाषे च—इयं

क्षिप्रा मह्यं तु नैव कल्प्स्यते; अत एवाहं नैव भोक्ष्ये। ब्राह्मणस्तु निशम्य तत् खिन्नोऽभूत्। मुक्तानन्दस्वामी विचारितवान्—एतादृशेऽस्मिन् समये आत्मानन्दस्वामिनोऽयं विरोधो न गरीयान्। यद्यप्याज्ञापालनरीत्या तु विरोधोऽयं युज्यत एव। क्षिप्रायां घृतस्य किंचिदंशस्तु मिलित एवेति नियमवता तु नैव भोक्तुं युज्यते ( परं देशे काले च विचार्यमाणे भोजयितृब्राह्मणोपरि भोक्तृसाधूनां चोपरि) मुक्तानंदस्वामी दयार्द्रोऽभूत्। तेन व्यचार्यत—सर्वेऽपि साधवो नियमधारिणः सन्ति। यदि चेदहमुत्थास्यामि तर्हीमे सर्वसाधवोऽप्युत्थास्यन्त्येवेति सर्वेषां चतुर्थ उपवासो भविष्यतीति। अन्यच्च श्रद्धालोर्ब्राह्मणस्य पाकोऽपि व्यर्थोभविष्यति; नैतावदेव परमेतादृक्साधूनां निर्गुणत्वं चेत्तस्य हृदये समागमिष्यति तर्हि नैव भावि तज्जीवस्य कल्याणम्; अपि च घृतमपि साधुनिमित्तं तु नैवाक्षेपि; केवलं देवनैवेद्याहितमेव तत् प्रसादनिमित्तेन सर्वभोजने मिलितमस्ति। तस्माद् यद् भावि तद् भवतु, परमस्मिन् काले तु पंक्तेरुत्थानं नैव युक्तम्। नियमभंगजन्यपातकं चेत् प्राप्स्यते तर्हि भगवत्समक्षं क्षमायाचनपूर्वकं प्रायश्चित्तमादास्ये; परमस्य ब्राह्मणस्य साधूनां च द्रोहोऽनिष्ट एवेति विचार्य मुक्तानंदस्वामी बोधयामास स्वामिनमात्मानन्दम्; परं स तु सैनिकवत् केवलमाज्ञापालकत्वमेव धारयामासेति भोक्तुं नैव निषण्णवान्। तदा तत्परित्यागं कृत्वाऽपि मुक्तानन्दस्वामी साधून् प्रति बभाषे—संतः! यथेष्टं कुरुत भोजनम्। अहमपि भवद्भिः सहैव भोजनं करोमि। इत्येवमाज्ञया सर्वेऽपि संतो भोजनमकार्षुः। ब्राह्मणोऽपि प्रससाद।

ततश्च यदा सर्वं तत् साधुमंडलं सहादाय मुक्तानंदस्वामी प्रतिनिवृत्त्य भगवत्समीपमागतवान् तदा स्वकृताज्ञालोपनिमित्तं क्षमां याचितवान् नम्रभावेन; प्रशशंस चात्मानंदस्वामिनां नियमपालनमहत्त्वम्; परं श्रीभगवाँस्तु मुक्तानंदस्वामिनामेव प्रशंसां कृत्वाऽऽत्मानंदस्वामिनमुपालब्धवान्; कथितवाँश्चैतत्—अयं मुक्तानंदस्वामी मम साधूनां सत्संगिनां च सूक्ष्मदृष्ट्या रक्षणं करोतीति 'सत्संगमाता' वर्तते; तत्कृतेन चाहमतीव प्रसीदामि। इत्येवंरीत्या मुक्तानंदस्वामी सत्संगरक्षणं सावधानतया करोति स्म। भगवदाज्ञामनुसृत्य वरतालादिबहुस्थलेषु सत्संगप्रवृत्तिरकार्यत तेन। तदीयमधुरोपदेशप्रभावतो नैके जना भगवदाश्रिताः सत्संगिनश्चाभवन्निति संप्रदायोऽपि वितस्तार।

एकदा केचनेर्ष्यालवो जना वडोदरामहाराजश्रीमत्सयाजीरावसमीपं गत्वा स्वामिनारायणीयोद्भवसंप्रदायमुत्पाटयितुं योजनामरीरचन्। तत्र च निर्णयमिममकारयन् यद् वेदांताचार्यान् शास्त्रिश्रेष्ठाँश्चानाय्य तैः सह शास्त्रार्थं कृत्वा स्वामिनारायणीयाः स्वकीयं संप्रदायं शास्त्रसंमतं निर्णयन्तु, अन्यथा ते वडोदराराज्ये प्रवेशं नैव लप्स्यन्त इति। एतन्निर्णयप्रकाशिकाऽऽमंत्रणपत्रिका भगवच्छ्रीस्वामिनारायणोपरि समागताऽभूत्। तेन च भगवता तत्र

सभायां गन्तुं मुक्तानंदस्वामी यदाऽऽदिष्टस्तदा व्यज्ञपि तेन यद् भगवन् ! विद्वद्भिः सह स्पर्द्धायां संस्कृतविद्याया अपेक्षाऽवश्यमेव भवति, तां त्वहं नैव सम्यग् जानामि'। प्रभुरुक्तवान् यथेष्टं गच्छतु भवान्। अहमेव भवति स्थित्वा वदिष्यामीत्याज्ञायाः श्रद्धायाश्च बलेन मुक्तानंदस्वामी वडोदरामहाराजसभायां योग्यसमये संप्राप्तः। राज्यलक्ष्मीविपुलाडंबरमध्ये धुरंधराणामपि संसारप्रपंचाक्रान्तानां पंडितानां महासभायां परमसाधुतायाः प्रत्यक्षमूर्तिः श्रीमुक्तानंदस्वामी विलक्षण एवादीप्यत। जगतः कर्बुरवर्णपतत्रिणां मध्ये मानससरसो राजहंस इव व्यराजत स्वामी। रागद्वेषप्रेरितैर्विद्वद्भिरनेके क्लिष्टप्रश्नाः पृष्टव्या इति प्रथमत एव निर्धारितमासीत्, परंतु परमभागवतधर्मस्य प्रतिनिधेरिव श्रीमुक्तानंदस्वामिनोऽलौकिकप्रभावाक्रान्तमनस्कानां तेषां संकल्पाः शैथिल्यमावहन्; येन च प्रश्नपृच्छायाः समये समागते 'त्वं पृच्छ, त्वं पृच्छे'ति परस्परं प्रवदद्भिस्तैः केचन सामान्या एव प्रश्नाः क्रियन्ते स्म, येषां प्रत्युत्तराणि मुक्तानंदस्वामिना भगवतः श्रीस्वामिनारायणस्य स्मरणं कृत्वा प्रादीयन्त। तान्युत्तराणीयन्ति स्पष्टानि सरलानि यथार्हमधुरवाणीप्रथितानि चाभवन् येन विदुषां मुखानि मुद्रितान्येव जातानीति सभायामुदघोष्यत स्वामिनारायणीयविजयनिनादः।

भगवता श्रीस्वामिनारायणेन मुक्तानंदस्वामिनामेतदाज्ञापितमासीद् यद्—भवता यावज्जीवं सांप्रदायिकग्रंथलेखनमेव कार्यम्। एतदाज्ञा राजयक्ष्मसदृग्भयंकररोगग्रस्तेनापि मृत्युदशापर्यंतमेव पालयांबभूवे तेनातिदृढतया। मुक्तानंदस्वामिभिः संस्कृतभाषायां सप्त ग्रंथाः प्राकृतभाषायां च त्रयोविंशतिग्रथा अग्रथ्यंत (येषां गणना पुरस्तादेव दर्शयिष्यते)। तेषां वाचि लेखनशैल्यां चाद्भुततमं माधुर्यं च सारल्यं वर्तते स्म। येन च निष्कामभावेन स्वकीयं सर्वस्वमपि भगवत्समर्पणीकृतं तस्य भक्तिभाववर्णनं तु किं क्रियेत? तद्ग्रंथेषु प्रतिशब्दं स प्रकाशते।

मुक्तानंदस्वामिनां कविता यादृशी सरला तादृश्येव मर्मस्पृगपि वर्तते। स्त्रीवर्गसाहित्ये तस्या अनर्घो विभागः। लग्नप्रसंगे परस्परमाक्रोशकारीणि बीभत्सगीतानि यदाऽश्रूयंत भगवता तदा सत्वरमेव गीतविषयं लक्ष्यीकृत्य सांप्रदायिककवय आज्ञापिता यद्—अस्माकं हरिभक्तेषु यानि गीतान्यधुना गीयंते तानि बीभत्सान्यश्राव्याणि च सन्तीति तेषां स्थाने सुमधुराणि सुंदराणि गीतानि यथा गीयेरन् तथा तानि रच्यन्ताम्, क्रियतां च प्रचारः। एतद्भगवदाज्ञानुसारेण बहुभिः कविभिर्लग्नगीतेषु लग्नविषयकरसिकतां सौंदर्यं च सुरक्षितं कृत्वा भगवदवतारकथानामाध्यात्मिकविषयाणां च समावेशनपूर्वकं सुललितगीतानि विरच्य प्रचारणमकारि; यत्र श्रीमुक्तानंदस्वामिकृतो रुक्मिणीविवाहः सुप्रसिद्धः। स विवाहो यदा गीयते तदा प्रत्यक्षमनुभूयत इव रुक्मिणीविवाहः। तत्संबंधिभावपूर्णपंक्तयः सर्वसमाजे सार्वत्रिक्यः खलु समपद्यन्त यथा—

"दूर घणी द्वारामति रह्यो लग्न वचे दिन एक।
अंतर्जामी आवजो राखजो मारी टेक ॥
जो नहि आवो जदुपति तो तजीश मारा प्राण।
एवामां द्विज आवीयो जेम आवे रामनुं बाण ॥
माधवपुरनो मांडवो आवे जादवकुलनी जान।
परणे राणी रुक्मणी वर वांछित श्रीभगवान" ॥

स्नेहस्य सरित इव श्रीउद्धवगीताया एव वाचनेन मुक्तानंदस्वामिनः कवितासामर्थ्यं ज्ञातुं शक्यते। एतत्प्रकारकं साहित्यं तेन संप्रदाये सुबहु समर्पितं विद्यते। मुक्तानंदस्वामिभिः श्रीमत्स्वामिनारायणीयचरितानि दृग्विषयीकृत्य परमदासत्वभावेन यान्यगीयन्त तदास्वाद-महानंदस्तु तद्भोगिनामेव सुविदितः।

मुक्तानंदस्वामिनां पूर्वाश्रमभगिनी धनबाईनाम्नी तदुपरि पूर्वाश्रमत एव निरतिशयं प्रेम धारयति स्म। भ्रातृभगिनीस्नेहो यद्यपि स्वाभाविकः परमियं भगिनी तु भ्रातुरुपरि सुतरां लोकातिशायि प्रेमाविरकरोत्। भ्रातृदर्शनं विना व्याकुलतामभजत् सा। यदा भ्राता संसार-त्यागं कृतवान् तदा पक्षविहीना पक्षिणीव भ्रातृविहीना साऽतीव खेदमवाप्नुवाना संसारमार्गेऽवर्तत। तया मुक्तानंदस्वामिनं पुनः संसारिणं कर्तुं बहुशः प्रयत्नाः कृता आसन् परं मुक्तानंदस्वामिनां वैराग्यं साधारणं नाभूत्। तत एव नैव त्यक्तवान् त्यागिमार्गं सः। यदि तत्स्थाने मुक्तानंदस्वामिसदृक्प्रबलवैराग्यवती व्यक्तिश्चेन्नाभविष्यत् तर्हि तु निःसंशयमेव भगिनीप्रेमपूराकर्षणेन संसारप्रवाहेऽपतिष्यदेव। धनबाई स्वभ्रातृसमा-कर्षणयत्नेषु कृतेष्वपि यदा नैष्फल्यमापेदे तदा भ्रातृस्वीकृतमार्गमेवांगीकृतवती सा। आत्मनः कल्याणमार्गो भ्रात्रा स्वीकृत इति मयाऽपि स एवांगीकर्तव्य इति निश्चित्य समाजग्मुषी सा भगवत्स्वामिनारायणसमीपे, निवेदितवती चेदम्--'भगवन्! अहमपि कल्याणाभिलाषिणीति भगवान् मुक्तानंदस्वामिनमाज्ञापयतु मह्यमुपदेशदानं कर्तुम्। तदुपदिष्टमार्गमहमाश्रयिष्ये, तदुक्तं चापि स्वीकरिष्ये। तन्मुखवाणीश्रवणे मम तीव्रा समीहा'। भगवताऽभाणि—'अस्माकं साधवः स्त्रीभिः सह नैव संबद्ध्यन्ते तथापि भवत्या इमां कल्याणसमीहां ज्ञात्वा वयमाज्ञापयामः—यत्र सभायां मुक्तानंदस्वामी उपदेशं कुर्यात् तत्र भवती जवनिकाऽन्तर्हिता शृणोतु तदुपदेशम्। मुक्तानंदस्वामिनमपि आज्ञां करिष्यामो वयं येन स भवत्या उपदेशप्रापणीं वार्तां करिष्यतीति।

मुक्तानंदस्वामिनेदं ज्ञातं तदा भगवान् व्यज्ञपि यथा भगवन्! इत्येवं साधुनियमपालनं मम न भविष्यतीति स्त्रियमुद्दिश्य मया कथं क्रियेतोपदेशः। तस्माद्यदि भगवान् करोति कृपां तर्हि

स्वीकरोतु ममेमां प्रार्थनाम् । अहमुपदेशपदानि स्त्रीणामुपयोगीनि विरच्य भगवन्तमर्पयामि । तान्यर्पयतु भगवान् तस्यै । तत्पदेषु तदनुकूलं सर्वमपि समाविक्ष्यते। एतत्प्रार्थनायामूरीकृतायां भगवता मुक्तानंदस्वामी विरचितवानिमानि पदानि श्रेष्ठतया प्रसिद्धानि—

"मोहनने गमवाने इच्छो माननि,
त्यागो सर्वे जूठी मननी टेक जो;
पतिव्रतानो धर्म अचल करी पालजो,
रहेजो हरिचरणे अवला थइ छेक जो;
सांभळ बेनी हरि रीझ्यानी रीतडी,
मोहनवरने मान संघाथे वेर जो;
साधन सर्वे मान बगाडे पलविषे,
जेम भळीयुं पय साकरमां अहिझेर जो."

इत्येवंविधानि बहूनि काव्यानि रचितवान् स्वामी ।

एकदा ब्रह्मानंदस्वामिमुक्तानंदस्वामिनावुपदेशदानाय विचरन्तावाजग्मतुरेकस्मिन् ग्रामे । तत्र सत्संगस्यातिशयद्वेषभागेकः साधुर्ज्ञातवानिदम् । तेन कपटं मनसिकृत्य स्वामिनावाहूतौ स्वनिवासस्थले । स्वामिनावपि सरलस्वभावौ प्रेमातिरिक्तमजानानौ तत्रागच्छताम् । शाठ्यभाक् स साधुः सन्मानपूर्वकमेकस्मिन्नपवरके निवेशयामास तावासनोपरि । तदनंतरं तेन दुष्टेन तदपवरकद्वारमपिधाय द्वावप्यन्तर्निरुद्धौ, कथितौ चेदं यत्—युवां द्वावपि स्वामिनारायणसंप्रदाय-महत्तरांविति द्वयोरपि युवयोर्नासाकर्णं छेत्स्यते मयाद्य । इत्येवं कथयित्वा स्वाश्रमद्वाराणि पिधाय शस्त्रघर्षणं कर्तुं निषण्णवान् सः ।

अपवरकनिरुद्धो ब्रह्मानंदस्वामी हास्यपूर्वकमुवाच मुक्तानंदस्वामिनम्—'स्वामिन् ! साधुना तु दौष्ट्यं कृतम्; नासाकर्णच्छेदनं तु नैव भयजनकम्, परमीदृग्दंडस्तु निंद्यकर्मणामेव जगति युज्यते । अस्माकं नासाकर्णच्छेदं विलोक्य जनाः संप्रदायस्य निंदां करिष्यतीति दुःसहम् । मुक्तानंदस्वामी खेदरहित एव प्रतिजगाद—कर्ता हर्ता च भगवानेव । भगवत्कृतमनुमंतव्यमेव । किंच जन्मांतरेषु जीवेनानेन दुष्टपरिणामेन सुबहुशो नासाकर्णच्छेदानुभवः कृतो भविष्यतीति जन्मन्यस्मिन्नपि भगवन्निमित्तं तदनुभवनं युज्यत एव । लोका यथारुचि जल्पन्तु नाम । तत्र कथमस्माभिः खेदः कार्यः ? ।

अथ तस्मिन्नेव समये तद्ग्रामीणो जतजातीयो राघवजीनामा दृढो बलिष्ठश्च पुरुषस्तत्सा-धुस्थानसमीपतः कार्यप्रसंगेन निरगच्छत् । तेन 'जयतः सीतारामौ' इति कथनपूर्वकं स साधुः पृष्टः—'भगवन्' किं क्रियते ? साधुस्तु साभिमानं प्रत्यभाणीत्—स्वामिनारायणीयौ

महत्तमौ मुंडकौ हस्तगोचरमागताविति तयोर्नासाकर्णच्छेदार्थं शस्त्रघर्षणं करोमि। तच्छ्रुत्वा जतराघवजी जगाद्–आश्रमद्वारमुद्घाटयत; द्रष्टुमीहे तावहमपि। साधुनोक्तम्–एतस्मिन् समये द्वारं नैवोद्घाटयिष्यते। गच्छत यूयं स्वकीयमार्गम्। स जतपुरुष उग्र आसीत्। तेन तु तत्साधुवचनं श्रुत्वा सक्रोधं तदाश्रमभित्तिरुदलंघ्यत, प्रविश्य चान्तस्तत्साधोर्ग्रीवां च गृहीत्वा तेन घृष्यमाणं शस्त्रमाच्छिद्यत, अपवरकद्वारं चोद्घाट्य द्वावपि स्वामिनौ बहिरानयत्। तदा मुक्तानंदस्वामिना जगदे–पश्यत, भगवान् समायातः साहाय्यार्थम्। अन्यतश्च स दुष्टसाधुः कोलाहलपूर्वकमौद्धत्यमकरोत्, परं जतपुरुपेण स्पष्टमेवोच्यत–रे! अलमलमतिदौष्ट्येन; अहमस्मि जतजातीय इति विदितं ते; जहिहि दुष्टतामन्यथा तत्फलमधुनैव समापतिष्यति। मत्समक्षमेतादृक्साधुपुरुषयोर्नासाकर्णच्छेदः कर्तुमशक्य एव। इत्येवं कथयित्वा स जतपुरुषो मुक्तानंदब्रह्मानंदस्वामिनौ ग्रामसीमापर्यंतं रक्षणायान्वगच्छत्।

मुक्तानंदस्वामिनां सत्पौरुषं साधुतां च ज्ञातुमयमेक एव प्रसंगः पूर्तिकरः। स्वयं वार्द्धक्यभाक् क्षयरोगग्रस्तशरीरश्चाभवदित्यशक्तावस्थायां क्षिप्रामेव प्रतिदिनं भुक्तवान्। तत्सेवायामेकः साधुर्नियुक्त आसीत्। स्नानादिकां क्षिप्रापाकादिकां च सेवाक्रियामकरोत् सः, परं स सेवकसाधुर्नूतन आसीत्, सेवामहिमानमपि नाज्ञासीत्। तत्स्वभावश्चापि सर्वविषये दुर्लक्ष्यभागजनि। तेन च स्वामिसेवायामपि लक्ष्यराहित्येन तद्वर्तनं नैवासीत् सम्यक्। तदीदृक्स्वभावेन स्वामिनां प्रतिक्षणं क्लेशसहनमासीत्। यद्यपि स्वामिनं प्रति सर्वपरमहंसानां हरिभक्तानां च परमगुरुभावोऽवर्ततेति सर्वेऽपि स्वाम्याज्ञापालनाय तत्परा एवासन् तथापि स्वामिनस्तु कस्मिँश्चिदपि समये तं सेवकं प्रति नैव प्रादर्शयत् स्वकीयामरुचिमसंतोषं वा। तर्हि उपालंभस्य तु का कथा। सत्यप्येवं तस्य साधोः प्रकृतिस्तु प्रतिदिनमधिकाधिकं दुर्लक्ष्यवत्यजनि। स्वामिनः स्वभावस्तु सुतरां दयालुरासीत्। अमन्यंतैवं ते–सत्संगेऽस्मिन् ये समागच्छन्ति तेषां तु भाग्यातिशयः। सत्संगमाश्रितस्य प्रकृतिदुष्टस्यापि संपत्स्यते श्रेयः। सत्संगाश्रितः कथंचनापि तद्भ्रष्टो न भवेत् तर्हि वरम्। इत्येवंविधविचारेण सर्वसाधुषु समग्रहरिभक्तेषु च नित्यममृतसमाना प्रेमदृष्टिरेवास्त स्वामिनाम्। केषांचिदपि प्रकृतिदोषान् नैव ते निरीक्षंते स्म। यथाशक्ति सर्वेषां सुधारणायैवायतन्त। स्वसेवकस्य दुष्टप्रकृतिं दृष्ट्वा स्वामी दयार्द्रः सन् विचारितवान् यत् साधुरयं निरक्षरोऽस्तीति चेत् किंचिदध्ययनं करोति तर्हि तद्बुद्धिः किंचिज्ज्ञानवती स्यात्; तथा च सति शोभनप्रकृतित्वभावेन तस्य कल्याणमपि भविष्यतीति निर्धार्य स्वामी नित्यानंदस्वामिनमुक्तवान्–भवद्भिरयं साधुः किंचित् पाठनीय इति। नित्यानंदस्वामिनाऽपि तामाज्ञां सादरं स्वीकृत्य नित्यं त्वया पठनायागंतव्यमिति स साधुरुक्तः। तदनंतरं तस्य साधोरप्यध्ययनमितरविद्यार्थिभिः सममारब्धमभूत्। साधोश्चित्तम-

भ्यासे विलग्नं सत् स्वामिनः सेवायां तु प्रत्युत प्रमत्तमभूत्। तत्सेवायां तेन यथा तथा कर्तुमारब्धम्। नैतावदेव परं स्वामिनोऽर्थे क्षिप्रापचनमपि क्षिप्रानिरीक्षणमकृत्वैव कृतवान् सः। अशक्तोऽपि स्वामी स्वयमेव स्वहस्तेन गृहीत्वा भोजनं करोति स्म। परंतु क्षिप्रा तु कर्कर-प्रायैव समपद्यतेति स्वामी भोक्तुमपि नैव प्राभवत्। यत् किंचिदेव भुक्त्वा प्रत्यहमुत्तिष्ठति स्म। प्रतिदिनमेवं जायमानेऽपि स्वामिनां मुखोपरि मनागप्यसंतोपचिन्हं नैव दृश्यते स्म। प्रत्युत तत्साधोर्हितचिंतनमेव स्वयं करोति। एकदा स्वामी स्वयमेव क्षिप्रां गृहीत्वा भोजनं कर्तुं प्रवृत्तस्तदा नित्यानंदस्वामी दर्शनं कर्तुमागतवान्। प्रणामपूर्वकं स्वामिनं च पृष्टवान् स्वामिन्! स्वयमेव किं क्षिप्रापाकः क्रियते? स्वामी प्रत्युक्तवान्—नहि नहि; यः साधुस्तत्र पठनायागच्छति स एव क्षिप्रापाकं करोति; केवलमहं तु स्वयं गृहीत्वा भोजनं करोमि। नित्यानंदस्वामिनोक्तम्—इयं तु क्षिप्रा भवद्भिरेवापाचीति भवतां प्रसादरूपा समभूत्; अतः किंचित् प्रसादत्वेन दीयताम्; अधुना भवद्भिः प्रसादो न कदाप्यदीयत। स्वामी प्रत्युवाच—नायं प्रसादो भवदर्हः, कदाचित् प्रसादान्तरमेव दास्यते भवते। नित्यानंदस्वामी कथितवान्, नहि, मया तु अयमेव क्षिप्राप्रसाद इष्यते, इति कथयित्वा स्वामिनि निषेधत्यपि नित्यानंदस्वामिना स्वहस्तेनैव स्थाल्याः क्षिप्रा गृहीता, भोक्तुमप्यारब्धा; परमेकोऽपि ग्रासो नैवाशक्यत भोक्तुम्। केवलं कर्करमय्येवासीत् क्षिप्रा। सत्वरमेव प्रोक्तवान् नित्यानंदस्वामी—अहो! स्वामिन्! किमेतत्? कर्करप्रायेयं तु क्षिप्रा। एतदर्थमेव निषिद्धोऽहं किम्? ईदृक्क्षिप्रापाके किं कारणम्?' इत्येवं पृष्टेऽपि स्वामी स्वसेवकसाधोर्दोषं नैवोक्तवान्! नित्यानंदस्वामी तु ज्ञातवानेवेदं यत् स साधुः स्वामिनः सेवां सम्यङ् नैव करोतीति। ततस्तु परस्मिन्नपि दिने नित्यानंदस्वामी क्षिप्रां स्वादितवान्। तदाऽपि तामेव स्थितिं विलोक्य सखेदमभाषत—स्वामिन्! भवन्तः प्रतिदिनमेवमेव क्षुधां सहन्ते। अत्र केवलं सेवकसाधोरेव दोषो विलोक्यते। तदेतन्निशम्य स्वामिना जगदे—अभ्यासनिमित्तेन कदाचित् त्वरया एवं भवेदेव, नैवात्र तस्य कश्चिद् दोष इति। ततस्तु दयालुत्वात् स्वामी तस्य दोषं नैव पश्यतीति मनसि विचार्य नित्यानंदस्वामी, एतादृङ् मूढसाधुः स्वामीसेवायामनर्ह एव; एतादृगीश्वरसदृशस्यापि स्वामिनो महिमा नैव जानात्ययं मूर्ख इति सुतरां दुःखिनमेव करोति स्वामिनमिति च निश्चित्य झटिति तमाहूय साधुं क्षिप्राविषये पृष्टवान्, ज्ञातवाँश्चेदं यदयं प्रतिदिनमेवमेवं क्षिप्रामनालोक्य पचति; क्रियान्तरेष्वपि करोत्युपेक्षामिति। तदनन्तरं नित्यानंदस्वामिभिः तत्साधवे स्पष्टमेवोक्तं यत्—विद्याग्रहणायानर्हा यूयम्! यस्य सेवा महत्तमा अपि साधवः समीहन्ते तत्सेवा युष्माभिर्न कृता, प्रत्युत तेषां द्रोह एव कृतः। अतःप्रभृति युष्माभिर्नैव कर्तव्यो विद्याभ्यासः, केवलं सेवाभ्यासमेव कर्तुं यतध्वम्। मुक्तानंदस्वामिनां तु सेवा युष्माभिर्नैव कार्या' इत्येवं कथयित्वा साधुमेकं सुपात्रं स्वामिसेवायां नियुक्तवान्।

ततस्तु स साधुरतीव पश्चात्तापं कृतवान्। सर्वैरन्यैश्चापि ज्ञातमेवेदं यदयं साधुरनायासतः समुपलब्धममूल्यं लाभं परित्यक्तवान्, विशेषतश्च स्वामिद्रोहं चापि कृतवानिति।

अथ कियत्कालनिर्गमानन्तरं मुक्तानंदस्वामिनां देहपाते सति तद्द्रोहकारी स साधुः सर्वाङ्गे कुष्ठव्याधिग्रस्तो रुधिरपूयस्रावी संबभूव। असह्या पीडा सोढुमपि नैवाशक्यत। तदा तन्मनसि महान् पश्चात्तापः प्रादुरभूत्। निंदितवाँश्च सुबहु स्वकीयं दुष्कृतम्। विचारितवाँश्चेदं यद् नित्यानंदस्वामी मय्यभवदप्रीत इति तत्पापमेवानुभूयते मया। तेषां क्षमायाचनेन दूरीभविष्यतीयं पीडेति निश्चित्य मनसि वरतालग्रामे स्थितिमन्तं ज्ञापयामास नित्यानंदस्वामिनं स्वकीयां स्थितिम्। ततो यदा नित्यानंदस्वामी समाययौ गढडाग्रामं तदा स जगाम तत्साधुसमीपम्। असौ साधुरपि ययाचे तं प्रति क्षमाम्, रुरोद च भृशम्। तदा नित्यानंदस्वामिना स एवमूचे—नैव कृतो युष्माभिर्मम कश्चिदपराधः, केवलमपराद्धं भवद्भिर्मुक्तानंदस्वामिनामिति मनसिकृत्य तमेव स्वामिनं कुरुत प्रार्थनां येन शमिष्यतीयं भवतां पीडा। तद्वचनं श्रुत्वा स साधुरन्तर्ध्यात्वा मुक्तानंदस्वामिनं प्रार्थयामास दीनतापूर्वकमतीवेति स्वल्पदिनैरेव शशाम तद्वपुःपीडा

नवीनप्रतिष्ठित उद्धवीयसंप्रदायस्तदीयाचार्याश्च जगति कथंकारं लभेरन् महतीं प्रतिष्ठामित्ययं स्वामिनां संकल्प उग्र आसीत्। स च प्रायः संपूर्णांशेन तैः पारमप्युपनीतो बभूव, तथाप्याचार्यसंबंधे तेषां विशेषसमीहा वर्तते स्म। जर्जरितमपि शरीरं तत्संकल्पार्थमेव ते धारितवंतः। परं यदा सद्गुरुर्नित्यानंदस्वामी तं कार्यभारमुवाह स्वकीयशिरसि तदाऽतीव शांतिपूर्वकं विक्रमात्षडशीत्यधिकाष्टादशशतवर्षेषु गतेषु आषाढकृष्णैकादशीदिवसे श्रीप्रकटपुरुषोत्तमसहजानंदप्रभोः पश्चात् सार्धमासे गते स्वेच्छयैवेमं लोकं परित्यज्य मुक्तानंदस्वामी प्राप्तवानंतर्धानम्।

मुक्तानंदस्वामी अनन्यनिष्ठापूर्वकं निर्मलदासभावेन भगवच्छ्रीस्वामिनारायणस्य वशवर्ती बभूव। संप्रदायस्य मुख्यसद्गुरुपंक्तौ प्रतिदिनमधिकाधिकतया ध्रुववदचलभावेन नित्यं प्राकाशत। श्रीमत्स्वामिनारायणीयमुखवचनानां पुस्तकं वचनामृतं कर्तॄणां सद्गुरूणां मध्ये मुक्तानंदस्वामी अपि वर्तते स्म। इत्येवं श्रीमुक्तानंदस्वामी धनपरिग्रहकुटुंबदेहमनोविकारादिसर्वेषां जीवनयज्ञ आहुतिं कृत्वा सदुपदेशदानसद्ग्रंथरचनादिसत्प्रवृत्तिरूपां सेवापुष्पांजलिं समर्प्य प्रकटपुरुषोत्तमं श्रीस्वामिनारायणं भगवन्तं संतोषयामास। भगवत्संतोषश्चापि एतावत्पर्यंतं तैः समासादितोऽभूद् येन भगवान् कस्यचिदुपरि प्रसन्नीभूय यदा वरप्रदानं करोतिस्म तदैवमेवाकथयत्—मुक्तानंदस्वामिसदृशं कल्याणं ते संपद्यतामिति; तथा च गुरोरिव सन्मानं

कृतवान स्वयं श्रीभगवान् । एकदा तु मुक्तानंदस्वामिमहिमानं ज्ञापयन् भगवान् तं प्रत्यभापतैवम्—भवान् कंचिज्जीवं पाणावादाय क्षिपति चेत् तर्हि स प्राप्नोत्यक्षरधामैवेति वर्तते भवतः सामर्थ्यमिति ।

## श्रीमुक्तानंदस्वामिकृतग्रंथानां निर्देशः—

### संस्कृतग्रंथाः

१ निर्णयपञ्चकम्
२ श्रीहनुमदष्टोत्तरशतनामावलिः
३ श्रीहनुमत्स्तोत्रम्
४ श्रीहनुमन्मंत्रः
५ श्रीहनुमन्मंत्रपुरश्चरणविधिः
६ श्रीहनुमत्कवचम्
७ द्वैपायनीयशारीरकसूत्रभाष्यरत्नम्

### प्राकृतग्रंथाः

१ कीर्तनोनुं पुस्तक
२ दशम [ दोहा चोपाईमां ]
३ धर्माख्यान
४ वासुदेवावतारचरित्र
५ अद्भुतगीता
६ कपिलगीता
७ भगवद्गीता
८ शिक्षापत्री
९ वैकुंठधामदर्शन
१० उद्धवगीता
११ नारायणकवच
१२ विवेकचिंतामणि
१३ सत्संगशिरोमणि
१४ विदूरनीति
१५ कृष्णप्रसाद
१६ मुकुंदबावना
१७ सतीगीता
१८ धामवर्णनचातुरी
१९ पंचरत्न
२० नारायणचरित्र
२१ गुणविभाग
२२ नारायणगीता दोहा चोपाईमां

अनुवादकः—

म्हेतोपनामा मयाशंकरतनुजन्मा गिरिजाशंकरः शास्त्री



# भाष्यरत्नस्याधिकरणानुक्रमनिर्देशः

# शुद्धिपत्रम्.

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| वेदकसिद्धत्वात् | वैदैकसिद्धत्वात् | ३ | ५ |
| वेदार्थप्रात– | वेदार्थप्रति– | ,, | १६ |
| तेनति | तेनेति | ४ | १२ |
| प्रष्ठेपु | पृष्ठेपु | ३३ | १९ |
| प्रष्ठेष्वनुत्तमेषूत्तमेपु | पृष्ठेष्वनुत्तमेषूत्तमेपु | ,, | ,, |
| इत्थंभूतायां मुक्तौ | इत्थंभूतायामुक्तौ | ३६ | १९ |
| प-तीन् | य-तीन् | ३७ | २२–२३ |
| मभ्यात्तो वाक्यनारदः | मभ्यात्तोऽवाक्य-नादरः | ४० | ११ |
| निमित्ताद्दुष्ट्या | निमित्तादुष्ट्या | ,, | २८ |
| विमोकःकामानक; भिष्वंगः | विमोकः कामान–भिष्वंगः | ,, | २९ |
| सामर्थ्यभावात् | सामर्थ्याभावात् | ४४ | १९ |
| नित्योऽनित्यानां | नित्यो नित्यानां | ४६ | २२ |
| रंतरोऽयमयति | रंतरो यमयति | ४८ | ४ |
| संप्रत्यर्ध्येपितमेव | संप्रत्यर्ध्येपि तमेव | ५८ | १५ |
| वेदिलोमानि | वेदिर्लोमानि | ५६ | २२ |
| ॥३२॥ | ॥३३॥ | ,, | २६ |
| मूर्द्धंवं | मूर्द्धैव | ५७ | ३ |
| द्युभ्वाद्यायतनस्व–शब्दात् | द्युभ्वाद्यायतनं स्वशब्दात् | ,, | १३ |
| आत्मानमन्यो | आत्मानमन्या | ,, | १४–१५ |
| रूपगता प्राकृत | रूपगताप्राकृत | ५८ | १ |
| आत्मनः प्राणा | आत्मनः प्राण | ५९ | २० |
| आदेशो' | आशे' | ,, | २१ |
| प्रोतश्चेत्युक्तम् | प्रोतश्चेत्युक्तम् । अतः स एवाक्षरशब्दाभिधेयः। | ६९ | १४ |
| अतः स एवाक्षर–शब्दाभिधेयः सा च प्रशासनात् | सा च प्रशासनात् ॥१०॥ | ,, | १५ |
| यनेनान्वेति | यतनेनान्वेति | ६२ | १३ |
| स्थि– ता य | स्थि–तो य | ६३ | १८ |
| संपद्या– | संपद्या– | ,, | २८ |
| पुरुषात्तम' | पुरुषोत्तम' | ७७ | १ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| अतो व्यक्तं | अतोऽव्यक्तं | ८० | २३ |
| भूः कृत | भूत् कृत | ८७ | १० |
| अभिमानव्यपदेशस्तु | अभिमानिव्यपदे-शस्तु | ९८ | २३ |
| ब्रह्मणाऽपि | ब्रह्मणोऽपि | १०९ | २६ |
| नप्रवृत्त। | प्रवृत्तौ | ११८ | १ |
| नवयवेन | नवयविन | ११९ | १५ |
| संज्ञास्कंधाः | संज्ञास्कंधः | १२२ | १५ |
| भ्रांतिमूला | भ्रांतिमूलो | १२६ | १८ |
| प्रधानानांगी– | प्रधानांगी– | १२८ | २० |
| परब्रह्मैव | परब्रह्मैव | १३० | १२ |
| विपर्य्रेण | विपर्ययेण | १३५ | १८ |
| विपर्येणोक्तावपि | विपर्ययेणोक्तावपि | ,, | २५ |
| नित्यत्वानित्य– | 'नित्यत्वाच्च–' नित्य– | १३७ | १६ |
| वेति | वेत्ति | १४० | ३ |
| स्वस्वधारणंादृष्टानां | स्वसाधारणादृष्टानां | १४२ | १७ |
| प्रकाशादिवस्तु | प्रकाशादिवत्तु | १४६ | २५ |
| रुपाधि | रुपाधे | १४८ | १४ |
| वस्थिता । चिदंत | वस्थितचिदंत | १४९ | २३ |
| स्तद्वृत्तयः | स्तद्वृत्तयः | १५० | ५ |
| वातादींद्रिय | वागादींद्रिय | १५१ | २२ |
| प्रथमे श्रवणादिति | प्रथमेऽश्रवणादिति | १५८ | ८ |
| शक्यंतं; | शक्यते; | ,, | २४ |
| कादादित्यमादित्या | काशमाकाशा | १५९ | ३ |
| व्रीह्याहिप्राप्तेः | व्रीह्यादिप्राप्तेः | १६४ | १८ |
| तद्यत्रैत्सुप्तः | तद्यत्रैतत्सुप्तः | ,, | ,, |
| संप्रतिपन्न; | संप्रसन्नः | ,, | ,, |
| सुप्तो | स्वप्तो | ,, | १९ |
| कल्याणगुणकरं | कल्याणगुणाकरं | १७२ | ११ |
| वस्तुनां | वस्तुनो | १७३ | ५ |
| वस्थितचिद्वस्तु | वस्थितचिदचिद्वस्तु | १७६ | २४ |
| पोडप | षोडश | १७८ | ४ |
| ब्रह्मणोऽमितत्वा | ब्रह्मणो मितत्वा | १७८ | ५ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| तत्परित्याजेना | तत्परित्यागेन | | |
| कर्मणो | कर्मणो | १८१ | ९ |
| यथाप्युद्गीथेन | तथाप्युद्गीथेन | १८६ | १५ |
| निःश्रेयसाधनम् | निःश्रेयसादानम् | १८७ | १३ |
| वसिष्ठं | वसिष्ठां | ,, | १४ |
| वसिष्ठ' | वसिष्ठा' | ,, | १६ |
| प्रतिहतिष्ठ– | प्रतितिष्ठ– | ,, | १८ |
| ाह | ह्हि | १८८ | १६ |
| दशिर्ष्यं नाचामे | दशिष्यन्नाचामे | १९१ | १ |
| दपूर्वपूर्वमप्राप्तमेव | दपूर्वमप्राप्तमेव | ,, | ७ |
| वीर्यवीर्याणि | वीर्या–वीर्याणि | १९२ | २३ |
| परब्रह्मापासन | परब्रह्मोपासन | १९६ | १५ |
| त्वविरोधः | त्ववरोधः | १९७ | १८ |
| धतूरात्रणा | धतूरात्रेणा | १९८ | ६ |
| व्यापारेपु | व्यापारेपु | २०३ | १६ |
| १ | २ | २१० | २१ |
| २ | १ | ,, | २४ |
| कापेयाः | कावपेयाः | २१४ | १७ |
| निनियोगो | विनियोगो | २१५ | १४ |
| परिक्रियते | परिक्रीयते | २२५ | ५ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| संभत्येव | संभवत्येव | २२६ | ८ |
| मुाक्त | मुक्ति | २२८ | ११ |
| घ्मान | ध्यान | २३३ | ३ |
| मूर्ध्ना | मूर्ध्नो | २४१ | १७ |
| अथवा 'कामयमानो | 'अथाकामयमानो | ,, | १९ |
| निष्कामति | निष्काम | ,, | २० |
| वा शुंच एवमेवैत | चामुं चैवमेवैता | २४४ | २५ |
| य | रश्मय | ,, | ,, |
| श्रतः | श्रुतः | २४७ | ४ |
| सच्चि् पो | सच्चिद्रूपो | २४८ | १५ |
| ाह | ह्हि | ,, | २३ |
| प्रजापतिः | प्रजापतेः | २५१ | २९ |
| संपाद्याविर्भावः | संपद्याविर्भावः | २५३ | ७ |
| व्यक्तव्यः | वक्तव्यः | २५४ | १८ |
| स्वरूपाविर्भावो | स्वरूपाविर्भावो | २५५ | २१ |
| अयथा | यथा | २५८ | ७ |
| ना | नो | २६० | १७ |
| मृर्त्यु | मृत्यु | २६२ | १४ |
| मक्तस्य | मुक्तस्य | ,, | १८ |
| बिंबधारम् | बिंबाधरम् | २६४ | १७ |





॥ अनादि मुक्तराज सद्‌गुरुश्री निर्गुणदासजी स्वामी ॥



॥ श्रीसहजानंदस्वामिने नमो नमः ॥

# ॥ ब्रह्मसूत्रभाष्यरत्नम् ॥



श्रीमत्स्वामिनारायणशिष्य–श्रीमुक्तानंदस्वामिविरचितम् ।



## प्रथमाध्याये प्रथमपादः ।

धर्मात्मजमहं वंदे मुक्तानंदः सदा हरिम् ॥
दिव्यं गुणातिगाकारं सच्चिदानंदधर्मिणम् ॥ १ ॥

श्रीमतां व्याससूत्राणां मुक्तानंदः करोम्यहम् ॥
सुखबोधं भाष्यरत्नं व्यासाभिप्रायबोधकम् ॥ २ ॥

धाम्न्यक्षरे निखिलमुक्तगणावृतो यो
वेदैः स्तुतोऽष्टनिजभूतिनिषेवितश्च ॥
सोऽयं नराकृतिधरो हरिकृष्णनामा
निर्विघ्नतां वितनुतां मम सत्प्रयासे ॥ ३ ॥

निखिलनिजशक्तिधरो यो [1]यच्छक्त्यैव सकलविश्वविनोदः ॥
स जयति हरिर्वृषसूनुर्निखिलागमसारसर्वस्वम् ॥ ४ ॥

भवतु सुसिद्ध्यै हि सतां हरिकृष्णः सर्वमंगलोपेतः ॥
ईशोऽशेषः प्रपंचश्चिदचिन्मयस्तु [3]यस्यैषः ॥ ५ ॥

नमो व्यासाय कृष्णाय ब्रह्मसूत्रविधायिने ॥
[4]येन श्रुतिविरोधस्य विनाशाय श्रमः कृतः ॥ ६ ॥

---

१ यस्य हरेः शक्त्याऽऽनंदगुणविशिष्टयांतर्या शक्त्यैव सकलविश्वस्मिन् विनोदः सुखं भवति । २ निखिलाश्च ते आगमाः शास्त्राणि च तेषां सारः सर्वेभ्यः श्रेष्ठतया वर्णनीयः, सर्वस्वं सकलधनरूपश्च । ३ हरिकृष्णस्य । ४ व्यासेन ।

व्याससूत्रमिदं पूर्वाचार्यैर्व्याख्यातमप्यथ ॥
दुर्बोधं तस्य व्याख्यानं मया स्पष्टं विरच्यते ॥ ७ ॥
सर्ववेदान्तसत्पद्मसुगंधस्वादमोदिनाम् ॥
साधूनां हरिनिष्ठानां भाष्यमेतन्महानिधिः ॥ ८ ॥

अथ सूत्रकलापे ह्युपनिपज्जन्या ब्रह्ममीमांसा प्रारभ्यते । [1]इह [2]तस्या आरंभो हि किंपुरुषार्थः ? पुरुषार्थो हि प्राकृताप्राकृतसुखजनकश्चतुर्विधः । को वा ब्रह्ममीमांसाख्यविचारेऽधिकारी भवति [3]यस्यार्थित्वादयो धर्माः संति ? किमस्य[4] विषयः ? [5]यदुक्तं तत्प्रसिद्धमनतिप्रसिद्धं च संशयदोलारूढं विद्यते ? [6]अस्यारंभः [7]कस्यानंतरमस्ति, [8]यस्य नियतप्रयोजनत्वेन पूर्वभावित्वं ज्ञायते, इति श्रोतृनरमनःसंदेहशरक्षतसमपनयनाय ग्रंथप्रबंधविधायकोत्तमेन हर्यवतारव्यासेन सद्भावितमिदं सूत्रम्:—

## अथातो ब्रह्मजिज्ञासा ॥१॥

इदमेकमधिकरणम् । विषयसंशयपूर्वपक्षसिद्धान्तनिर्णयसंगतीनामाधारत्वमिहाधिकरणत्वम् । [9]इहायमथशब्द आनंतर्यार्थः, न त्वथ योगानुशासनमित्यादिवदधिकारार्थः। अधिकारो हि समारंभः। नहि ब्रह्मज्ञानेच्छा करणीयत्वेन समारंभार्हा विद्यते; किंत्वतिरमणीयविषयत्वेन सा[10] हि संभावनीया ।

"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कंठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥"

इति स्मृतावथशब्दो मंगलवाचकोऽप्यत्रा[11]यं न मंगलार्थः प्रतिपादनीयः । यतो ब्रह्मजिज्ञासां प्रति मंगलस्यान्वयसंभवो नास्ति; तस्या एव मंगलत्वात् । शास्त्रारंभे हि शिष्टाचारपरिरक्षणार्थं यन्मंगलकरणं तच्चिह्नाक्षरध्वनिमात्रेणोद्यते । न चायमथशब्दः पक्षान्तरसंग्रहार्थः। यतः प्रथममेकस्य पक्षस्याकथिततया [12]तत्प्रसंगाभावोऽस्ति। [13]यथा भोजनगमनादौ तथाऽनिर्धारितं प्रथमं यत्किंचिद्वृत्तमपेक्ष्य न चायमथशब्दप्रयोगः। अग्रे[14] नियतसामग्रीभूतस्य कस्यचिद्वस्तुनो वक्तुमिष्टत्वात् । अत्रे[15]

१ सूत्रकलापे । २ ब्रह्ममीमांसायाः । ३ अधिकारिणः । ४ सूत्रकलापस्य । ५ पुरुषार्थादि । ६ ब्रह्ममीमांसासूत्रकलापस्य । ७ शास्त्रस्य । ८ शास्त्रस्य । ९ अधिकरणे । १० ब्रह्मज्ञानेच्छा । ११ अधिकरणे । १२ तस्य पक्षांतरसंग्रहस्य । १३ नन्वथशब्दस्य पक्षांतरार्थाभावे यत् किंचित् पूर्वभावि वस्तूद्दिश्य स पठितोऽस्तीति चेन्नेत्याह यथेति । १४ ब्रह्ममीमांसायाःसकाशात् पूर्वभावित्वे । १५ ब्रह्ममीमांसायाम् ।

[1]यस्य [2]संपत्तिरधिकारिविशेषणत्वेन ब्रह्ममीमांसायाः साधनं तच्छास्त्रं पूर्वभावीत्यवगम्यते । अत्राष्टसंवत्सरप्रभृतियुतब्राह्मणाद्यष्टेोपनयनसंस्कारसंस्कृतस्य द्विजस्य 'स्वाध्यायोऽध्येतव्यः' इति स्वकर्तव्योपदेशतया नियतप्राप्तस्य नियमनिषेविताचार्याननप्राप्तवर्णोपादानरूपस्यार्थवेदनफलस्य स्वोपबृंहणस्मृतियुतवेदपठनस्य ब्रह्ममीमांसायाः पूर्वभावित्वं योग्यम् । धर्मज्ञानवद् ब्रह्मज्ञानस्यापि वेदकसिद्धत्वात् । वेदाध्ययनवर्जितस्य [3]तद्विचारानुपलब्धेः । अतः केवलवेदपठनानंतरं ब्रह्मविचार इति चेत्, भवतु नाम तथाभूतं वेदाध्ययनम् । [4]तदध्ययनानन्तरं तु धर्मविचारः । वेदाध्ययनाभावे धर्मविचारसिद्ध्यभावात् । तथैवाचार्यैः संपादितम्—अथातो धर्मजिज्ञासेति । आदित आचार्यात् स्वोपबृंहणशास्त्रयुतवेदपठनानंतरं धर्मविचारलब्धिरिति तर्हि कस्मादनंतरं ब्रह्ममीमांसारंभः ? धर्ममीमांसानंतरमेवेति कथमेवमुक्तमिति चेत्तत्र ब्रूमः—नास्माकं धर्मब्रह्ममीमांसारूपयोः शास्त्रयोरत्यंतभेदवादित्वं किंत्वेकत्ववादित्वमेव । उपासनोपास्यतया प्रतिपादितयोर्धर्मब्रह्मणोः प्रतिपादकमथातो धर्मजिज्ञासेत्यारभ्यानावृत्तिः शब्दादनावृत्तिः शब्दादित्येतावत्पर्यंतमेकमेव शास्त्रमस्ति । [5]तत्राथातः शेषलक्षणमित्यादौ यथा तथाऽवांतरभेदबोधकोऽयमथातो ब्रह्मजिज्ञासेति प्रारंभः। अथवा 'धर्माज्ज्ञानं प्रभवति' इत्यादिवाक्यैर्धर्मस्य परब्रह्मज्ञानकारणत्वात्तद्विचारोपयोग्यानां श्रुतिवाक्यानां वेदार्थप्रतिपादकस्मृतिपुराणादिषु [6]तत्प्रमाणत्वप्रतिपादकवाक्यानां च ब्रह्मविचारोपयोग्यत्वाच्च धर्मविचारानंतरं ब्रह्ममीमांसा। साधनमृते साध्यानुपलब्धेः। परब्रह्मज्ञानं प्रति धर्मस्य साधनतायां 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसानाशकेने'ति वेदवचनमेव प्रमाणभूतम्। धर्मरूपकर्मणो ब्रह्मज्ञानं प्रति साधनत्वात्तदेव विचार्यं कर्तव्यं च किमनेन वेदान्तवचनमीमांसायत्नेनेति न च वाच्यम् । फलानुसंधानहीनतया परब्रह्मप्रसन्नतार्थं कृतस्य वर्णाश्रमोचितधर्मात्मककर्मणः पापक्षयसंभूतांतःकरणशुद्धिद्वारा मुमुक्षोर्ब्रह्मविचारयोग्यत्वसंपादकत्वेन परब्रह्मज्ञानकारणत्वात्। तथा शिष्टस्मृतिः 'यस्यैते चत्वारिंशत् संस्काराः' इत्यादिना 'स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति' इत्यंतेन प्रकरणेन गर्भाधानादिसमस्तकर्मणां पापमलप्रक्षालनरूपसंस्कारकारणत्वं द्योतयति। अतः कर्मफलानुसंधानहीनेन पुरुषेण परब्रह्मतुष्ट्ये कृतकर्मणामंतःक-

---

१ शास्त्रस्य । २ नित्यानित्यवस्तुविवेकः शमदमादिसाधनसंपत् इहामुत्र च फलभोगविरागो मुमुक्षुत्वं चैतत्साधनचतुष्टयरूपा । ३ ब्रह्मज्ञानस्य । ४ वेदस्य । ५ धर्ममीमांसाशास्त्रे । ६ तस्य धर्मस्य । ७ तस्य धर्मस्य। ८ धर्मरूपं कर्मैव ।

रणशुद्ध्यादिसंस्कारोत्पादकत्वोपलब्धिः।[1] तथा च सति फलाभिसंधिरहितकर्मकर्तुर्नरस्य यदेव परब्रह्मज्ञानफलं तदेव कर्मफलमस्ति; यथा व्रीहिप्रोक्षणदर्शपूर्णमासोत्पत्तिर[2]पूर्वहेतुतया स्वर्गे समुच्चीयते तथा कर्माणि चित्तशुद्धिद्वारा परब्रह्मज्ञानहेतुतया मोक्षे समुच्चीयंते।[3] अतः कर्मणां गौणत्वादंगत्वमेषाम्[4]। अत[5]ः परब्रह्मज्ञानसमुद्भवाय कर्माणि विधेयानि। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति' इति श्रवणात् परब्रह्मज्ञानसाधनानां कर्मणां मीमांसानंतरं परब्रह्मज्ञापकशास्त्रारंभो वेदप्रसिद्धोऽस्ति। ननु कर्म[6]ब्रह्ममीमांसयोरनुक्रमनियमः कथमवगम्यते? इति चेत् कर्तृभेदाभावादनुक्रमनियमोऽस्ति। ननु कर्त्रैक्यमिहोधारदर्शपूर्णमासवदंगांगित्वेन वा पंचप्रयाजवदेकांगोपयुक्तानेकांगत्वेन वा षड्यागवत्फलैक्येन वा भवति? [7]तत्रोत्तरम्—तेषां मध्येऽन्यतमत्वेन [8]तदस्ति। तथात्वे सत्युभ[9]यविचारयोर्वेदादिप्रमाणं नोपपद्यते। ततः कर्मब्रह्मविचारयोरनुक्रमनियमो नार्ह इति। यर्हि वेदादिप्रमाणं न संभवेत्तर्हि तु त[10]थात्वं स्यादेव, परं त्वेवं नास्ति। किंतु 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह तेनेति, ब्रह्मवित्पुण्यकृच्च, 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' इत्यादिका ज्ञानकर्मसमुच्चयवादिन्यः श्रुतय उभ[11]यत्रोपपद्यंते। ततः परब्रह्मतुष्ट्यैकफलस्य फलांतराभिसंधिरहितकर्मणस्त[12]ज्ज्ञानस्य च जन्यजनकभावेन स्थितयोरुभयोर्मुक्त्येकफलजनकत्वात्त[13]न्मीमांसयोरप्यनुक्रमनियमः संघटते। यद्यपि वेदाध्ययनविधेर्वर्णोपादानमात्रपर्यवसायित्वमस्ति, तथाप्युभ[14]यमीमांसयोर्न प्रवृत्त्यनर्हत्वम्। सांगवेदपठनाद्वेदानां पदार्थमात्रबोधेन तत्र प्रवृत्तिप्रतीतेः। तदनंतरं परब्रह्मस्थूलाराधनभूतज्योतिष्टोमाद्युत्पादकानां त[15]त्सूक्ष्माराधनरूपदहरादिविद्यासंपादकानां च वेदवाक्यानामन्योन्यविरोधाभासं समीक्षमाणो ब्रह्मविचारे पुरुषार्थाभिलाषी मनुजः स्वयमेव प्र[16]वृत्तिं करोति। ततो ना[17]निबंधनस्तद्विचारः। अतः समस्तचेतनाचेतनशरीरकस्य जीवेश्वरप्रकृतिपुरुषकालाक्षरब्रह्मभ्यः स्वरूपस्वभावगुणविभूतिभिरद्वितीय-

---

१ उक्तरीत्या कर्मणामन्तःकरणशुद्ध्यादिसंस्कारजनकत्वे। २ अपूर्वं फलम्। ३ चित्तशुद्धिद्वारा परब्रह्मज्ञानसाधनत्वात्। ४ कर्मणाम्। ५ कर्मणां ज्ञानांगत्वात्। ६ कर्मब्रह्ममीमांसयोः। ७ तथाविधे प्रश्ने। ८ कर्त्रैक्यम्। ९ कर्मब्रह्म। १० उभयविचारेऽनुक्रमनियमानर्हत्वम्। ११ कर्मब्रह्मविचारे। १२ परब्रह्म। १३ कर्मब्रह्म। १४ कर्मब्रह्म। १५ परब्रह्म। १६ ब्रह्मविचारे। १७ परब्रह्मस्थूलसूक्ष्माराधनसंपादकवेदवाक्यानां परस्परविरोधदर्शनपूर्वकं ब्रह्मविचारे मुमुक्षुजनस्य प्रवृत्तेः तयोः कर्मब्रह्मणोर्विचारः नास्ति निबंधनमनुक्रमो यस्य स तथाभूतो न भवतीति नानिबंधनः सानुक्रम एव भवतीत्यर्थः।

यत्वात् सर्वोत्कृष्टस्य समस्तनिगमसारगुह्यप्रकाशकस्य ब्रह्मपरमात्मपरमेश्वरपुरुषोत्तमहरिकृष्णविष्णुवासुदेवनारायणमुनिप्रभृतिपर्यायवाचकैः शब्दोत्तमशब्दैः प्रद्योतितपरममहिम्नः स्वोपासकसकलचेतनवृंदानुष्ठितस्वाराधनानुरूपसंजातस्वकीयप्रसादसंपादितपुरुषार्थसमुदायस्य वराहाद्यवतारधारिणः परब्रह्मणो विज्ञानजनकं स्वोपबृंहकस्मृत्यादिसहितमुपनिषच्छास्त्रं मीमांसनीयम् । [१]तदुपायभूतनोदनात्मकस्य हर्युपासनभेदकलापरूपस्य [२]तत्तदर्थवादप्रद्योतितप्राशस्त्यस्य श्रुत्यादिप्रतिपादितसमस्तांगसंपन्नस्य स्वप्रमाणानुरूपस्मृतिपुराणेतिहासाभियुक्तसुवाक्यसमुदायप्राप्तोपबृंहणस्य विधिनिषेधविकल्पसमुच्चयोत्सर्गापवादबाधाभ्युच्चयप्रभृतियुतस्य सकलपुरुषार्थरत्नमहोदधिभूतस्य परब्रह्मज्ञानसाधनरूपस्य हरिप्रसादरूपफलेच्छया फलांतराभिसंधिरहितस्य वर्णाश्रमोचितस्य धर्मस्य मीमांसानंतरमित्यथशब्दार्थः सिद्धांतितः ॥ अयमतःशब्दः पूर्वोक्तस्य हेतुत्वे गण्यते । यतो भणितस्वोपबृंहकस्मृत्यादियुतवेदेन पुंसा धर्मो मीमांसितोऽतस्तदनुष्ठानसंप्राप्तांतःकरणशुद्धिना शीघ्रसंप्राप्तविवेकादिगुणविद्यमानत्वप्राप्तहरिभक्तिसंपन्नेनानेन परब्रह्मापि निरवधिकातिशयानंदरूपनिःश्रेयसकरं मीमांसनीयमिति तन्मीमांसामाह । ब्रह्मणः–परमात्मवासुदेवनारायणमुनिप्रभृत्यनेकाभिधस्य परब्रह्मणो जिज्ञासा–ज्ञातुमिच्छेति कर्मणि षष्ठी। इच्छाया इष्यमाणज्ञानप्रयोजनत्वात्, तयेप्सितं तस्य ज्ञानं संपादनीयमिति सूत्राभिप्रायः । 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति, 'तद्वै पदं भगवतः परमस्य पुंसो ब्रह्मेति यद्विदुरिति, 'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्, विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः' इत्यादिश्रीमद्भागवतवाक्येषु ब्रह्मशब्देन परमात्मसंज्ञं परब्रह्म तत्स्थानभूतं ब्रह्मपुराख्यमक्षरब्रह्म चोक्तम्; ब्रह्मशब्दवाच्ययोस्तयोर्मध्ये ब्रह्मशब्दोऽत्र परब्रह्मवाचको ग्राह्यः । 'नारायणः परं ब्रह्म आत्मा नारायणः परः' इति; ' नारायणपरा वेदा नारायणपरा मखाः । नारायणपरं ज्ञानं नारायणपरं तपः ' इत्यादिश्रुतिस्मृतिवाक्यैस्तस्यैव प्रतिपादनात् । इदानीं विषयसंशयादिकथनेन मीमांसां दर्शयति । अत्राधिकरणे को विषय इति चेद्ब्रूमः–'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्, नास्त्यकृतः कृतेनेति–कृतेन कर्मणा अकृतः

---

१ तस्या मीमांसाया उपायभूतः साधनभूतः। २ वैदिकशास्त्रीयभगवदुपासनोक्तपृथक्पृथक्कर्तव्यताप्रकाररूपार्थवाद । ३ प्राशस्त्यं महत्त्वम् । ४ शिष्ट । ५ तस्य धर्मस्यानुष्ठानेन । ६ आदिना विमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षा ग्राह्याः । विवेकादीनां स्वरूपं च रामानुजाचार्यकृतश्रीभाष्यादेवावगंतव्यम् ।

कर्मबंधहीनो नास्तीत्यर्थः, यद्वा अकृतोऽनादिसिद्धो दिव्यमूर्तिः परमात्मा कृतेन कर्मणा नास्ति—न गम्यः, अतो निर्वेदमायादिति पूर्वेण संबंधः । ' [1]तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति, 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति, 'तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्, शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्'—इत्यादिश्रुतिस्मृतिवाक्यसमुदायो विषयः । परब्रह्म मीमांसायोग्यं भवति नवेति संशयोऽस्ति । पूर्वपक्षस्तु परब्रह्म विचारणार्हं नास्ति, [2]तत्र संशयाभावात् । कथं संशयाभावः ? ' अयमात्मा ब्रह्मे'ति श्रुतिवाक्यमयमितिपदेन साक्षात्सिद्धं जीवात्मानमेव ब्रह्मेति बोधयति । ततोऽत्र[3] कथं संशयदूषणप्रसक्तिः ? । किंच विचारस्य फलं [4]तूक्तविषयं वेदनं, तच्च वेद्यवस्तुपरिच्छेदकं वेदान्तमीमांसोत्पन्नं ज्ञानं वस्त्वंतरेभ्यो ब्रह्म परिच्छिनति न वा ? यदा परिच्छिनत्ति तदाऽस्यापरिच्छेद्यविशेषणभंगोपलब्धिः, यदा न परिच्छिनत्ति तदा ब्रह्म यथार्थतया न प्रद्योतेत । अयमिति निर्देशतया निश्चितः पदार्थांतरेभ्यो भिन्नो घटः पटश्च यथा ज्ञायते तद्वज्ज्ञानाभावात् । अतो ब्रह्मविषयं वेदनमपि न घटते; [6]तथात्वे सति [7]प्रयोजनं च किमपि नेक्षामहे; जनानां न मोक्षरूपं प्रयोजनं चाप्यनादिकालप्रवृत्तस्य संसरणस्य निवर्तनाभावादित्येवं प्राप्ते वच्मः—सच्छास्त्रप्रोक्तचेतनाचेतनपरब्रह्मस्वरूपाभिज्ञं हर्येकांतिकभक्तं गुरुं प्राप्य सर्वथा समारंभणीयं शास्त्रम् । ब्रह्मणः संदिग्धतया विषयत्वसंभवात् । तन्निर्णयस्य सप्रयोजनत्वाच्च ' यदयमात्मा ब्रह्म ' इत्यादिश्रुतिरमुमेवाहंकारबद्धं कर्माधीनमनाद्यविद्योपहतात्मसंविदमल्पज्ञं संसरणस्वभावं जीवात्मानं ब्रह्मेति वक्ति अत एव संशयः । निरस्तसकलदोषकलापस्य सर्वज्ञत्वसत्यसंकल्पत्वापहतपाप्मत्वानादिबोधादिगुणगणमहोदधेर्हरेरनवधिकातिशयज्ञानानंदप्रभृतिशक्तिमहिमातिशयत्वं हि ब्रह्मत्वम्; संसारिनरस्यानाद्यज्ञानवासनावष्टंभविजृंभितविचित्रकर्मफलभोगानुगुणबहुशरीरप्रवेशनिर्गमव्यापारपरवशनिःसीमतापसहिष्णुत्वं हि जीवत्वम्; कथमेतयोः स्वरूपस्वभावादिभिरन्योन्यविलक्षणयोरेकत्वं वदंति श्रुतय इत्येवं संशयः किं न भवेत् ? अथ च इत्थमपि शंक्यते—आदित्यो ब्रह्म, अन्नं ब्रह्म, मनो ब्रह्म, विज्ञानं ब्रह्मेत्यादयो भिन्नं भिन्नं पदार्थं ब्रह्मेति वदंति; तेंत्र किंवा ब्रह्मेति

---

१ तस्य परब्रह्मणो विज्ञान । २ परब्रह्मणि । ३ जीवरूपे ब्रह्मणि । ४ आत्मविषयं । ५ ब्रह्मणः। ६ ब्रह्मविषयज्ञानाभावे । ७ वेदांतमीमांसायाः। ८ तस्य ब्रह्मणः । ९ वासनाया अवष्टंभोऽवलंबनं तस्माद्विजृंभितं जनितं यद्विचित्रकर्म । १० श्रुतिषु ।

बहुधा शंकितत्वात्तन्मीमांसार्हमस्ति; तत्र श्रवणमननादिनिर्णीतस्य धर्मज्ञानविरतियुतभक्तिलभ्यस्य परमदयानिधेर्गुरुराजेन्द्रस्य शरणागतसकलजनानुग्रहशीलस्य दिव्याप्राकृतविग्रहस्य नारायणाभिधपुरुषोत्तस्य परब्रह्मणोऽनुग्रहाधिक्येन उक्तस्याधिकारिणो विनष्टानाद्यविद्याजन्यबंधनसाक्षादनुभूतानवधिकातिशयानंदरूपा हरिनिवासभूते ब्रह्मपुरेऽक्षरात्मभावं प्राप्तेन तदुपासकवृन्देन प्राप्ता तत्सेवारूपा मुक्तिः प्रयोजनं चास्ति। अतःसविषयं सप्रयोजनं परब्रह्मप्रतिपादकशास्त्रश्रवणं प्रतीयते। ननु तच्च श्रवणमपरिच्छिन्नपरब्रह्मविषयं न संघटते, तज्जन्यज्ञानस्य वेद्यपरिच्छेदकरूपत्वात्; एवं सति ईदृगिदमिति परिच्छेदाभावान्न तत्परब्रह्म विचारगम्यमस्तीति चेन्न; एवं परब्रह्मणः परिच्छेदासंभवेऽपि लक्षणद्वाराऽन्यव्यावृत्तत्वमात्रेण परिच्छेदसंभवात् विचारगम्यं सर्वत्र लक्ष्यविषयमन्यव्यावृत्तत्वेन यद्वेदनं तदेव लक्षणेन वेद्यवस्तुपरिच्छेदकं बोध्यम्। स्वोपबृंहकस्मृत्यादियुतवेदान्तवाक्यैर्निरूपिते परीक्षिते चोद्दिष्टपरब्रह्मसंबंधिनि लक्षणे तैंल्लक्षणहीनेभ्यस्तेदितरेभ्यःसजातीयविजातीयसकलचेतनाचेतनवस्तुभ्यो विलक्षणस्वरूपस्वभावादिमदुक्तंयत्तत्परब्रह्मेत्यवगम्यते। अतःसमंजसोऽयं परब्रह्मविषयः सच्छास्त्रारंभः। यदसंजातशंकमप्रयोजनं च तद्धि न सच्छास्त्रानुशीलनवतां विचारकोटौ समागच्छति। अस्यास्तु परब्रह्मप्रतिपादकशास्त्रमीमांसायाः प्रमाणयुक्त्याभासवशात्संशयस्थानं परब्रह्म विषयो भवति। 'ब्रह्मविदाप्नोति परम्' 'तमेव विद्वानमृत इह भवति' 'तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनायेति, पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेतीति, आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनादेव पाशं दहति पण्डित इति, ज्ञात्वा देवं मुच्यते सर्वपाशैरिति, 'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति' इति, यो मामेवमसंमूढो जानाति पुरुषोत्तमम्। स सर्वविदिति, जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन इति, तेषामहं

---

१ परब्रह्म। २ तस्मिन् प्रसिद्धे परब्रह्मबोधके श्रुतिसमूहे। ३ परीक्ष्य लोकान् कर्मचितानिति, तद्विद्धि प्रणिपातेनेत्यादिश्रुतिस्मृतिषु। ४ हर्युपासक। ५ तस्य हरेः सेवा। ६ ब्रह्ममीमांसायां प्रयोजनसंभवात्। ७ परब्रह्मप्रतिपादकशास्त्रश्रवणजन्य। ८ परब्रह्मणोऽपरिच्छिन्नत्वे तत्प्रतिपादकशास्त्रश्रवणजन्यज्ञानस्य वेद्यवस्तुपरिच्छेदकत्वासंभवे सति। ९ वेदांतोपबृंहक। १० ब्रह्मलक्षण। ११ ब्रह्मेतरेभ्यः। १२ लक्षणद्वारा सकलचेतनाचेतनविलक्षणतया परिच्छेदसंभवात्। १३ प्रेरितारं सर्वप्रेरकं आत्मानं परमात्मानं जडचिद्भ्यः स्वरूपस्वभावेन पृथक् यथा भवति तथा मत्वा जुष्टः तं परमात्मानं सेवमानः भक्तः तेन सेवनेन।

समुद्धर्ता मृत्युसंसारसागरात् । भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् इति, मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ' इत्यादिश्रुतिस्मृत्युक्तानुसारेण प्राप्या परमसुखरूपा आदौ संजातजिज्ञासस्य पश्चाद्धरिज्ञानभक्तिरूपोपासनेन ब्रह्मभावं प्राप्तस्यास्याधिकारिणोऽनाद्यविद्याकृतगुणरूपबंधननिवर्तनपूर्विका ' सर्वज्ञः सर्वविद्यस्यैप महिमा भुवि दिव्ये ब्रह्मपुरे ह्येप स व्योम्न्यात्मा प्रतिष्ठित इति, एतत्सत्यं ब्रह्मपुरमिति, ददर्श तत्राखिलसात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् । सुनंदनंदप्रवलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुमिति, कृष्णं च तत्र च्छंदोभिः स्तूयमानमित्यादिश्रुतिस्मृत्युक्ते ब्रह्मपुरे स्थितस्यानंतकोटिमुक्तसेवितचरणकमलस्य परब्रह्मणः सेवारूपा मुक्तिः प्रयोजनं च भवतीत्यस्मिन्नाद्याधिकरणे निरूपितम् । [1]अत्रोद्दिष्टस्य परब्रह्मणो यन्निर्णायकं लक्षणं तत् किमस्ति, इत्यपेक्षायां तल्लक्षणबोधकमधिकरणांतरं[2] प्रकटयति सूत्रकारकः—

## जन्माद्यस्य यतः ॥ २ ॥

विदिते वस्तुनि लक्ष्यलक्षणप्रयोजनाभावात् अविदिते वस्तुनि लक्ष्यलक्षणवेदनापेक्षानुपलब्धेः कथमिह लक्ष्यस्य परब्रह्मणो लक्षणकथनावसर इति न संदेहनीयम् । उपरिष्टाद्वेदादिशास्त्रपठनाद्विदिते परब्रह्मसंज्ञे परमात्मनि [3]तत्संभवात् । जन्मादि अस्य यत इति सूत्रपदविभागः । जन्मादीत्यत्र तद्गुणसंविज्ञानो बहुव्रीहिः । अस्य चेतनाचेतनसंमिश्रणसमरसीभूतस्य विचित्रानंतभोक्तृभोग्यभोगोपकरणभोगस्थानादिरूपविविधरचनायुतस्य जगतः जन्मादि—जन्म आदिर्यस्य तज्जन्मादि—उत्पत्तिरक्षणाप्ययनिग्रहानुग्रहरूपं कर्म, यतः—'अक्षरात्परतः पर इति, आत्मैवेदमग्र आसीत्पुरुषविध इति, यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः, इत्यादिवाक्योक्ताद् बद्धमुक्तनित्यमुक्तक्षेत्रज्ञेभ्यः स्वरूपस्वभावादिभिरत्युत्कृष्टाद् यस्माद्भवति तद् ब्रह्मेति शेपः । 'यतो वा इमानि भूतानि जायंते, येन जातानि जीवंति, [4]यत्प्रयंत्यभिसंविशंति, तद्विजिज्ञासस्व, तद्ब्रह्मेति, प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबंधहेतुरिति, सत्यं ज्ञानमनंतं ब्रह्मेति, स्थित्युद्भवप्रलयहेतुरहेतुरस्येति, तदेवैहि परं नरेंद्रेत्यादिवाक्यकलापो विषयः । इह विश्वस्य जन्मादिकृत्यं ब्रह्मणो लक्षणसंपादने संघटते नवेति संशयः । न संघटते [5]तस्य ब्रह्मणा

---

१ आद्याधिकरणे । २ अधिकरणे । ३ तस्य लक्ष्यलक्षणकथनस्य संभवात् । ४ म्रियमाणानीत्यर्थः । ५ जन्मादिकृत्यस्य ।

संयोगाभावात्। किंच आनंदो ब्रह्मेति व्यजानादित्यत्रानंदस्य जगज्जन्मादिलक्षणं पर्यवस्यति। अन्यत्र 'सदेव सौम्येदमग्र आसीदि'ति सतो जगत्कारणत्वमवगम्यते। 'सत्यं ज्ञानमनंतं ब्रह्मे'ति ज्ञानमेवापरिच्छिन्नं जगत्कारणं ब्रह्मेत्येकत्र विज्ञायते। अपरत्र च 'नारायणः परं ब्रह्म आत्मा नारायणः पर इति, तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदेति, नारायणपरा वेदा नारायणपरा मखा इति, वासुदेवपरा वेदा वासुदेवपरा मखा इति, मत्तः परतरं नान्यदिति, ब्रह्मेति परमात्मेति भगवानिति शब्द्यत इति, परमात्मपरब्रह्मवासुदेवादिशब्दवाच्यं नारायणमुनिसंज्ञं वस्तु जगद्धेतुत्वेन सृज्यसमस्तवस्तुपूर्ववर्तिब्रह्मेत्यवबुध्यते। [1]इहानंदादीनां ब्रह्मत्वे विकल्पो वा समुच्चयो वा? विकल्पे [2]श्रुतहान्यादिदोषप्रसंगो व्यवस्था च; व्यवस्थितविकल्पेऽपि ब्रह्मानेकत्वप्रसंगः। समुच्चयपक्षे [3]तेपां धर्मरूपत्वान्निखिलजगन्निर्माणोपायज्ञानविशेषविशिष्टब्रह्मत्वासंभवः। [4]अतः सर्वथापि ब्रह्मणो जगद्धेतुत्वादिलक्षणं वक्तुमशक्यमित्येवमादौ पूर्वपक्षरूपकलहे जाते सति वच्मः—यद्यपि जन्मादेर्जगत्संबंधित्वेन ब्रह्मण्यसंयोगस्तथापि तटस्थत्वेन लक्षणत्वं संबध्यते। यत्सर्वज्ञत्वादिगुणगणविशिष्टं परमात्मपरमेश्वरपरब्रह्मवासुदेवादिसंज्ञाधारं नारायणतत्वं तदेव जगत्कारणं ब्रह्मेत्यभिधीयते। आनंदप्रभृतिधर्माणामिहैव पर्यवसानमस्ति; सर्वज्ञत्वं नित्यतृप्तत्वमनादिबोधत्वं स्वतंत्रत्वमलुप्तदृष्टिकत्वमनंतशक्तित्वं चेति पडेतानि सर्वज्ञत्वादीनि वायुपुराणे चोक्तानि। 'सर्वज्ञता तृप्तिरनादिबोधः स्वतंत्रता नित्यमलुप्तदृष्टिः, अनंतशक्तिश्च विभोर्विभुज्ञाः पडाहुरंगानि महेश्वरस्येति' नित्यापरोक्षानपेक्षितसाधननिर्दोषज्ञानगोचरसकलवस्तुत्वमत्र सर्वज्ञत्वम् 'यः सर्वज्ञः सर्ववित्' 'यस्य ज्ञानमयं तप' इत्यादिभिरिदं ब्रह्मणः सिद्धम्। अनेन सकलबद्धचेतनबहुविधकर्मफलभोगानुकूलदेवमनुष्यपश्वादिशरीरनिर्माणोपायसामग्रीविशेषज्ञं स्वोपासकसकलमुक्तचेतनस्वपरिचर्यानुरूपभागवतीतन्वादिप्रदानचतुरं च ब्रह्म जगन्निमित्तमस्ति। [7]निरस्तसमस्तोपप्लवकलंकनिरतिशयानंदपरिपूर्णत्वमिह नित्यतृप्तत्वम्। [8]अत एवानंदो ब्रह्मेति श्रूयते।'यः खल्व-

---

१ उत्तरमीमांसायां। २ श्रुतं प्रत्येकं तेपां ब्रह्मत्वश्रवणं तस्य हान्यादि। ३ आनंदादीनां। ४ अतः आनंदादीनां ब्रह्मत्वे विकल्पसमुच्चयोभयपक्षाभ्यां समागतब्रह्मानेकत्वप्रसंगात् ब्रह्मत्वासंभवप्रसंगाच्च। सर्वथापि जन्मादिकृत्यस्य ब्रह्मणा सह संयोगाभावेनापि। ५ नारायणतत्वे एव। ६ सर्वज्ञेन। ७ निरस्तो विनष्टः समस्तोपप्लवरूपः सकलदोषरूपः कलंको लांछनं यस्मात्तथाभूतो निरतिशयोऽतिशयवर्जितो य आनंदस्तेन परिपूर्णत्वमिह ब्रह्मणि। ८ अत एवानंदस्य सर्वथा निर्दोषब्रह्मधर्मत्वम्।

न्योंतर आत्मानंदमय' इति प्रस्तुत्य 'सैपानंदस्य मीमांसा भवति' इत्यारभ्याभ्यासा-न्निरतिशयशिरस्कत्वेन स एको ब्रह्मण आनंद इति निरूपितः। परब्रह्मधर्मत्वेन च स एवानंदो ब्रह्मत्युक्तः, अतो ब्रह्मत्वेनोपचर्यते। तादृग्निजानंदभोगरसिकं ब्रह्म-नित्यतृप्तत्वमित्यभिधीयते। आनंदमयस्य परब्रह्मणः स्वत एव निजैकानंदानुभवो न तु साधनांतरतस्तदनुभवः। तथाहि सूत्रश्रुतिस्मृतिकाराः—'आनंदमयोऽभ्यासा-दि'ति, 'तस्माद्वा एतस्माद्विज्ञानमयादन्योंतर आत्मानंदमयः, स वा एप पुरुपविध एवेति विज्ञानमयात् क्षेत्रज्ञवृंदादन्यो वस्त्वंतरमित्यर्थः। पुरुपस्य द्विभुजनरस्य विधा ज्ञानेंद्रियकर्मेंद्रियरूपप्रकारा इव विधा—अवयवप्रकारा यस्य स पुरुपविध इत्यर्थ-निरुक्तिः। 'निर्दोपपूर्णगुणविग्रह आत्मतंत्रो निश्चेतनात्मकशरीरगुणैश्च हीनः, आनंद-मात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मेति, 'केवलानुभवानंद-स्वरूपः सर्वबुद्धिदृगिति, 'यः स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्य' इति। एवं निरपेक्ष-साधनं पुरुपविग्रहं परब्रह्मानवधिकातिशयं स्वरूपानंदमनुभवत्, अतो नित्यतृप्तम्। न तस्य कदापि बाह्यसांसारिकसुखलवापेक्षा भवतीत्यर्थः। ननु 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः, स वेत्ति वेद्यं नहि तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुपं पुराणम् इति, निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनमित्यादिवाक्यैः परब्रह्म निराकारमेवेत्युक्तम्; इह तु तस्य स वा एप पुरुपविध इत्यादिवाक्यैः साकारत्वं कथ-मुच्यते, इति चेच्छृणु, यतः पाणिपादकर्णरहिततयापि साकारस्य सर्पस्य ग्रहणादयो हस्तादिव्यापारा मुखोरोनेत्रैः संति, तथा चक्षूरहिततयापि तथाविधाया लज्जालुवल्ल्या दर्शनरूपश्चक्षुर्व्यापारो भवति। अतः परब्रह्मणोऽपाणिपादादिविशेपणवृंदं साकारत्व-प्रतिपादनपरमेव बोध्यम्, नहि निराकारत्वप्रतिपादनपरम्; तथात्वे सति ब्रह्म सर्पाकारं वा वल्ल्याकारं वा? कथंभूतं ब्रह्मेति विकल्परूपकलहे प्राप्ते ब्रूमः—श्रुत्युत्त-रार्द्धेन स वेत्तीति; सः परब्रह्मसंज्ञो हरिः स्वेतरजीवेश्वरप्रकृतिपुरुपकालाक्षरब्रह्म तत्स्थमुक्तकोटिवस्तुमात्ररूपं वेद्यं स्वं चापि वेत्ति; तस्य परब्रह्मणः वेत्ता स्वोक्तज्ञान-प्राप्तं नरं विना स्वेतरो ज्ञाता नास्ति; पुनस्तमेव विशिनष्टि—अग्र्यमादिभूतं पुराण-मनादिसिद्धं पुरुपं दिव्याप्राकृतानाद्यवयवयुतपुरुपाकारं तं परब्रह्मसंज्ञं हरिमाहुर्मुनयः। एवमनया श्रुत्योदितस्य पुरुपाकारब्रह्मणोऽपाणिपादादिविशेपणवृंदं त्वप्राकृतकर-पादाद्यंगयुतदिव्यविग्रहबोधनपरम्, नहि सर्पवल्ल्याकारत्वबोधनपरमिति श्रुतितात्प-

१ तस्य निजैकानंदस्यानुभवः। २ चरणादारभ्य शिरःपर्यंतस्वमूर्तौ। ३ ब्रह्मणः। ४ प्रकरणे तु। ५ ब्रह्मणः।

र्थोर्थः। निष्कलमिति श्रुतिस्तु तस्य ब्रह्मणो निष्कलादिविशेषणैर्विभागशून्यत्वं प्राकृतव्यापारविधुरतयाऽप्राकृतव्यापारवत्त्वं च निर्दोषत्वं च मायातीतत्वं च बोधयति; इत्थंभूते परब्रह्मणि नित्यतृप्तिरस्ति। स्वतःसिद्धनिरतिशयज्ञानवत्त्वमनादिबोधत्वम्। यद्ब्रह्मणः स्वरूपानंदानुभवसाधनमंतःकरणज्ञानं तत्तस्यानादिसिद्धमेव; अतोऽनादिबोधं ब्रह्म। तस्य ब्रह्मणः संसारनिवर्तकस्य ज्ञानस्यानादिसिद्धत्वात् नित्यनिवृत्तसंसारदोषं ब्रह्म शान्तिसमृद्धममृतमिति श्रूयते। अन्यपेक्ष्यताकार्पण्यरहितत्वेन स्ववशीकृतस्वेतरसकलवस्तुत्वं स्वातंत्र्यम्। 'ज्ञाज्ञौ द्वावजावीशानीशौ भोक्ता भोग्यं प्रेरितारं च मत्वा, विद्याविद्ये ईशते यस्तु सोऽन्य'—इत्यादिषु ब्रह्मणश्चेतनाचेतनप्रपंचप्रेरकत्वेन स्वतंत्रत्वं सिद्धम्; सर्वत्र परब्रह्मणः स्वतंत्रत्वेन निखिलकर्तृत्वसिद्धिः। सर्वत्र स्वभावसिद्धं त्रैकालिकज्ञानात्मकदृष्टिमत्त्वं हि नित्यमलुप्तदृष्टित्वम्। तथाहि श्रूयते 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः' इति, स वेत्ति वेद्यमित्यादिवचनैः सर्वावस्थावस्थितसकलचेतनाचेतनवस्तुषु संकुचितविकसितांतर्यामिशक्त्या व्यापकत्वात् तेषां यथार्हकर्मफलप्रदाने परब्रह्मणः[1] सदादृष्टिप्रसारवत्त्वमस्ति; अतोऽनेन[2] नित्यालुप्तदृष्टित्वं सिद्धम्। अपरिमेयसामर्थ्ययुक्तत्वम्, यद्वा असंख्यशक्तिविशिष्टत्वमनंतशक्तित्वम्। असंख्याभिः प्रधानपुरुषब्रह्मशिवादिरूपाभिर्विभूतिभूतशक्तिभिर्जगत उत्पत्तिस्थितिसंहारकारकमपरिमेयसामर्थ्ययुतं परब्रह्म भवति। तथाहि श्रूयते 'परास्य[3] शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च' इति, अपरिमेयभग इति, अखिलशक्त्यवबोधक इति; स्मर्यते च—

'सर्गे तपोऽहमृषयो नव ये प्रजेशाः।
स्थाने च धर्ममखमन्वमरावनीशाः॥
अंते त्वधर्महरमन्युवशासुराद्या।
मायाविभूतय इमाः पुरुशक्तिभाजः'॥ इति;
'तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना।
सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि॥
तस्याः प्रधानपुरुषकोटयो जज्ञिरे मुने।
युज्यन्ते स्म प्रधानैस्ते पुरुषाश्चेच्छया प्रभोः॥
पुमांसो निदधुर्गर्भांस्तेषु तेभ्यश्च जज्ञिरे'॥

इत्येवमनंतशक्तिमत्त्वात्परब्रह्मणोऽसंख्यकोटिब्रह्मांडरूपप्रपंचसमवायिकारणत्वं

---

१ ब्रह्मणः। २ सदादृष्टिप्रसारवत्त्वेन। ३ परब्रह्मणः।

सिध्यति। महापुरुषपरब्रह्मसर्वस्रष्टृविष्णुहरिकृष्णसर्वात्मवासुदेवपरमात्मपुरुषोत्तममाधवादिमुख्यनामसहस्राधिकरणं नारायणमुनिसञ्ज्ञं[1] ब्रह्म वाच्यम्। 'अस्य जन्मस्थानगुणस्वभावचरित्रादिकृतासंख्यनामवाच्यत्वेऽपि मुख्यतया परभावमनुष्यभावयोरैक्यबोधकत्वात् महापुरुषादिनामवाच्यत्वेन नेतरतद्बोधकनामाभिधेयत्वाभावप्रसंगः[2]। पुरति सर्वेभ्यः अग्रे दिव्याप्राकृतावयविपुरुषाकारेण गच्छतीति पुरुषः। महांश्चासौ पुरुषश्च महापुरुषः। महत्त्वेन पूर्वसिद्धं महापुरुषशब्दवाच्यं ब्रह्म; पुरधातोरग्रगमनार्थत्वात् सर्वेभ्यः अग्रे वर्तमानं श्रेष्ठत्वविशिष्टं पुरुषाकारं ब्रह्मेति विज्ञायते। तथाहि श्रुतयः—'पूर्वमेवाहमिहासं तत्पुरुषस्य पुरुषत्वमिति, सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमिति, आत्मैवेदमग्र आसीत्पुरुषविध इति, वेदाहमेतं पुरुषं महान्तमिति। तथात्वे[3] सति सर्वेभ्यः पूर्वसिद्धत्वेन महापुरुषस्य ब्रह्मणः सर्वश्रेष्ठाप्राकृतपुरुषाकारत्वं सिध्यति। एवं ब्रह्म महापुरुषशब्दवाच्यं भवति। ब्रह्मशब्दवाच्यं ब्रह्मपुराभिधं महापुरुषस्थानं तत्स्थासंख्यमुक्तकोटिवृंदं चैतदुभयस्मात् परमन्यत् बृहि वृद्धाविति धात्वर्थवशात् बृहत्वादिसकलगुणगणविशिष्टं ब्रह्म परब्रह्मशब्देन प्रतिपाद्यते। अक्षरात् परतः पर इत्यक्षरशब्दवाच्याद् ब्रह्मणोऽन्यत् परब्रह्मशब्दवाच्यं ब्रह्म श्रूयते। दिव्याप्राकृतविग्रहेण स्वब्रह्मपुरस्थानस्थं सत् परब्रह्म विश्वोत्पत्तिस्थित्यवस्थयोर्विकसितांतर्यामिशक्त्या विश्वप्रवेशनशीलत्वाद्विभक्तनामरूपतत्परिरक्षितस्थूलचेतनाचेतनवस्तुशरीरकमुपादानकारणं सर्वस्रष्टृविष्णुशब्दवाच्यं भवति। तथाहि श्रूयते—'स इमांल्लोकानसृजदिति, तत्सृष्ट्वा तदनुप्राविशदिति, बहु स्यामिति, स्वधामस्थं यत्तत् हरिशब्देन हृञ् हरणे इति धात्वर्थवशात् प्रलयावस्थायां संकुचितांतर्यामिशक्त्या चेतनाचेतनस्थूलनामरूपविभागसंहरणशीलत्वात्सूक्ष्मतां प्रापितनामरूपविभागानर्हचेतनाचेतनवस्तुशरीरकं सकलसंहर्तृ ब्रह्म प्रतिपाद्यते। तस्मादुपसंहर्त्रे[4] महाग्रासाय वै नमः, यस्य ब्रह्म च क्षत्रं च उभे भवत ओदन इति सर्वसंहर्तृ ब्रह्म श्रूयते। निरुपाधिकपरमानंदभूमित्वात् कृष्णशब्दवाच्यं ब्रह्म भवति। तथाहि श्रूयते—

' कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते " ॥ इति

---

१ नारायणमुनिसंज्ञस्य ब्रह्मणः। २ इतराणि महापुरुषादिनामभ्यो भिन्नानि यानि तस्य परब्रह्मणो बोधकनामानि तैरभिधेयत्वाभावप्रसंगः। ३ एवं श्रुतिभिर्निर्णीते सति। ४ तेन परब्रह्मणा।

शरणागतसकलजनानेकविधपीडाहारकत्वेन तेषामनवधिकातिशयानंदोत्पादकभूमित्वात् हरिकृष्णेत्येकशब्दवाच्यं ब्रह्म विज्ञायते ।

'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' ॥

इति स्मरणात् 'कृषिर्भूवाचकः शब्द इति, 'तमात्मस्थं येऽनुपश्यंति धीरास्तेषां शान्तिः शाश्वती नेतरेषामि'त्यादिश्रवणाच्च सर्वेषां चेतनाचेतनानामंतरात्मतया नियामकत्वात् सर्वात्मशब्दवाच्यं ब्रह्म विज्ञायते। 'यः पृथिव्यां तिष्ठन्निति, यः प्रकृतौ तिष्ठन्निति, यः आत्मनि तिष्ठन्नात्मनोंतरोयमात्मा न वेद, यस्यात्मा शरीरं य आत्मानमंतरोयमयति सत आत्मान्तर्याम्यमृत इति, योऽक्षरे तिष्ठन्नक्षरमंतरो यमक्षरो न वेद यस्याक्षरः शरीरं योऽक्षरमंतरोयमयति' इत्यादिकासु श्रुतिषु प्रतिपर्यायं पृथिव्यादिसकलचेतनाचेतनवस्तूनामात्मांतर्यामिशब्देनोच्चार्यमाणत्वादमृतशब्दाभिधेयं तद्ब्रह्म प्रतिपादितमिति। वासुदेवशब्दवाच्यं ब्रह्म, वसधातोर्निवासार्थत्वात् दिवुधातोः क्रीडाद्यर्थत्वाच्च सर्वावस्थावस्थितसकलचेतनाचेतनेष्वंतर्यामितया यथार्हकर्मफलप्रदानाय निवसत् सत् दिव्यविग्रहेण ब्रह्मपुरे स्वयं द्योतमानं तत्रावस्थितासंख्यस्वभक्तमुक्तकोटिभिः साकं क्रीडत् मोदमानं च वर्त्तते; वसुदेवपुत्रत्वाद्वा वासुदेवशब्दाभिधेयं ब्रह्म विज्ञायते । तथाहि श्रूयते 'ईशावास्यमिदं सर्वमिति, दिव्ये ब्रह्मपुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठित इति, स्वभक्तेभ्यो रमते स मे सर्वस्वमिति । स्मर्यते च—

'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते' ॥ इति
स वासुदेवः प्रकृतौ पुंसि कार्येषु चैतयोः ।
अन्वितश्च पृथक् चास्ते सर्वाधीशः स्वधामनि ॥
व्याप्य स्वांशैरिमांल्लोकान् यथाग्निवरुणादयः ।
स्वस्त्यासते स्वस्वलोके तथैष भगवान्मुने ' ॥

इति तदेव ब्रह्म सर्वभजनीयत्वेन विज्ञायते ।

'न वासुदेवात्परमस्ति पावनं न वासुदेवात्परमस्ति मंगलम् ।
न वासुदेवात्परमस्ति दैवतं न वासुदेवात्परमस्ति वांछितम् ॥
यन्नामधेयं सकृदप्यबुद्ध्या देहावसानेऽपि गृणाति योऽत्र ।
स पुल्कसोऽप्याशु भवप्रवाहाद्विमुच्यते तं भज वासुदेवम्' ॥

इत्यादिस्मरणात् आत्मशब्दवाच्येभ्यो जीवेश्वराक्षराख्यब्रह्मभ्यः श्रेष्ठत्वेन वर्तमानं परमात्मशब्दवाच्यं ब्रह्म विज्ञायते । तथाहि स्मर्यते—

'परमात्मा च सर्वेषामाधारः पुरुषोत्तमः ॥
स विष्णुनामा वेदेषु वेदान्तेषु च गीयते' ॥ इति

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति, ब्रह्मेति परमात्मेति भगवानिति शब्द्यत इति पुरुषोत्तमशब्देन क्षराक्षरशब्दवाच्याभ्यां बद्धमुक्तपुरुषसमूहाभ्यां स्वरूपस्वभावगुणविभूतित उत्कृष्टतमं दिव्याप्राकृतविग्रहं ब्रह्माभिधीयते । तथाहि स्मर्यते—

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' ॥ इति

'प्रकृतिपुरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्येति' लक्ष्मीपतित्वान्मधुकुलोत्पन्नत्वाद्वा मधुदैत्यघातकत्वाद्वा सर्वस्वामित्वेन तस्य धवाभावाद्वा माधवशब्दाभिधेयं ब्रह्म विज्ञायते । एवं परभावमनुष्यभावद्योतकैः सहस्रनामभिस्तदितरैरसंख्यनामभिश्चापि स्वाभाविकानंदजनकमस्पृष्टाशेषदोषतया कल्याणैकतानतया च सकलमंगलाधारतया च नारायणतत्त्वं यदवगम्यते तत्सततांतर्यामिशक्त्या सर्वावस्थावस्थितसकलचेतनाचेतनवस्तुशरीरकत्वात् दिव्यविग्रहेण ब्रह्मपुरे ततः पृथक् स्थितत्वाच्च जगत उपादानकारणं निमित्तकारणं च भवति । एवमुक्तस्वभाववत्येतादृशमहिम्नि तस्मिन्सकलजगज्जन्मादिकारणत्वं भवति । एतादृशमहत्त्वात्तद्ब्रह्मेत्यभिधीयते; तदेव नारायणशब्दवाच्यमानंदादिधर्माश्रयतया सिद्धम्; अत आनंदादीनां विकल्पादिर्चिता निरर्थका। अत्र सूत्रे दिव्यविग्रहं ब्रह्मपुरे निमित्तकारणतया सदा वर्तमानं सत् स्वेच्छया प्रलये स्वप्रकाशरूपया संकुचितांतर्यामिशक्त्या सूक्ष्मचिदचिद्वस्तुविशिष्टं ब्रह्म उपादानकारणं सृष्टिस्थित्यवस्थयोः स्वप्रकाशरूपया विकसितांतर्यामिशक्त्या स्थूलचिदचिद्वस्तुविशिष्टं तत् कार्यं भवति। अतो जगज्जन्मादिलक्षणं ब्रह्मेति सिद्धान्तोऽस्ति। ननु दिव्यमनोहरमूर्तेर्हरेरंतर्यामिशक्त्या सह सर्वावस्थावस्थितचेतनाचेतनानां शरीरशरीरिभावेन विशिष्टत्वमुक्तं दिव्यावयविपरब्रह्मणा सह कुतो नोक्तमिति चेत्तत्रोच्यते—दिव्यावयविहरिसंबंधेन तु बद्धचेतनानां[1] शास्त्रेषु मायाकर्मनिवर्तनरूपमोक्षोक्तेस्तेषां[2] तदंतर्यामिशक्तिसंबंधेन मोक्षाभावोक्तेश्च तया[3] सह संयोग उक्तः; अन्यथा 'तदरयोपि ययुः स्मरणात् प्रिय

१ बद्धचेतनानाम् । २ तस्य हरेरंतर्यामि । ३ अंतर्यामिशक्त्या ।

उरगेन्द्रभोगभुजदंडविपक्तधिय इति, तमेव परमात्मानं जारबुद्ध्यापि संगताः, जहुर्गुणमयं देहमिति, सता सौम्य तदा संपन्नो भवति सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यादिशास्त्रविरोधापत्तेः। लक्षणप्रमाणाधीना हि वस्तुसिद्धिः, जगत्कारणं ब्रह्म किं प्रमाणकमित्यत आह—

## शास्त्रयोनित्वात् ॥ ३ ॥

यतः यस्य शास्त्रं योनिः प्रमाणं लक्षकमिति यावत्, अत एव शास्त्रगम्यजगज्जन्मादिलक्षणं ब्रह्म भवतीति शेषः। अत्र[1] जगत्कारणं ब्रह्म शास्त्रैकगम्यं उत प्रमाणान्तरेणापि गम्यमिति संदेहः। जगदिदं सावयवं कार्यमेव। [2]तच्च वैचित्र्यगर्भितत्वेन [3]स्वोचितकर्तृकमस्तीति कश्चित् सर्वज्ञत्वादिमान कर्ता[4] कल्पनीयः। [5]नासौ शास्त्रैकगम्य इति नास्मिन्कर्तरि वेदादिशास्त्रस्य प्रामाण्यम्। शास्त्रप्रमाणैरप्यप्राप्तविषयत्वादिति पूर्वः पक्षः। सिद्धांतस्तु जगत्कारणं ब्रह्म वेदान्तशास्त्रैकगम्यम्; नावेदविन्मनुते तं बृहतमित्यादिषु वेदान्तशास्त्रमंतरेण ब्रह्मणो बोधासंभवसंश्रवणात्। पूर्वपक्षे यदुक्तं सावयवत्वात् कार्यत्वसिद्धौ प्रपंचस्य कर्ता समुचितः कल्प्य एक इति तदसत्। विचित्ररचनस्य गोपुरप्रासादादेर्बहुकर्तृत्वदर्शनात्। तथा च नानुमानेन एककर्तृकत्वसिद्धिः; बहुकर्तृसाध्यस्य रथगोपुरादेरपि मुख्यस्त्वेक एव कर्तास्तीति युक्तिबलेन तत्सिद्धौ सत्यामपि तस्य पुरुषान्तरव्यापारवश्यादिप्रसंगश्च। किंच अनुमानेन जगतो विलक्षणैककर्तृत्वसिद्धावपि निमित्तोपादानशक्तियुक्तैककर्तृकत्वसिद्धिर्नास्ति; [6]ततो वेदान्तशास्त्रैकगम्यं तत्प्रमाणं ब्रह्मेति सिद्धम्। अनेन सूत्रेण पूर्वाधिकरणप्रतिपादितजगत्कारणत्वोपयोगिसर्वज्ञत्वं ब्रह्मणः। शास्त्राणां योनित्वाद्वेदानां कारणत्वात्सिध्यतीत्यप्यर्थांतरं प्रतिपाद्यत इति केचिदाहुः। सूत्रस्य सूचनात्मकस्यार्थद्वयाभिधाने श्लेषकाव्यवद्वाक्यभेदादिदोषाभावादेकस्मिन्नपि सूत्रे पुनरधिकरणान्तरप्रस्तावः। [7]अस्यास्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद इत्यादिः श्रूयते विषयः। ब्रह्मणो वेदकर्तृत्वं युक्तं नवेति संदेहः। न युक्तमिति पूर्वः पक्षः। वाचा विरूप नित्ययेत्यादिकाया वाङ्नित्यत्वप्रतिपादनपरायाः श्रुतेर्विरोधात् वेदानां पुरुषाकृतिब्रह्मकार्यत्वे सति पुरुषाकृतेः कालविक्षिप्तप्रकृतिजन्यत्वात् पौरुषेयत्वेनाप्रामाण्यप्रसंगाच्च। तस्माद्ब्रह्मणो वेदकर्तृता कथमिति प्राप्ते ब्रूमः—

१ प्रकरणे। २ जगत्। ३ जगदुचित। ४ कर्ता। ५ अनुमानेनाप्युभयशक्तियुतैककर्तृकसिद्ध्यभावात्। ६ तत् वेदान्तशास्त्रं प्रमाणं स्वरूपमापकं यस्य तत्तथोक्तम्। ७ अधिकरणे। ८ प्रसंगः। ९ अधिकरणे। १० विरूपेति देवतासंबोधनम्।

युक्तमेव ब्रह्मणो वेदकर्तृत्वम् । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद' इत्यादिश्रुतेः निःश्वसितवद्वेदराशेरप्रयत्नेन ब्रह्मणः प्रादुर्भावावगमात् । तथाऽन्यत्र पुराणेषु सर्वासां विद्यानां पृथक्पृथग्मार्गाणां मुख्यकर्ता कविराजः साक्षान्नारायणमुनिः प्रतिपादितः । एवं तस्य सकलविद्यादिकर्तृत्वप्रतिपादनाच्च सृष्टेः प्राक् स्वात्मनि विलीनानां वेदानां पूर्वपूर्ववर्णानुक्रमानुरूपरचनया पुनः कर्ता भवति स्वतः सिद्धानादिसर्वज्ञत्वाद्यसंख्यगुणगणवानप्राकृतपुरुषाकृतिर्नारायणः । [1]अत एव वेदानामपौरुषेयत्वं नारायणकार्यत्वं चास्ति । येषामज्ञभावजनका रागद्वेषादयस्तेषां वचनमप्रमाणम्; निरस्तसमस्तदोषकलंकस्य निरु[2]पप्लवनिरतिशयज्ञानप्रत्यक्षानुभूयमानत्रैकालिकवस्तुमात्रस्य स्वतः प्रमाणस्य परमेश्वरस्य परमाप्तस्यावाप्तसमस्तकामस्य नारायणस्य परब्रह्मणो वचनं तु प्रमाणमेव भवति । अतः सर्ववस्त्ववभासकानां वेदानां नारायणकर्तृकतया नारायणस्य सर्वज्ञता निश्चीयते; तां विना त्वज्ञातं वस्तु वक्तुमशक्यत्वात् । यद्यपि सर्वगतस्य नारायणस्य सर्ववस्तुसंयोगेन सर्वज्ञत्वं सिध्यति, तथापि सकलवस्त्ववभासकानां वेदानां या तस्य प्रणेतृता सैवाधिक्यं दर्शयति । यथा दीपः स्वप्रभासंयुक्तेष्वपि रूपादिषु रूपमेव प्रकाशयति न रसादि, एवमन्ये वेदप्रणेतारोऽपि; तथा न नारायणः, किंतु स्वप्रकाशरूपांतर्यामिशक्तिसंयुक्तं सकलमपि प्रकाशयतीति । ननु नारायणस्य सर्वज्ञत्वं नाम वेदोक्तसकलपदार्थाभिज्ञत्वम्; तर्हि ब्रह्मादीनामपि वेदार्थवेदिनां सर्वज्ञत्वं सिद्धं किमत्र[3] वैषम्यमिति चेन्न; परतंत्रेभ्यस्तेभ्यस्तत्कर्तुर्[4]नारायणस्याधिकं ज्ञानबलस्वातंत्र्यादिकमस्ति । वेदादेः सम्यगर्थविदां हि विधिप्रभृतीनां तत्प्रणेतृत्वमात्रं दृश्यते नत्वधिकम् । ननु सर्वावभासकतया वेदनारायणयोः साम्यमिति चेन्न; वेदः सर्वार्थावभासकोपि न सर्वं मुख्यतः प्रकाशयति । किंतु किमपि लक्षणया, किमपि सामान्येन, किमपि विशेषेण; नारायणस्तु सर्वसाक्षी सर्वं प्रत्यक्षयतीति निगमनारायणयोरप्येतावद्वैषम्यमिष्यते । ननु नारायणस्यैव वेदकर्तृत्वमिति न नियमः । 'षड्होता वै भूत्वा प्रजापतिरिदं सर्वमसृजत ऋचो यजूंषि सामानि' इत्यादिश्रवणाद्धिरण्यगर्भादेरपि तत्कर्तृत्वावगम इति चेन्न; हिरण्यगर्भोत्पत्तेः प्रागपि वेदानां सद्भावात् । श्रूयते हि 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च

१ यतो वेदा दिव्याप्राकृतपुरुषाकृतिनारायणेन पूर्ववर्णानुक्रमानुरूपरचनया कृताः अत एव । २ निरुपप्लवं निर्दोषं निरतिशयमुपमातुमशक्यत्वादतिशयवर्जितं च यज्ज्ञानं तेन । ३ नारायणे ब्रह्मादिषु च । ४ वेदकर्तुः ।

प्रहिणोति तस्मा इति । स्मर्यते च–' जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यंति यत्सूरयः इति, मार्गति यत्ते मुखपद्मनीडैश्छंदःसुपर्णैर्ऋषयो विविक्त इति, वेदान्तकृद्वेदविदेव चाहमिति, यः सर्वदेवानामादिमस्य हिरण्यगर्भस्यापि कर्त्ता तस्मै सर्वान्वेदानुपदिशति स एव सर्वाधिको वेदकर्ता परमगुरुर्नारायणः । इत्थं सकलवेदकर्तृत्वं मुखाद्यवयववत्तो नारायणस्यैव सिद्धम् । वाचो नित्यत्वश्रुतिर्नारायणेन वेदानां पूर्वसन्द्भावानुवृत्त्या कृतत्वादविरुद्धा । अतो वेदानां हरिप्रणीतत्वं नित्यत्वं चाविरुद्धमेव । प्रथमाधिकरणे जिज्ञास्यतया प्रतिपादितस्य परब्रह्मणो नारायणस्य परिज्ञाने लक्षणापेक्षायां द्वितीयाधिकरणे लक्षणं जगज्जन्मादिनाऽभिहितम्; तस्मिन् किं प्रमाणमित्याकांक्षायां तृतीयाधिकरणेन वेदान्तशास्त्रस्य तद्विषये प्रामाण्यं तन्मूलत्वं च निरूपितम् । येन यद्वस्तु अव्यभिचारेण सिद्ध्यति तद्धि तस्य प्रमाणमुच्यते । वेदान्तवाक्यानां कथं वा ब्रह्मसाधकत्वमित्याकांक्षायां चतुर्थाधिकरणं प्रादुर्भावयति—

## तत्तु समन्वयात् ॥ ४ ॥

तच्छब्देन प्रासंगिकं ब्रह्मानुकृष्यते । तुशब्देन समस्तानि स्वोपबृंहकस्मृत्यादिसहितोपनिषत्पर्यायकवेदान्तवचनानि समुच्चीयंते; समन्वयशब्दवाच्यस्तात्पर्येण संबंधोऽभिधीयते । स्वोपबृंहकस्मृत्यादिसहितवेदान्तवाक्यानि यथार्थप्रामाण्यसंबंधात् तद् ब्रह्म लक्षयंतीति सूत्रार्थः । स्वोपबृंहकस्मृत्यादिवाक्यसहितानि ब्रह्मसंबंधबोधकानि समस्तवेदांतवचनान्यस्य विषयः । तेषां वाक्यानां ब्रह्मबोधकत्वं युक्तं नवेति संशयः । न युक्तमिति पूर्वः पक्षः । तथाहि सर्वत्र संबंधग्रहणसापेक्षं शब्दस्यार्थावबोधकत्वम्; शब्दार्थयोः संबंधज्ञानमंतरेण हि पुरुषस्य शब्दार्थप्रत्ययो न भवतिः संबंधज्ञानं च वृद्धव्यवहारसापेक्षम्; व्यवहारश्च कार्यैकगोचरः । तथाहि गामानय, गां बधानेति वृद्धवाक्यश्रवणानंतरं गवानयनादौ कर्मणि प्रवर्तमानं प्रयोज्यं पुरुषमवगम्य पार्श्वस्थस्तज्जिज्ञासुर्जन एवमवधारयति; तदेवावधारणं दर्शयति, सर्वथायं प्रयोज्यो जनः कार्यज्ञानानंतरमेव गवानयनादौ कर्मणि प्रवर्तते; सा च वृद्धव्यवहाराज्ज्ञाता कार्यावगतिरेतस्मादेव प्रयोजकवाक्यात् समुत्पन्ना; अन्यथा

१ परब्रह्मज्ञानार्थं जगज्जन्मादिरूपलक्षणकथने । २ परब्रह्मज्ञानार्थं जगज्जन्मादिरूपलक्षणकथने । ३ परब्रह्मणो वेदान्तशास्त्रकारणत्वम् । ४ लक्षणेन । ५ लक्षणं हि । ६ वस्तुनः । ७ यथार्थस्वरूपावसायित्वेन । ८ गवानयनबंधनम् । ९ गामानय बधानेत्येतद्रूपात् ।

कथमस्य प्रयोज्यजनस्यैव प्रयोजकवाक्यमात्रश्रवणसमनंतरं तस्मिन्कर्मणि प्रवृत्तिरिति ज्ञात्वा प्रयोजकवाक्यश्रवणानंतरं प्रयोज्यकृतगवानयनवंधनदर्शनात् कार्यविशेषं निश्चिनोति पार्श्वस्थः । एवं कृतकार्यार्थज्ञानादेव तत्र व्युत्पत्तिसंभवान्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यम् । किंच कार्यविशेषस्य जगतः कर्तृविशेषस्य ब्रह्मणश्चानुमानादप्यन्योन्यसिद्धिस्तथा सति कथमस्मिन् प्राप्तविषयाणामपि वेदान्तवाक्यानां प्रामाण्यम् । अथवा ब्रह्मज्ञानविधिपराण्येव वेदान्तवाक्यानि न ब्रह्मस्वरूपप्रतिपादनपराणि; उभयपरत्वे वाक्यभेदः स्यादतो वेदान्तवाक्यानां न ब्रह्मसाधकत्वमिति महाकलहे प्राप्ते तेषां ब्रह्मबोधकत्वं युक्तमिति सिद्धान्तः। वेदान्तवाक्यानां तात्पर्यलिंगसमन्वयेन ब्रह्मबोधसाधनसमर्थत्वात् । यदुक्तं कृतकार्यार्थज्ञाने सत्येव व्युत्पत्तिसंभवान्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यमिति तदसत्; पुत्रस्ते जात इति वाक्यस्य सिद्धेऽपि वस्तुनि प्रामाण्यदर्शनात् । वृद्धव्यवहारेऽपि व्युत्पत्तिं लब्धुमिच्छुः स्वप्रवृत्तिहेतुभूतायाः कार्यावगतेः सिद्धपदार्थज्ञानपूर्वत्वावगमात् प्रयोज्यवृद्धस्य प्रयोजकवाक्यं पदार्थज्ञानमुत्पादयतीति निश्चिनोति। ततः सिद्धार्थेष्वपि शब्देनाभिधाननिश्चयः । अथवा किमिदं वृद्धव्यवहारेण । व्युत्पत्तेः प्रकारान्तरेणापि सिद्धत्वात् । तथाहि बाला मात्रादिभिः शिशुपशुप्रभृतीनर्थानंगुल्यादिना निर्दिश्य तत्तच्छब्दांस्तेषु तेष्वर्थेषु प्रयुंजानैर्बहुशः शिक्षितास्तेषु तेष्वर्थेषु व्युत्पद्यंते । काव्यनाटकानभिज्ञाः पुरुषास्तदभिज्ञपुरुषसमीपमेत्य पदविच्छेदं कृत्वाऽस्य शब्दस्यायमर्थ इति सर्वशब्दानामर्थमवगच्छंति । अतः सिद्धार्थेऽपि व्युत्पत्तिसंभवात्तत्र शब्दस्य प्रामाण्यमस्ति; ततो वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यम् । पूर्वपक्षे यदुक्तं जगतः कार्यविशेषस्य कर्तृविशेषस्य ब्रह्मणश्चानुमानादप्यन्योन्यसिद्धिरिति तन्न संभवति । विचित्ररचनस्य रथगोपुरप्रासादादेरनेककर्तृकत्वदर्शनात् । अनुमानेनाप्येककर्तृकत्वसाधनायोगस्यास्य जगतो हेत्वंतरबलादेकस्मिन्नपि कर्तरि सिद्धे तस्य पुरुषांतरव्यापारवश्यत्वादिप्राप्तेः पूर्वमुक्तत्वात् । अतो नानुमानगम्यं ब्रह्म । किंच श्रुत्यानुगुण्यादनुमानमपि ब्रह्मणि प्रमाणं भवतु नाम; यत्र येषां वाक्यानां तात्पर्यं तत्रै

१ वेदान्तवाक्यस्य । २ ज्ञानम् । ३ पदार्थज्ञानोत्पत्तौ । ४ उक्तप्रकारात्सकाशात् । ५ कृतकार्यार्थज्ञानादेव व्युत्पत्तिसंभवेऽप्युक्तरीत्या सिद्धार्थेऽपि शब्दप्रामाण्यात् । ६ हेत्वंतरबलं च किं एकस्मिन्नेव पुरुषे प्रासादनिर्माणोपयोगिसर्वसाधननिष्पादकशक्तित्वम् । ७ एककर्तुः । ८ शास्त्रयोनित्वादित्यधिकरणव्याख्यानस्यादिमपक्षे उक्तत्वात् । ९ श्रुतिर्हि यतो वा इमानि भूतानीत्यादिका । १० प्रदेशे । ११ प्रदेशे ।

हि तेषां प्रामाण्यम् , न स्वतात्पर्यं विना सर्वत्र सर्वेषां वेदान्तवाक्यानां प्रामाण्यमस्ति। ब्रह्मणि तात्पर्यनिर्णायकानि कानि लिंगानीति चेत् उपक्रमादीनि लिंगानि। वृद्धास्तथा पठंति–'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् , अर्थवादोपपत्ती च लिंगं तात्पर्य-निर्णय'इति; तदिहोपक्रमादिभिर्लिंगैर्वेदान्तवाक्यानां ब्रह्मणि तात्पर्यं निश्चीयते। य उपक्रमादिभिस्तात्पर्यनिर्णयस्तदेव स्वोपबृंहकस्मृत्यादिसहितानां वेदान्तवचनानां श्रवणमिति निगद्यते; तथाभियुक्तवचनम्–

'अज्ञानप्रभवं दुःखं ज्ञानं तस्य विनाशकम् ।
सर्ववेदान्तवाक्यानां श्रवणं ज्ञानदं भवेत् ॥
श्रवणं नाम वचसां वैदिकानां हरौ परे ।
प्रारंभप्रभृतिचिन्हैः कृष्णे तात्पर्यनिर्णयः' ॥ इति

उपक्रमोपसंहारौ वेदान्तवाक्यानां तात्पर्यनिर्णये ब्रह्मनामके नारायणे एकं चिन्हम्। तत्र तात्पर्यं नाम यथार्थस्वरूपावसायित्वमिति। उपक्रमोपसंहारौ 'यः सर्वज्ञः सर्ववि-द्यस्य ज्ञानमयं तप' इत्युपक्रमः, तदेतत्सत्यमित्युपसंहारः, सदेव सौम्येदमग्र आसी-दित्युपक्रमः, तत्त्वमसि–तस्य सद्रूपस्य परब्रह्मण उपासकभूतस्त्वमसीत्युपसंहारः, सत्पुंडरीकनयनं मेघाभं वैद्युतांबरं द्विभुजं ज्ञानमुद्राढ्यमित्युपक्रमः, चिंतयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः इत्युपसंहारः, अथ पुरुषो ह वै नारायणोऽकामयत-प्रजाः सृजा इत्युपक्रमः, नारायणे प्रलीयंते इत्युपसंहारः । इत्थमन्यत्रा-पीक्षणीयम्। अथ 'नित्यो देव एको नारायणो ब्रह्मा च नारायण' इत्यारभ्य नारायणोऽतर्बहिश्च नारायणो नारायण एवेदं सर्वं यद्भूतं च यच्च भव्यम् ; अथ नित्यो निष्कलंको निराख्यातो निर्विकल्पो निरंजनः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् ; य एवं वेद इत्यंतोऽभ्यासश्च । अपूर्वता वेदेतरप्रमाणाप्रा-प्तत्वं च फलं ब्रह्मज्ञानं चार्थवादो जगत्सृष्टिस्थितिप्रध्वंसादयश्चोपपत्तिर्विरोधा-भावः सर्वज्ञतादिसंपत्तिर्वा। एतैर्लिंगैर्ब्रह्मणि तात्पर्यमवगंतव्यं वेदान्तवाक्यानाम्। ये[1] वेदान्तास्ते न केवलब्रह्मपराः[2] किंतु 'आत्मा वा अरे द्रष्टव्यः' इत्यादिषु तज्ज्ञानवि-धिपरा अपि ज्ञायंते। उभयपरत्वे वाक्यभेदप्रसंग इति यदुक्तं तत्र रूपप्रत्यायकेन[3] चक्षुषा यथा द्रव्यस्यापि सिद्धिस्तथा विधिपरैरपि[4] वेदान्तैर्ब्रह्मसिद्धिरिति[5] नोभयपर-

---

१ पूर्वपक्षे यदुक्तमथवा ब्रह्मज्ञानविधिपराणीत्यारभ्य वेदांतवाक्यानां न ब्रह्मसाधकत्वमिति तत्र तत्पक्षं वेदवाक्यैः सम्यग्निरस्य कथंचित्तदुपपादयति य इत्यादिना । २ ब्रह्मस्वरूपपराः । ३ रूपबोधकेन । ४ ब्रह्मज्ञानविधिपरैः । ५ ब्रह्मस्वरूपसिद्धिः ।

त्वे विरोधः। शाब्दं हि ब्रह्मज्ञानं तद्ब्रह्मवाचिशब्दादेव प्राप्तं, तद्विधिना किं प्रयोजनमिति चेत् ज्ञानप्राप्तावपि मंत्रादिष्विव विधेरविरोधः। तथाहि यथा द्रव्यदेवतादिप्रकाशकेषु मंत्रेष्वधीयमानेषु द्रव्यादिज्ञाने जातेऽपि पुनरनुष्ठानकाले मंत्रैरनुस्मर्तव्यं पदार्थं प्रयोगविधिः तज्ज्ञानानंतरमनुष्ठापयति तथात्रापि। इहोत्पत्तिविनियोगाधिकाराणां विधेरभावात् प्रयोगविध्यसंभव इति न शंकनीयम्; ज्ञानोत्पत्तिविधेरध्याहारेण सिद्धौ प्रकरणवशात् शमादिकं च नियोजयन् आत्मानं पश्येदिति विनियोगविधिरुपपद्यते। ततश्च रात्रिसत्रन्यायेन 'ज्ञात्वा देवं मुच्यते सर्वपापैः' इत्याद्यर्थवादावगतमोक्षकामरूपोऽधिकारः कल्पनीयो भवति। अतो मोक्षकामवानधिकारी शमादियुक्तो ब्रह्मज्ञानं संपादयेदिति प्रयोगविधिलाभः। ननु ब्रह्मणि 'यतो वा इमानि' इति वाक्यादेव ज्ञाते तज्ज्ञानविधिरप्रयोजकः, तत्प्रयोजनस्य पूर्वज्ञानादेव संभवादिति चेन्न; वाक्यात् परोक्षत्वेन ज्ञाते ब्रह्मणि तत्साक्षात्काराय ज्ञानविधेरुपपत्तेः। कथमुभयोर्भेद इति चेत्तत्राह-यच्छब्दजन्यं ज्ञानं न तत्साक्षात्कारहेतुः, किंतु उपासनानुकूलजातं ज्ञानमेव ब्रह्मसाक्षात्कारजनकम्। तथाहि श्रूयते 'ध्यात्वा मुनिर्गच्छति भूतयोनिमिति, 'तमेव विद्वानमृत इह भवतीति, 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनायेति, ध्याननिर्मथनादेव पाशं दहति पंडितः' इत्यादिषु कः परमो देवः, कुतो मृत्युर्बिभेति, कस्य विज्ञानेनाखिलं विज्ञातं भवति, तदुहोवाच ब्राह्मणः कृष्णो वै परमं दैवतं, गोविन्दान्मृत्युर्बिभेति, गोपीजनवल्लभज्ञानेन तज्ज्ञानं भवतीति ज्ञात्वा देवं मुच्यते सर्वपापैरित्यादिषु। तथाहि–

'श्रोतव्यः श्रुतिवाक्येभ्यो मंतव्यश्चोपपत्तिभिः।
ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः'॥

इत्यत्र श्रवणमननजन्यज्ञानाविनाभूतं निदिध्यासनं ब्रह्मणः साक्षात्कारे निमित्तं स्मर्यते। अत उपासनरूपज्ञानं मोक्षफलं विदधाति। 'तमात्मस्थं येऽनुपश्यंति

---

१ तस्य ब्रह्मज्ञानस्य विधिना। २ तस्य द्रव्यादेर्ज्ञानानंतरम्। ३ ज्ञानप्राप्तौ। ४ कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः, आग्नेयोऽष्टाकपालो भवतीत्यादिः। सेतिकर्तव्यताकस्य करणस्य फलसंबंधबोधको विधिरधिकारविधिः, दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिः। अंगसंबंधबोधको विधिर्विनियोगविधिः, व्रीहिभिर्यजेत, समिधो यजतीत्यादिः। सांगप्रधानकर्मप्रयोगैक्यबोधकः पूर्वोक्तविधित्रयमेलनरूपो विधिः प्रयोगविधिः। ५ तस्य ब्रह्मणो ज्ञानविधिः। ६ तस्य ब्रह्मज्ञानविधेर्यत्प्रयोजनं तस्य। ७ ज्ञानात्पूर्वमेव। ८ परोक्षसाक्षात्कारयोः।

धीरास्तेषां शान्तिः शाश्वती नेतरेषामिति, तज्जलानिति, शान्त उपासीतेति, प्राचीनयोग्योपास्वेत्यादिषु, च तथा ब्रह्मविदाप्नोति परमित्यादिषु ब्रह्मस्वरूपोपासना तत्फलादिकं चोपदिश्यते; अन्यथा सत्पुंडरीकनयनत्वादिविशेषणविशिष्टेन परब्रह्मणा सार्क कथं समस्तकामोपलब्धिः फलम् ?। तादृशं ब्रह्म किं तत्राह–

' सत्पुंडरीकनयनं मेघाभं वैद्युतांबरम् ।
द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ॥
गोपगोपीगवावीतं सुरद्रुमतलाश्रयम् ।
दिव्यालंकरणोपेतं रत्नपंकजमध्यगम् ॥
कालिंदीजलकल्लोलसंगिमारुतसेवितम् ।
चिंतयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः ' इति ॥

इत्थं कृष्णशब्दवाच्यं नारायणमुनिसंज्ञं परब्रह्म उपक्रमादितात्पर्यलिंगैर्निरूप्यते; यो वेद निहितं गुहायामिति प्राचीनयोग्योपास्वेति ज्ञानाविनाभूतं तदुपासनं[1] विधीयते; सर्वान्कामानित्यादिषु सकलकामावाप्तिर्ब्रह्मणा सहोपासकानामवगम्यते; अतो निष्कामलिंगधर्मोपेतो[2] निषिद्धकाम्यकर्मरहितो यथाश्रुतिस्मृतिचोदितकर्मानुष्ठानसंपन्नचित्तशुद्धिः शमदमादिसाधनसंपन्नत्वात्सद्गुर्वनुग्राह्यः कृष्णशब्दवाच्यनारायणपरमभक्तियुत इत्थंभूतो मुमुक्षुः श्रुतिसारेभ्यः कृष्णाभिधेयं नारायणरूपं परं ब्रह्म विदित्वा तच्चिंतयन्मुक्तो भवतीति ज्ञानोपासनविधिः संपन्नः। अतो नारायणशब्दवाच्यं कृष्णाख्यं परं ब्रह्मैव संसृतिमोक्षकांक्षिभिश्चिंतनीयं ज्ञातव्यं चेति । एवं तात्पर्यलिंगसमन्वयेन ब्रह्मपरवेदान्तास्तदुपासनविधिपराश्चेत्यविरोधः। उक्तस्य ब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिमाशंक्य[3] तदुत्तरेण परब्रह्माकृतिमप्याह–

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

'सदेव सोम्येदमग्रआसीत्, एकमेवाद्वितीयम्, तदैक्षत बहु स्यां प्रजायेयेत्यादिवाक्यवृंदं श्रूयतेऽस्यविषयश्छांदोग्ये, 'आत्मैवेदमग्र आसीत् पुरुषविध इति बृहदारण्ये च, स ऐक्षतेत्यन्यत्र च। इह पूर्वभावितया सकलस्य प्रपंचस्य कारणत्वेन श्रूयमाणं सदिति वस्तु ब्रह्म वा प्रधानं वेति संदेहः। प्रधानस्यैव जगत्कारणत्वं युक्तम्; 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां तनयंतीं सरूपामि'ति श्रुत्यन्तरे श्रवणात्।

---

१ तस्य ब्रह्मण उपासनम्। २ निष्कामं काम्यकर्मरहितं लिंगं स्वरूपं यस्य तथाभूतो यो धर्मस्तेनोपेतः। ३ लक्ष्ये लक्षणस्याप्रवृत्तिरव्याप्तिः, अलक्ष्ये लक्षणस्य प्रवृत्तिरतिव्याप्तिः।

अत्र हि बहुप्रजाजनकत्वं लोहितादिवर्णानुमितरजःसत्वतमोरूपायाः सांख्योक्तप्रकृतेरवगम्यते; तदा[1]नुगुण्येनात्रा[2]पि सच्छब्दवाच्यं जगत्कारणं प्रधानमेव; रजःसत्वयोगात् अस्य क्रियाज्ञानशक्तिसंबंधोऽपि युज्यते, येन[3] जगत्कारणत्वसिद्धिः, अचेतनस्य प्रधानस्य जगदाकारपरिणामो युक्तः, न चेतनस्य नारायणस्य निर्विकारस्य कारणत्वम्, परिणामस्य तु विकृतिरूपत्वात्। तत एव न्यायतः श्रुत्या[4] च प्रधानमेव जगत्कारणं सत्पदवाच्यमिति प्राप्ते ब्रूमः—अशब्दमानुमानिकं प्रधानं न जगत्कारणं सच्छब्दवाच्यं वस्तु; अपि तु परमचेतनं ब्रह्मैव जगत्कारणम्; यतो वेदान्तेषु ईक्षतिश्रवणात्। ‘तदैक्षत बहु स्यां प्रजायेये’ति नह्यचेतने प्रधाने चेतनधर्म ईक्षतिः संभवति। यदुक्तं बह्वीं प्रजां जनयंतीमिति श्रवणात् सांख्यप्रकृतेरत्र[5] जगत्कारणत्वमिति तदसंगतम्। चमसवदविशेषादित्यधिकरणे हि जगत्कर्तृनारायण[6]कारणभूताया एव प्रकृतेर्बहुप्रजाजनकत्वमित्युपपादयिष्यामः। रजःसत्वरूपतया क्रियाज्ञानशक्तिसंबंधः प्रधानस्येति यदुक्तं तदयुक्तम्; त्रिगुणात्मिकायाः प्रकृतेस्तमःपृथक्त्वेन रजःसत्वयोगाभावात्। न च तमःसंयुक्ते रजःसत्वयोरुद्रेके सति ज्ञानक्रियासंबंधः प्रधानस्येति वाच्यम्; सत्वरजस्तमसां साम्यावस्था प्रकृतिरित्यंगीकारात्। किंचाविकृतस्य नारायणस्य जगदाकारेण परिणाम इति यत्र कुत्रापि भणितं तदज्ञानविलसितं तर्हि ‘[8]तत्परिणामः कथमिति चेत्तत्रोत्तरम्—दिव्यविग्रहेण ब्रह्मपुरे सदा वर्तमानस्य नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुषु संकुचितांतर्यामिशक्त्या विशिष्टस्य नारायणस्य कारणत्वं नामरूपविभागार्हस्थूलचिदचिद्वस्तुषु विकसितांतर्यामिशक्त्या विशिष्टस्य कार्यत्वमिति वदतामस्माकं तत्प्र[9]संगभयाभावः। ननु सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिना सद्रूपं वस्तु निर्विशेषमेवावधारणादवगम्यते; कारणावस्थमेतत्कथं सूक्ष्मप्रपंचविशिष्टमित्युच्यते, इति चेन्न; सदेवेत्यवधारणे विशेषनिषेधो नास्ति; किंतु असद्वा इदमग्र आसीत् ततो वै सदजायतेति श्रुत्या असत्कारणत्वभ्रान्तिप्रसक्तिविद्यमानत्वादसद्वस्तुन एव कारणत्वनिषेधोऽस्ति। किंच सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यत्र न निर्विशेषत्वं ब्रह्मणः, तत्कथमित्यत्राह—आसीदिति हि क्रियाविशेषः

---

१ तस्या अजामेकामितिश्रुतेरानुगुण्येनानुसारत्वेन। २ सदेव सौम्येदमग्रआसीदित्यत्रापि। ३ उभयशक्तिसंबंधेन। ४ अजामेकामित्यादिरूपया। ५ सदेव सौम्येदमग्र आसीदित्यत्र। ६ नारायणेनोत्पादित। ७ अधिकरणे। ८ तस्य नारायणस्य परिणामः। ९ तस्य जगदाकारेण भगवत्परिणामस्य प्रसंगेन यद्भयं नीचोच्चयोनिजन्यसुखदुःखभोक्तृत्वादिभीतिस्तस्याभावः। १० सद्रूपं वस्तु।

अग्र इति कालविशेषः एकमेवेत्यवधारणं अधिष्ठात्रंतरनिषेधपरम्। अद्वितीयमिति जगदुपादानत्वमुच्यते; अतएव सर्वज्ञमनंतशक्तिविशेषं च परब्रह्मास्ति। कथं सर्वज्ञत्वसर्वशक्तित्वविशेषमंतरेण जगदुभयकारणत्वं ब्रह्मणो भवतिः अथवा प्रकृतिप्रत्ययात्मकस्य सत्पदस्य नैकवस्तुपरत्वं युक्तम्। प्रकृत्या प्रत्ययेन च संयुक्तस्य सत्पदस्यानेकवस्तुप्रतिपादनपरत्वात्। तथा वस्त्वनेकत्वे स्मृतिवचनानि–

'एको नारायणो देवः पूर्वसृष्टं स्वमायया।
संहृत्य कालकलया कल्पान्त इदमीश्वरः'॥
'एक एवाऽद्वितीयोऽभूदात्माधारोऽखिलाश्रय' इति।
'भगवानेक आसेदमग्र आत्मात्मनां विभुः' इति॥

एवं नारायणस्यैकत्वे आत्माधारत्वे च सत्यप्यखिलाश्रयत्वोक्त्या बहूनात्मनामात्मत्वोक्त्या च सः स्थूलसूक्ष्मभावस्थचिदचित्प्रपंचरूपे वस्तुनि प्रकाशरूपांतर्यामिशक्त्या विशिष्ट एव कार्ये कारणरूपः सत्पदविषय इति निर्णयः। अंतर्यामिशक्तिविवेचनमाह-सदा दिव्यपुरुषाकारेण स्वस्थानस्थो हरिः सततं चिदचिद्वस्तुव्याप्तां स्वांतर्यामिशक्तिं यदा स्वेच्छया संकोचयति तदा प्रलयः, यदा च तां बहु स्यामिति श्रुत्यभिहितप्रकारेण विकासयति तदा उत्पत्तिस्थितिकालौ स्त इति। अर्थांतरपक्षस्थेनानेन सूत्रेण पूर्वाधिकरणप्रतिपादितं शास्त्रकारणत्वं परब्रह्मणः ईक्षतेरित्यनेन नेत्रवत्त्वात् ना इत्यनेन नराकारत्वाच्च आशब्दमित्यनेनाऽऽसमंताद्भावेन श्रुतिस्मृतिवचनेषु निरूपितत्वात् सिध्यतीति प्रतिपाद्यते। अत्र पक्षे अस्याधिकरणस्य तदैक्षतेति, स ऐक्षतेति, हिरण्मयः पुरुषो दृश्यते, हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्ण इति, चरणं पवित्रं विततं पुराणमिति, आत्मैवेदमग्र आसीत् पुरुषविध इति, पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिरिति, स वा एष तदा द्रष्टा नापश्यद्दृश्यमेकराट् मेनेऽसंतमिवात्मानं सुप्तशक्तिरसुप्तदृगिति, नमाम ते देव पदारविन्दमिति, मार्गंति यत्ते मुखपद्मनीडैश्छंदःसुपर्णैरृषयो विविक्ते' इत्यादिश्रुतिस्मृतिवाक्यकलापः श्रूयते विषयः। ब्रह्मणोऽनादिसिद्धनेत्राद्यवयववत्पुरुषाकारत्वं युक्तं नवेति संदेहः। न युक्तमिति पूर्वः पक्षः। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनमिति, अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण' इत्यादिकानां ब्रह्मणः पुरुषाकारत्वनिषेधपराणां श्रुतीनां विरोधात् तस्यानादिसिद्धदिव्यपुरुषाकारत्वे प्रामाण्याभावप्रसंगः। तस्माद् ब्रह्मणोऽनादिसिद्धपुरुषाकारत्वं कथं सिद्ध्यतीति प्राप्ते ब्रूमः–युक्तमेव ब्रह्मणोऽनादिसिद्धदिव्यपुरुषाकारत्वम्। 'तदैक्षत

स ऐक्षत हिरण्मयः पुरुषो दृश्यते ' इत्याद्यनेकश्रुतिस्मृतीनामनादिसिद्धदिव्य-पुरुषाकारत्वप्रतिपादनपरत्वात् । 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम् ' अपाणिपादोजवन, इत्यादिकानां श्रुतीनां प्राकृतक्रियागुणकरणाकृतिनिषेधपरत्वाच्च । एवं च सति शास्त्रयोनितया सिद्धो दिव्याप्राकृतपुरुषाकारनारायण एव जगत्कारणं न तु प्रधानमिति निर्णयः । इदानीं पक्षान्तरस्थमस्पष्टतयोक्तं सूत्रार्थं स्पष्टयति—ईक्षतेः परब्रह्मणि नेत्रोपलक्षकेक्षणधर्मात् आशब्दं आ समंताद्भावेन मुखकरपादाद्यवयवसूचक-श्रुतिस्मृतिशब्दैः प्रतिपादितम् ; अतो ना नृशब्दवाच्यं दिव्याप्राकृतपुरुषाकारतयोक्तं यत्परं ब्रह्म तच्छास्त्रयोनितया विज्ञायते । एवं तस्य मुखादिमन्नराकारत्वाच्छास्त्रकारणत्वम् ; शास्त्रकारणत्वाच्च नराकारत्वमिति परस्परहेतुत्वेनोभयं सिध्यति । पुनराशंक्य परिहरति—

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

ईक्षतेश्चेतनधर्मस्याऽचेतने प्रधाने योगाभावाच्चेतनमेव परं ब्रह्म सत्पदवाच्यं कारणमिति प्रतिपादितं तदसंगतमेव; तत्तेज ऐक्षत, ता आप ऐक्षंतेत्यादिष्वचेतनेष्वपीक्षणधर्मो यथा गौणः श्रूयते तथा प्रधानेऽपि गौण इति चेन्न; चेतनवाचिन आत्मशब्दात्सदेव सौम्येदमग्र आसीदित्यारभ्य उपसंहारे स आत्मा तत्त्वमसीत्यात्मशब्दश्रवणात् तेजःप्रभृतिष्वपि न गौणमीक्षतिश्रवणम् ; तत्तदात्मतया नारायणस्य चेतनस्यानुवृत्तेः । तत ईक्षतिश्रवणं गौणमभ्युपेत्याप्यचेतनं प्रधानं सद्रूपं जगतः कारणमिति वक्तुमशक्यम् ; चेतनवाचकस्यात्मशब्दस्याचेतनप्रधानवाचकत्वासंभवात् । एवं चेत्तर्हि चेतनस्य जीवस्यात्मशब्दवाच्यत्वं मुख्यम् ; ततो जीव एव चेतनो जगत्कारणं सद्रूपमित्याशंकायां वदति—

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

सत्पदवाच्यवस्तुनिष्ठस्य मोक्षमुपदिशति; तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्य इति । तस्मान्न प्रधानं जीवश्चात्र सत्पदविषयः। प्रधानकारणवादिनामपि तन्निष्ठस्य मोक्षो नाभिमतः, प्रधानस्य त्याज्यत्वात् ; न च जीवनिष्ठस्यापि मोक्षः, जीवस्यानाद्यविद्याकृतबंधनयुक्तत्वात् । मोक्षोपदेष्टुर्मुक्तजीवस्यापि नारायणोपासनेनैव मुक्तत्वप्राप्तेः। कृष्णशब्दवाच्यनारायणध्यानेनैव तन्निष्ठस्य मोक्षोऽस्ति । तथाहि 'चिंतयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः' इति श्रवणात् नारदपंचरात्रे बृहद्ब्रह्मसंहितायां भद्रासनराजोवाच—

---

१ पुरुषाकृतित्वं शास्त्रकारणत्वम् ।

'कथं जीवोऽणुरूपोऽयं शरीरे सर्वगः प्रभो ।
कदास्य मायायोगोऽभूत् कदा मुक्तिर्भविष्यति ॥'
श्री हर उवाच- 'स्वरूपतोऽणुभूतोऽपि प्रकाशेन शरीरगः ।
एकदेशस्थितो वेत्ति हरिचंदनबिंदुवत् ॥
प्रभया भास्करो यद्वद्ब्रह्मांडं व्याप्य तिष्ठति ।
एकदेशस्थितो दीपः कृत्स्नं गेहं प्रकाशते ॥
कदास्य मायायोगोऽयमिति प्रश्नो न चोचितः ।
अनादिकालतो जीवो मायया परिवेष्टितः ॥
अनुग्रहाद्धरेरेव मुच्यते नात्र संशयः ।
त्रिविधोऽनुग्रहो विष्णोः कर्म ज्ञानमुपासनम् ' ॥

इति स्मरणाच्च पुनरपि। प्रधानाख्यप्रकृतिकारणत्वनिषेधे विस्पष्टहेतुमाह-

## हेयत्वावचनाच्च ॥ ८ ॥

यर्हि प्रधानमेव कारणं सच्छब्दवाच्यं विवक्षितं स्यात्तर्हि तस्य सच्छास्त्रेषु हेयत्वं नोच्येत; तस्य तु तेषु हेयत्वमेवोक्तम् ; अतः प्रधानं सच्छब्दवाच्यं न स्यात्, सच्छब्दाभिहितं तु मुमुक्षुपरमप्राप्यं परब्रह्मैव स्यात्, अतस्तस्य ब्रह्मणो हेयत्वं त्याज्यत्वं यत्तस्यावचनात् सच्छास्त्रेष्वनभिहितत्वात् जगत्कारणतया मुमुक्षुपरमप्राप्यतया च परब्रह्मशब्दवाच्यं नारायणतत्त्वमेवोपादेयं ज्ञेयं च । प्रधानं तु हेयतयैव ज्ञेयम् । तथाहि श्रूयते स्मर्यते च 'यतो वा इमानि भूतानि जायंते' इत्यारभ्य 'तद्विजिज्ञासस्वेति' तं ह आत्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणं प्रपद्ये इति, तमेव विदित्वातिमृत्युमेतीति, तमेव चाद्यं पुरुषं प्रपद्ये इति, सत्यात्मकं त्वां शरणं प्रपन्ना इति अजामेकामित्यारभ्य जहात्येनां भुक्तभोगामजोऽन्य इति;

'दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यंते मायामेतां तरंति ते' ॥ इति,

'भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यश' इति प्रधानस्य कारणत्वेऽभिहिते सति विरोधं दर्शयति-

## प्रतिज्ञाविरोधात् ॥ ९ ॥

प्रधानस्य कारणत्वांगीकारे एकस्य परब्रह्मणो विज्ञानेन तदंतर्यामिशक्त्या व्याप्यस्य यथा कर्मप्रकाशितफलस्याचेतनविशिष्टसर्वचेतनवृंदस्य विज्ञानप्रतिज्ञाविरोधात् सत्पदवाच्यपरब्रह्मज्ञानेन तदंतर्यामिशक्तिविशिष्टतया तत्प्रकाशनीयसकलचेतनाचे-

तनवस्तुविज्ञानं येनाश्रुतं श्रुतं भवतीत्यादिना प्रतिज्ञायते। प्रधानकारणत्वे एतत् अचेतनविशिष्टचेतनानां यथाकर्मफलप्रदानं प्रकाशनं च विरुद्धम्; अचेतनस्य प्रधानस्यैतत्परमचेतनकरणीयकर्मविधानासंभवात् प्रधानज्ञानेन सर्वज्ञानासंभवः, अतो न प्रधानं जगत्कारणम्। प्रधानकारणत्वे विरोधं दर्शयन् सूत्रांतरमवतारयति—

## स्वाप्ययात् ॥ १० ॥

'स्वप्नांतं मे सौम्य विजानीहि यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते इति' चेतनस्य जीवस्य सता सदा क्षेत्रज्ञव्याप्तांतर्यामिशक्तिरूपेण ब्रह्मांशेन सह संपन्नस्य स्वाप्ययात्। स्वाप्ययोक्तेः स्वस्मिन्कारणशरीरयुक्तस्य शरीरभूतजीवस्य स्वकीयशरीरिभूतांतर्यामिणि अप्ययः—सुखानुभवेन लयः। अचेतने प्रधाने चेतनस्य लयो न युक्तः। ततो न प्रधानं सदित्युच्यते। सच्छब्देन परमेश्वर एव प्रतिपाद्यते न प्रधानमिति वदति—

## गतिसामान्यात् ॥ ११ ॥

'सकारणं करणाधिपाधिप इति, तस्माद्विराडजायतेति, एको ह वै नारायण आसीत् स एकाकी न रमेतेति, आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किंचन मिषत् स ऐक्षत लोकान्नु सृजा इति, स इमांल्लोकानसृजत, तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेराप अद्भ्यः पृथिवी तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेद० इत्यादिसृष्टिवाक्यानां या गतिः—सत्पदवाच्ये नारायणे कारणतया या प्रवृत्तिस्तस्याः सामान्यात्—समानार्थत्वात् नारायण एव जगत्कारणं, न प्रधानम्। एवं नारायणादेव सर्ववेदान्तवाक्येषु सर्वोत्पत्तिः श्रूयते इत्याह—

## श्रुतत्वाच्च ॥ १२ ॥

श्रुतमेव 'ह्यस्यामुपनिषदि[1] अस्य सच्छब्दवाच्यस्यात्मत्वेन नामरूपव्याकर्तृत्वं सर्वशक्तित्वं सर्वाधारत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसंकल्पत्वं चानेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मेति, अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इत्यादिश्रुतिवाक्यं न प्रधानप्रतिपादनार्हमिति श्रूयते। ततो जगत्कारणत्वेन सत्पदवाच्यं ब्रह्मैव न प्रधानमिति सिद्धम्। इह ब्रह्मलक्षणस्य

१ छांदोग्याख्यायाम्।

जगत्कारणत्वस्य शास्त्रैकसमधिगम्यस्य तांत्रिके प्रधाने अतिव्याप्तिमाशंक्य चेतनत्वादिहेतुना यथा तस्मिन्नतिव्याप्तिर्न भवति तथा निरूपितम्। अचेतने प्रधान इव चेतनेऽपि जीवे तन्नातिव्याप्तमिति वक्तुमधिकरणांतरमारभ्यते-

## आनंदमयोऽभ्यासात् ॥ १३ ॥

'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेराप' इत्यारभ्य 'तस्माद्वा एतस्माद्विज्ञानमयादन्योंतर आत्मानंदमय' इत्यत्र यः कश्चिदाकाशादिभूतकारणतयाऽन्नमयादिकोशकंचुकांतरनिगूढ आत्मानंदमय इति तैत्तरीया अधीयते। इहानंदमय आत्मा जीवात्मा वा परमात्मा वेति संशयः। जीवात्मेति पूर्वः पक्षः। तद्धर्माणामत्रोपलंभात्। तथाहि 'पृथिव्या ओषधयः, ओषधीभ्योऽन्नं, अन्नात्पुरुषः स वा एष पुरुषोन्नरसमयः, तस्येदमेव शिरः, अयं दक्षिणः पक्षः, अयमुत्तरः पक्षः, अयमात्मा इदं पुच्छं प्रतिष्ठेत्यादिना प्रत्येकं पंचावयवमन्नमयाख्यशरीरादिकमानंदमयांतं पंचकं निरूप्यते; अत्रान्नमय इति शरीरमुच्यते। प्राणमय इति तदंतर्वर्ती प्राणः। मनोमय इति तदंतर्वर्ति मनः। विज्ञानमय इति तदंतर्वर्तिनी बुद्धिः। आनंदमय इति सर्वेषामन्नमयादीनामाश्रयो जीव एव। अन्नमयादीनां शिरःप्रभृतिकल्पना समुपासनार्थाः; अन्नमयादीनां ब्रह्मत्वेनोपासनात् तत्तदन्नादिसमृद्धिः फलमुक्तम्। कथमस्य संसारसागरदुःखमग्नस्य जीवस्यानंदमयत्वाभिधानमिति चेन्न; अत्रानंदशब्देन परं ब्रह्मोच्यते; आनंदो ब्रह्मेति श्रवणात्। मयट्शब्दस्य विकारार्थत्वात् तत्कार्यभूतो जीव एवानंदमय इत्युच्यते इति। नित्यसंपन्नानवधिकातिशयमंगलत्वविशिष्टस्य नारायणस्य ब्रह्मण आनंदमयत्वांगीकारे अन्नमयप्राणमयमनोमयविज्ञानमयाऽऽनंदमया मे शुध्यंतामिति शुद्धिप्रार्थना व्यर्था स्यात्। अतोऽयमानंदमय आत्मा जीव एव न परमेश्वर इति प्राप्ते ब्रूमः--आनंदमयोयमात्मा परमेश्वर एव। कुतः, अस्यानंदस्य निरतिशयत्वेनाभ्यासात्। कथमभ्यस्यते, सैषानंदस्य मीमांसा भवतीत्यारभ्य स एको मानुष आनंदः, ते ये शतं मानुषा आनंदाः, स एको मनुष्यगंधर्वाणामानंद इति मध्येऽभिधायाऽवसाने च ते ये शतं प्रजापतेरानंदाः, स एको ब्रह्मण आनंद इति श्रुत्युक्तवचने मानुषविशेषादिप्रजापतिशब्दवाच्यविधिवैराजपुरुषप्रकृत्यधिपपुरुषपर्यंतेषु तत्तदानंदस्य उपर्युपरि शतगुणमतिशयमभिधाय स

---

१ जगत्कारणत्वम्। २ तस्यानंदमयात्मनो धर्माणाम्। ३ जीवे। ४ प्राप्तित्वात्। ५ तस्मात्तस्मादन्नमयप्राणमयाद्युपासनाज्जन्यान्नादिरूपा समृद्धिः।

एको ब्रह्मण आनंद इति ब्रह्मानंदो निरतिशयत्वेनाभ्यस्यते; अतस्तदेतन्निरतिशयानंदभाजनत्वमस्य[1] संसारिणो न संभवति। यदुक्तमानंदमयस्य परमेश्वरत्वे नित्यशुद्धस्य तस्य[2] कथं विशुद्धिप्रार्थना इति तत्रेदमुत्तरम्—यथा प्रकाशबहुलस्य सूर्यस्य तिरोधायकमेघापगम एव प्रसादः, तथा [3]तस्य सदा विशुद्धस्य तिरोधायकजीवाविद्यारूपमलापनयनमेव शुद्धिः। तस्मादानंदमयो नारायणशब्दवाच्यपरमेश्वर एव। नन्वानंद एव ब्रह्मेत्युच्यते, तद्विकार आनंदमयः मयटो विकारार्थत्वात्। आनंदमयस्य परमेश्वरत्वाभ्युपगमे परब्रह्मणोऽन्यः परमेश्वर इति प्राप्तम्; तथा सति तस्य[4] विकाररूपत्वादनित्यत्वं चेति शंकायामाह—

## विकारशब्दान्नेति चेन्न, प्राचुर्यात् ॥ १४ ॥

अन्नमयादीनां यथा अन्नादिविकाररूपत्वं तथात्रानंदमय इत्यानंदविकारः। यथा मृद्विकारो हि मृन्मयो घटादिः। अतः परमेश्वरत्वासंभवादयं जीव एवेति चेन्न; मयट्शब्दस्यात्र[5] प्राचुर्यार्थत्वात्। अन्नमयप्राणमयमनोमयपर्यंतमेव मयड्विकारार्थः। विज्ञानमयो विज्ञानप्रचुरः शुद्धजीवात्मा तदंतर्यामी आनंदमयोऽप्यानंदप्रचुरः परमात्मा विज्ञानमय इति तदंतर्वर्तिनी बुद्धिः। आनंदमय इति सर्वेषामन्नमयादीनामाश्रयो जीव एवेति यत्पूर्वमुक्तं तदज्ञानविलसितम्; विज्ञानं यज्ञं तनुत इति यो विज्ञाने तिष्ठन् य आत्मनि तिष्ठन् आत्मानमंतरो यमयतीति आत्मात्मा चाक्षरात्मा चेति भगवानेक आसेदमग्र आत्मात्मनां विभुरित्यादिश्रुतिस्मृतिषु विज्ञानात्मशब्दाभ्यां प्रोक्तजीवात्मनोऽन्तर्वर्तिपरमात्मोक्तिविरोधात्। अथ सूत्रार्थो विविच्यते। विकारशब्दात् अन्नादिभ्यस्त्रिभ्यः कृतात् विकारार्थवाचकान्मयट्शब्दाद्धेतोः अन्नमयादीनां त्रयाणामनुक्रमं प्राप्तयोरात्मपरमात्मवाचकयोर्विज्ञानमयानंदमयशब्दयोः स्थितस्य मयट्प्रत्ययस्याविकारार्थत्वं न संभवतीति चेन्न, प्राचुर्यात्। सत्साधनयुक्तपरमात्मोपासनेनाक्षरब्रह्मसाधर्म्यं प्राप्ते शुद्धे जीवात्मनि विज्ञानस्याधिक्याद्धेतोः तथा नित्याजादिविशेषणविशिष्टबद्धचेतनमुक्तचेतनवृंदानामक्षरब्रह्मणश्च नियामके परब्रह्मणि प्राचुर्यात्, आनंदस्यातिशयाधिक्याच्च। आत्मवाचके विज्ञानमयशब्दे परमात्मवाचके आनंदमयशब्दे च स्थितस्य मयट्प्रत्ययस्य विकारार्थत्वं न संघटते; किंतु प्रचुरार्थत्वमेव संभवतीति सूत्रार्थः। सर्वथा विकारार्थप्रकरणपठितत्वाद्विकारार्थ एव समुचितो मयट्शब्द इति यत्समागतं तस्य निराकरणे हेतुमाह—

---

१ जीवस्य। २ आनंदमयस्य। ३ आनंदमयस्य। ४ परमेश्वरस्य। ५ आनंदमयशब्दे।

## तद्धेतुव्यपदेशाच्च ॥ १५ ॥

एप ह्येवानंदयतीति असंख्यकोटिबद्धमुक्तक्षेत्रज्ञनिकरान्प्रत्यानंदहेतुस्तदुद्भवकारणमिति श्रुतिव्यपदेशात् आनंदमयः श्रूयते; स्वयं प्रचुरानंदः सन्नेवेतरानानंदयति। अतो नारायण एवानंदमयः आनंदप्रचुरोऽस्ति; तमेव मंत्रप्रतिपाद्यतया निरूपयितुं सूत्रांतरमवतारयति–

## मांत्रवर्णिकमेव च गीयते ॥ १६ ॥

'सत्यं ज्ञानमनंतं ब्रह्मेति, ॐनमो नाराणाय' ॐनमो भगवते वासुदेवाय।
'नमस्ते पुंडरीकाक्ष नमस्ते विश्वभावन।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज' इति॥

'नारायणाय विद्महे, वासुदेवाय धीमहि, तन्नो विष्णुः प्रचोदयादित्यादिमंत्रवर्णैर्मंत्राक्षरैर्नमनीयत्वेन भजनीयत्वेन ध्येयत्वेनोपास्यत्वेन च प्रसाद्यत्वेन च प्रेमास्पदत्वेन च वरणीयत्वेन प्रोक्तं मांत्रवर्णिकं परमानंदमयं दिव्यपुरुषाकृतिपरमात्मस्वरूपमेव श्रुतिस्मृतिपु मुनिभिर्गीयते चकारात्स्तूयते च इति सूत्रार्थः। ननु मंत्रवर्णोदितं परिशुद्धस्य जीवात्मन एव स्वरूपमस्तीत्याशंकायां सूत्रांतरमारभ्यते–

## नेतरोऽनुपपत्तेः ॥ १७ ॥

परमात्माभिन्ननारायणादितरः स्वरूपस्वभावादिभिर्विलक्षणो बद्धावस्थो मुक्तावस्थोऽपि क्षेत्रज्ञकलापो न मंत्रवर्णोदितः। तत्र हेतुमाह–तस्य नारायणस्वरूपस्वभावादिसमानत्वानुपपत्तेरिति सूत्रार्थः। अनवधिकातिशयानंदमयस्य स्वरूपस्वभावगुणविभूतिभिरद्वितीयस्य परब्रह्मणस्तुल्यतयोपमातुं पूर्वमविद्यावद्धोऽल्पज्ञः पश्चाद्भगवदुपासनादिसत्साधनैर्मुक्तोऽपि जीवात्मा न शंक्यः। अतः स नारायण एव मंत्रवर्णोदितो मुक्तपुरुषादिसर्वेषां नमनोपासनादिक्रियार्होऽस्तीति सूत्राभिप्रायः। तथाहि श्रूयते स्मर्यते च–'न तत्समश्चाभ्यधिकश्च दृश्यते इति, सर्वेभ्यो लोकेभ्यो ज्यायानिति, 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वत' इति, न पापेन कर्मणा कनीयान् न पुण्येन कर्मणा भूयानिति जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्चेति।

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति
'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः'॥ इति

'ज्ञाज्ञौ द्वावजावीशानीशाविति, समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः, जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोक इति; जुष्टं महामुक्तैः सेवितमिति पर्यायः, इत्यादिवचनकलापे सर्वज्ञत्वाद्यनेकगुणगणविशिष्टतया स्वोपासकानां मोक्षपूर्वकानवधिकातिशयानंदप्रदातृतया च सर्वोत्कृष्टं मांत्रवर्णिकं नारायणाख्यं परं ब्रह्म विज्ञायते। पुनरितरेभ्यो नारायणस्यात्यधिकभेदं प्रतिपादयितुं सूत्रांतरमवतारयति—

## भेदव्यपदेशाच्च ॥ १८ ॥

स्वेतरचेतननिकरादानंदमयस्य परब्रह्मणः श्रुतिस्मृतिषु नियंतृनियम्यादिरूपेण भेदेन व्यपदेशात्। नायं चेतनवर्गो ह्यानंदमयशब्दवाच्य इति सूत्रार्थः। तथाहि 'भीषास्माद्वातः पवते भीषोदेति सूर्य इति, ब्रह्मणोपि भयं मत्त इत्यादिना वायुसूर्यब्रह्मादिजीववर्गात्प्रशासितव्यात् तत्प्रशासितुर्नारायणस्य भेदो व्यपदिश्यते योजनांतरं च। 'तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानंदमय' इत्यादिना अन्नमाणमनोभ्य इव जीवादपि तस्य भेदो व्यपदिश्यते। 'अक्षरात्परतः पर इति, यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' इत्यादिना क्षरभावप्रसक्ताज्जीवात्परं यद्विलक्षणमक्षरं ब्रह्म तस्मादप्युत्तमतया परब्रह्मणो भेदं व्यपदिशति। अतो मांत्रवर्णिकमानंदमयं ब्रह्म सर्वचेतनेभ्यो विलक्षणमेव प्रकृतिनिरपेक्षं जगत्कारणमिति विज्ञायते। पुनराशंक्य सूत्रांतरं निगदति—

## कामाच्च नानुमानापेक्षा ॥ १९ ॥

'तदैक्षत बहु स्यां प्रजायेयेत्यारभ्य हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति, तत्परं ब्रह्म ऐक्षत सृष्ट्यादौ तेजःप्रभृतितत्त्वसंयुक्ततया परब्रह्मप्रकाशे तिरोभूतान् सप्रकृतिकान् पुरुषाद्यसंख्यक्षेत्रज्ञान् आलोचितवत् किमिति चेत्तत्राह बहुस्यामिति; एकोऽहं मत्सृज्यमानानां तेजोजलपृथिवीसंज्ञतत्त्वानां यथार्हप्रकाशनाय ब्रह्मादिस्तंबपर्यंतक्षेत्रज्ञविशिष्टानामजत्वनित्यत्वादिधर्मयुतानां क्षेत्रज्ञानां च यथार्हकर्मफलप्रदानाय बहु यथा भवति तथा स्यां-भवेयम्, इति संकल्पानुरूपबहुभवनप्रकारमाह—प्रजायेयेति-यथाकर्मन्यूनाधिकभावेन प्राप्यमाणोच्चावचदेहानां जीवात्मनां यथार्हप्रकाशकविकसितांतर्यामिशक्तिरूपेण प्रजायेय-उत्पन्नो भवेयमिति श्रुतितात्पर्यार्थः। श्रुत्यंतरं च सोऽकामयतेत्यारभ्य इदं सर्वमसृजतेति कामात् संकल्पादेव जगत्सर्गश्रवणात्। अस्यानंदमयस्य परमात्मनो जगत्स्रष्टावनुमानवेद्यप्रकृत्यपेक्षा न विद्यते। प्रकृत्यधिपपुरुषविधिमरीच्यादिक्षेत्रज्ञकलापस्य तु जगत्सर्गकृतौ प्रकृत्यपेक्षा भवति। अतश्चा-

यमुदितपुरुपादिक्षेत्रज्ञकलापादन्यः पुरुषोत्तमः, प्रकृतिपुरुषयोः परस्य शं नस्तनोतु-चरणः पुरुषोत्तमस्येति स्मरणात्। नन्वनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति प्रकृत्यधिपपुरुषरूपेणात्मना प्रपंचानुप्रविष्टस्य परमेश्वरस्य नामरूपकर्तृत्वश्रवणात् अनयोरभेद एवाभ्युपेय इत्यत आह–

## अस्मिन्नस्य च तद्योगं शास्ति ॥२०॥

अस्मिन्नानंदमये पुरुषोत्तमे अस्य पुरुषादिक्षेत्रज्ञकलापस्य च तद्योगमानंदसंबंधं शास्ति-शास्त्रमुपदिशति। तथाहि श्रूयते 'रसो वै स रसं ह्येवायं लब्ध्वानंदी भवतीति, रस आनंदघनरसमयः स परमात्मा भवति; वै निश्चितंयं रसशब्दवाच्यमनवधिकातिशयानंदमयं नारायणमेवायंपदनिर्दिष्टः पुरुषादिक्षेत्रज्ञनिकरो लब्ध्वा आनंदी-प्रचुरानंदवान् भवतीति श्रुतितात्पर्यार्थः। यल्लाभात् प्रकृत्यधिपपुरुषादिमहामुक्तानां आनंदयोगोऽस्ति, स तेभ्योऽन्यः परमात्मशब्दवाच्य एवानंदमयो नारायण इति सिद्धम्। तस्य साधकानां संसारभेषजं मनःसमाधानयोग्यं किमपि रूपं प्रदर्शयितुमिदमधिकरणमारभ्यते–

## अंतस्तद्धर्मोपदेशात् ॥२१॥

'य एषोंतरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुंडरीकमेवमक्षिणी' इति छांदोग्ये श्रूयतेऽस्य विषयः। अयमादित्यांतर्वर्ती हिरण्मयः पुरुषो नारायणो वा देवतांतरं वेति संदेहः। एवं सति सर्वाधारस्य सर्वगतस्य परमेश्वरस्य केवलादित्यांतर्वर्तित्वं हिरण्मयरूपत्वं च न संभवति, अतो देवतांतरमिति पूर्वः पक्षः। कुतः, शरीरस्थत्वात्। कर्माधीनस्यादित्यादिदेवशरीरमुपगतस्य जीववृंदस्य देहसंबंधो हि स्वकीयकर्मफलभोगायेति। सिद्धान्तस्तु 'स एष सर्वेभ्यः पाप्मभ्य उदित' इत्यादिना प्रतिपादितापहतपाप्मत्वादयस्तदुपलक्षिता अन्ये सर्वलोककामेश्वरत्वादयो परमकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यादयश्च चेतनाचेतनांतरात्मकत्वं चानादिबोधत्वं स्वातंत्र्यमित्याद्यसंख्यधर्माणामादित्यादिजीवेष्वसंभवात् अयमादित्यान्तः श्रूयमाणो नारायणाभिधपरमात्मैव। स्वासाधारणविलक्षणरूपत्वं च ज्ञानबलैश्वर्यादिकल्याणगुणवतोऽस्य संभवति; श्रूयते च तद्रूपस्याप्राकृतत्वम्; 'आदित्यवर्णं तमसस्तु पारे इति, आत्मैवेदमग्र आसीत्पुरुषविध इति, स वेत्ति वेद्यं नहि तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं पुराणम् इति, एको बहूनां यो विदधाति कामान्' इत्यादौ सर्वाधारस्य सर्वगतस्य केवलादित्यांतर्वर्तित्वं न संभवतीति विरुद्धं यदुक्तं तन्निराक्रियते; सर्वाधारः सर्वगतः परमेश्वरस्साधकानुग्रहाय हिरण्मयं किमपि रूपं

समास्थाय सवितृमंडलमधिवसति। शरीरसंबंधादस्मदादिवत् नारायणस्य न संसारदोषापत्तिः। श्रुतिरेव भगवती ह्यस्य शरीरसंबंधं सर्वपापराहित्यं च प्रतिपादयति। वयं हि श्रुतिप्रामाण्यशरणा न युक्तिं बहु मन्महे इति। सूत्रार्थस्तु अंतः-अंतरादित्ये अंतरक्षिणि च यः पुरुषः श्रूयते जीवादन्यः कप्यासपुंडरीकाक्षो नारायण एव; कुतः, तस्य जीवातिरिक्तस्य नारायणस्यैव धर्माणामपहतपाप्मत्वादीनामुपदेशात्, तेषां जीवेष्वसंभवाच्च। तस्य यथा कप्यासं पुंडरीकमेवमक्षिणी इति श्रुतिवाक्यं व्याख्यायते–कं जलं पिबति किरणैरिति कपिः-सूर्यस्तेन आसमासितं विकसितं पुंडरीकं पद्मं यथाऽऽभाति तथा तस्य नारायणस्याक्षिणी नयनयुगलम्। नन्वसावादित्यो ब्रह्मेत्यादित्यस्य ब्रह्मशब्देन व्यपदेशस्तस्मादंतरादित्य इति मंडलवर्ती सूर्य एव हिरण्मयः पुरुष इत्यत आह–

## भेदव्यपदेशाच्चान्यः ॥२२॥

मंडलाभिमानिनोऽस्माच्चेतनरूपादादित्यादन्य एव हिरण्मयरूपो नारायणः भेदव्यपदेशात्। तदेव स्पष्टयति 'य आदित्ये तिष्ठन्नादित्यादंतरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमंतरोयमयति एष त आत्मांतर्याम्यमृत' इति। इहामृतपदेन नारायणोऽभिधीयते; कुतः, तस्मादादित्यशब्दवाच्याच्चेतनादन्यो हिरण्मयो नारायणः, तस्य वेदेन व्यपदेशात् आदित्यांतर्वर्ती स एव पुंडरीकाक्षः प्रतिपाद्यते। तस्यादित्यांतरात्मतयाऽऽदित्यशब्दवाच्यत्वम्। आदित्यांतर्वर्तिनस्तस्य सावित्रीप्रतिपाद्यत्वात् सर्वेषां मुमुक्षुब्राह्मणानां स एव ध्येय इति सिद्धम्। 'ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः, इति स्मरणाच्च सर्वज्ञत्वादिधर्मवतः परब्रह्मणो नारायणस्य परममंगलास्पदमुपास्यं रूपमभिधाय तल्लक्षणस्य नामरूढिवशादन्यत्रातिव्याप्तिशंकायामधिकरणयुगलमारभ्यते–

## आकाशस्तल्लिंगात् ॥२३॥

## अत एव प्राणः ॥ २४ ॥

अस्य विषयः छांदोग्ये श्रूयते 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यंते, आकाशं प्रत्यस्तं यंतीति, सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशंति प्राणमभ्युज्जिहत' इति। अत्र सकलभूतोत्पत्तिलयकारणप्रतिपादकावाकाशप्राण-

---

१ य एषोंतरादित्ये इत्यारभ्य स एष सर्वेभ्यः पाप्मभ्य उदित इत्यंता। २ आदित्यो ब्रह्मेत्यादिश्रुतिवाक्यैर्ब्रह्मशब्दस्या दित्यादिषु प्रवृत्तिवशात्। ३ नारायणेतरसूर्यादिषु। ४ परब्रह्मलक्षणहीनेष्वपि तेषु तल्लक्षणप्रवृत्तिरूपशंकायाम्।

शब्दौ परमेश्वरप्रतिपादनपरौ किंवा भूतशब्दवाच्याकाशप्राणवायुप्रतिपादनपराविति संदेहः। 'प्राणाद्ध्येव खल्विमानि भूतानि जायंते प्राणेन जातानि जीवंति प्राणं प्रत्यभिसंविशती'त्यादिश्रुतेः आकाशाद्वायुरित्यादिश्रुतेश्च प्राणाकाशयोरपि सकलभूतकारणत्वावगमात्। तावेवात्र प्रतिपाद्याविति प्राप्ते ब्रूमः--प्राणाकाशशब्दवाच्यः परमेश्वर एव सर्वकारणत्वादितल्लिंगात्, न ह्यनयोस्सर्वकारणत्वादिकं संभवति; [1]तत्रानंदरूपस्य ब्रह्मणः कारणत्ववादे प्राणाद्ध्येव खल्वित्यादिश्रुतेस्तात्पर्यमस्ति, न प्राणस्य कारणत्ववादे; किंतु अनुवादमात्रं आकाशस्य भूतांतर्वर्तितया सर्वशब्देन ग्रहणाद्धेतोस्तत एव सर्वभूतोत्पत्तिरभिहिता। वस्तुतस्तु 'आत्मन आकाशः संभूत' इति श्रुत्या नारायणादेवास्ति; तस्मात्तस्यैव सर्वभूतकारणत्वं न भूतशब्दवाच्याकाशप्राणयोरिति सिद्धांतः। नन्वाकाशकारणत्वपक्षांगीकारे किमुक्तमिति चेत् चिदाकाशाख्यं नारायणस्थानमिति; एवं च सति 'तस्य सर्वभूतकारणत्वसद्भावात् तद्वचनं सप्रयोजनं तर्हि परमेश्वरशब्दवाच्यनारायण आकाशशब्दाभिधेय इति कथं निर्णय इति चेत्तत्र ब्रूमः-तयोर्धामधामिनोरभेदविवक्षयेति सिद्धम्। 'यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठित' इति तयोर्धामधामिभावेन श्रवणात्।

## ज्योतिश्चरणाभिधानात् ॥ २५ ॥

पूर्वं निखिलभुवननायकस्य 'निरस्तसमस्तदोषवासनाकलंकस्य निरतिशयमांगल्यरत्नाकरस्य लक्ष्मीपतेः परब्रह्मणः आदित्यमंडलमास्पदमिति निरूपितम्; इदानीं तस्य स्थानांतरमुच्यते। छांदोग्ये श्रूयतेऽस्य विषयः'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वावतद्यदिद-

---

१ विषयश्रुतौ। २ छांदोग्ये। ३ अनुवादमात्रे तात्पर्यमस्तीति संबंधः। ४ आकाशशब्दवाच्यान्नारायणादेव। ५ सर्वभूतोत्पत्तिरिति संबंधः। ६ चिदाकाशाख्यनारायणस्थानस्य। ७ सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यंते इति छांदोग्यवाक्यम्। ८ समस्ताः सकला ये दोषाःकामादयश्च वासना तज्जन्या भोगेच्छा च; निरस्तं कालत्रयेऽप्यस्पृष्टं तद्रूपं कलंकं दूषणं यस्य स तथोक्तस्तस्य। ९ अथशब्दो विद्यांतरारंभार्थः, अतोऽमुष्माद्दिवो द्युलोकात्पर इत्यस्य लिंगव्यत्ययेन परं यत् ज्योतिः स्वयंप्रभं ब्रह्मैव दीप्यते; कुत्र 'विश्वतः पृष्ठेषु' एतदेव व्याचष्टे सर्वतः संसारात्पृष्ठेषूपरितनेषु किं विशिष्टेषु अनुत्तमेषु; अत्र तत्पुरुषसमासशंकयाऽसमीचीनत्वशंका मा भूदित्येतदेव व्याचष्टे-उत्तमेषु लोकेषु। १० यदुक्तं ब्रह्म तदिदं वा इदमेव वा कियदिदं वक्ष्यमाणप्रमाणकमस्मिन्नंतःपुरुषे शारीरमध्ये ज्योतिः।

मस्मिन्नन्तःपुरुषे ज्योतिरित्यादि। अत्र सकललोकव्याप्ततया दिवि श्रूयमाणं परं ज्योतिर्नारायणो वा तदन्यो वेति संशयः। द्योशब्दस्याकाशवाचित्वात्परो दिव इति आकाशवर्ती सूर्य एवात्र प्रतिपाद्यते ज्योतिरिति; अथवा अंतःपुरुषे ज्योतिरिति पुरुषांतर्वर्तितया जाठरोऽग्निरिति पूर्वः पक्षः। सिद्धांतस्तु परो दिवो ज्योतिरिति सर्वोत्तरं परं ज्योतिर्नारायण एव, पूर्वत्र पादोऽस्य सर्वा भूतानि इति ज्योतिषोऽस्य एकांशतया विश्वभूतानामभिधानात्। नैतत्संभवति; जाठराग्निसूर्ययोः परिच्छिन्नत्वात् तद्व्याप्यत्वाच्च। पूर्वं गायत्री वा इदं सर्वं भूतमिति सर्वात्मतया गायत्री प्रतिपाद्यते। प्रकरणात्तदेकांशत्वमेव प्रपंचस्य पादोऽस्य सर्वा भूतानीति श्रुतिराह। तस्माज्ज्योतिर्वाक्ये गायत्र्येवोपादीयत इत्याशंक्य समाधत्ते—

## छंदोऽभिधानान्नेति चेन्न; तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम्॥२६॥

पूर्वं गायत्री वा इदं सर्वमिति छंदसोऽभिधानात् तस्यैवात्राभिधानं न नारायणस्येत्युच्यते चेत्तन्नैतद्गायत्रीसंज्ञस्य छंदोमात्रस्य सर्वभूतात्मकत्वं न संभवति; किंतु गायत्रीछंदःसादृश्यानुसंधानोपदेशो नारायणस्यैव क्रियते; यथा गायत्री षडक्षरैश्चतुर्भिः पादैश्चतुष्पदा तथा ब्रह्मापि चतुष्पादिति; यथा च गायत्रीजापकस्य गायत्रीछंदसि चेतसोंऽतःकरणस्यार्पणं निगद्यते तथा मुमुक्षोरपि परब्रह्मणि चेतोऽर्पणं कथ्यते; अतोऽपि गायत्रीछंदःसादृश्यानुसंधानं नारायणस्येति। तथा ह्यन्यत्रापि छंदोऽभिधायी दशाक्षरा विराडिति श्रुत्युक्तो विराट्शब्दो दशत्वसंख्यासादृश्यादर्थांतरे कृतसंज्ञके वाय्वादौ प्रयुज्यमानो दृश्यते। यथा संवर्गविद्यायां अधिदैवमग्निसूर्यचंद्रांभांसि वायौ लीयंते अध्यात्मं प्राणे वाक्चक्षुःश्रोत्रमनांसीत्युक्तम्; तदनंतरं ते वा एते पंचान्ये पंचान्ये दश संतस्तत्कृतमित्युपक्रम्य सैषा विराडित्युक्तम्; ते वायुना सह पंचाधिदैविका आध्यात्मिकेभ्यः प्राणादिभ्योऽन्ये तथा प्राणादयः पंच अधिदैविकेभ्योऽन्ये; एवं सर्वे दश संतः कृतमित्युच्यंते तथा ब्रह्मणि चतुष्पात्त्वसाम्याद्गायत्रीशब्दप्रयोगः।

---

१ छांदोग्यस्य अथ यदतः परो दिवो ज्योतिरित्येतस्माद्वाक्यात् प्रथमप्रकरणे। २ सर्वभूतानि ज्योतिःशब्दवाच्यस्य देवताविशेषस्य एकपादस्थानि यानि संतीति गणनाभिधानम्। ३ नारायणव्याप्यत्वात्। ४ पादोऽस्य सर्वा भूतानीति वाक्यात् प्रथमम्। ५ तस्या गायत्र्याः संबंधि एकांशत्वमेकावयवत्वमेव। ६ चतुष्पात्त्वसाम्याद्गायत्रीछंदसो ब्रह्मणि प्रवृत्तौ प्रमाणापेक्षायां दृष्टांतं दर्शयति। ७ छंदोवाचिशब्दस्य स्वसादृश्यादितरत्र वस्तुनि प्रवर्तनविधायकवाक्येऽपि।

केवलगायत्रीछंदसस्तु सर्वात्मकत्वाभावान्नारायणस्यैव सर्वात्मकत्वलिंगेन गायत्री-प्रकरणबाधः, अतो नारायण एव ज्योतिरिति । पुनरनुपपत्तिमाह–

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२७॥

भूतपृथिवीशरीरहृदयैश्चतुष्पदेति व्यपदेशो न गायत्र्याख्ये छंदसि उपपद्यते, नारायणे एवोपपद्यते; अतो गायत्रीशब्देन परब्रह्मैव प्रतिपाद्यमित्येवं शब्दार्थः । पुनराशंक्य परिहरति–

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥२८॥

ननु पादोऽस्य सर्वाभूतानीति, त्रिपादस्यामृतं दिवीत्यत्र द्युसंबंधप्रत्यभिज्ञानात् ज्योतिर्वाक्ये नारायणः प्रतिपाद्यते इति न सारम् । उपदेशभेदेन विरोधात् प्रत्यभिज्ञानासिद्धेः । त्रिपादस्यामृतं दिवीति परो दिवो ज्योतिरिति विभक्तिभेदेनोपदेशभेदः । अतो विरोध इति चेन्न । उभयत्र विभक्तिभेदेऽप्यन्वयव्यतिरेकभावोपगतपरमात्मरूपार्थैक्येन विरोधाभावात् । अत उभयत्रापि दिवः परत्वमेव विवक्षितम् । अनेन लिंगेन नारायण एव पुरुषसूक्तोदितः पुरुष इति सिद्धम् । पादोऽस्य विश्वा भूतानीति तत्रापि श्रवणात् । ततो निजैकांशसमाप्तसकलप्रपंचं दिवि दीप्यमानं परं ज्योतिर्नारायण इति निर्णयः । भगवत्सवितृमंडले साक्षादुपास्यतया निर्दिष्टस्य नारायणस्य तस्मिन्नधिकरणे विश्वात्मकत्वमुक्तम् । तदात्मकतया तदन्येषामुपास्यत्वं नान्यथेति प्रतिपादयितुमिदमधिकरणमारभ्यते–

## प्राणस्तथानुगमात् ॥ २९ ॥

अस्याधिकरणस्य कौषीतकीब्राह्मणे प्रतर्दनविद्यायां विषयः श्रूयते । प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वेतीन्द्रवचनम् । अत्रोपासनाविषयत्वेन प्राणशब्दसामानाधिकरण्येन निर्दिष्ट इंद्रो वा नारायणो वेति संशयः । इह प्राणोऽस्मि प्रज्ञात्मा तं मामिति प्राणशब्दस्य साक्षादिन्द्रेण सामानाधिकरण्यमवगम्यते । मामुपास्वेति तद्विषय एवोपासनविधिः श्रूयते । तस्य प्राणत्वं वृष्टिद्वारा सकलरक्षकत्वादुपपद्यते । सकलोपास्यत्वं च परमैश्वर्यवत्त्वादुपपन्नम् । तथाहि श्रुतिः–'इंद्रो राजा जगतो य ईशे'

---

१ अथ यदतः परो दिवो ज्योतिरित्युत्तरवाक्यस्य 'पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि' इति पूर्ववाक्येन सह विरोधमुद्भाव्य ब्रह्मणोऽन्वयव्यतिरेकत्वादुभयवाक्ययोर्विरोधं परिहृत्य गायत्रीशब्देन ब्रह्मैव प्रतिपादितं न केवलं गायत्रीछंद इत्यमुना प्रकारेण । २ पुरुषसूक्तेऽपि । ३ विशेषश्रवणात् त्रिपादस्यामृतं दिवीति तूभयत्रापि समानमिति भावः । ४ अंतस्तद्धर्मोपदेशादिति सूत्रे चेतनाचेतनांतरात्मकत्वम् । ५ नारायणात्मकतया । ६ इंद्रस्य ।

इत्यादि। तस्मादिंद्र एवोपास्यतया निर्दिश्यत इति पूर्वः पक्षः; सिद्धांतो नारायण इति। कुतः, आनंदाजरामृतप्रज्ञादीनां तदसाधारणधर्माणामस्मिन्प्राणशब्दनिर्दिष्टेऽनुगमात्। तथाहि 'एप प्राण एव प्रज्ञात्मानंदोऽजरोऽमृत' इति। इंद्रो राजेति श्रुताविंद्रशब्दो नारायणविपयः प्रकरणादवगम्यते। पुनराशंक्य परिहरति–

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबंधभूमा ह्यस्मिन् ॥३०॥**

उपक्रमे 'मामेव विजानीहि त्रिशीर्पाणं त्वाष्ट्रमहनमि'त्यादिना प्रज्ञातजीवभावस्येंद्रस्य वक्तुः आत्मोपदेशात् स्वोपास्यत्वोपदेशः, अत उपसंहारस्तेदनुगुणो नेतव्य इति चेत् नैतदुचितम्। उपक्रमादारभ्यास्मिन्प्रकरणे अध्यात्मसंबंधभूमा आत्मनि परमात्मन्येव संबंधो यस्य हिततमत्वादिधर्मस्य तस्य भूमा भूयस्त्वं बहुत्वं नेतरस्मिन्नित्यर्थः। तथाहि उपक्रमे तावत् 'यं त्वं मनुष्याय हिततमं मन्यस' इति हिततमोपासनं प्रारब्धं, तद्धिततमत्वं तावत् नारायणधर्मस्तदुपासनस्यैव मोक्षसाधनस्य हिततमत्वात्। मध्ये च 'एप ह्येव साधुकर्म कारयति, तं यमेभ्यो लोकेभ्यः उन्निनीपते, एप ह्येवासाधुकर्म कारयति तं यमधो निनीपत' इति। यथा राज्ञा तद्व्यावहारिकज्ञानानुकूलार्पिताधिकारोऽपि जनः सदसज्जनसेवनानुगुणं तस्य प्रसन्नतामप्रसन्नतां च प्राप्नोति तथा नारायणेन तत्कर्मानुगुणदत्तकरणकलेवरोऽपि जीवात्मा सदसद्देशकालाद्यनुष्ठानुपेवनानुगुणमिह परत्र च सुखदुःखादिकमुच्चावचगतिं च प्राप्नोति; यथा च तस्य राजदत्ताधिकारत्वात् तत्कृतं कर्म राजकृतमिति लोका वदंति तथा जीववर्गस्य नारायणार्पितकरणकलेवरत्वात् देशकालाद्यनुगुणं तत्कृतं कर्म नारायणकृतमिति शास्त्राणि वदंति; इत्थंभूतायां मुक्तौ सत्यामपि येन यत्कर्म कृतं तत्फलं तस्यैवास्ति, नतु तत्तत्स्वामिनोरिति श्रुतितात्पर्यम्। एवं तस्यैव सर्वकर्मकारयितृत्वं श्रूयते। तद्यथा 'रथस्यारेपु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता' इति जडचेतनात्मकसकलप्रपंचाधारकत्वं श्रूयते। तच नारायणधर्मः, अतो नारायणधर्मबाहुल्यादिहोपास्य इंद्रो न भवति। कथमिंद्रो जीवत्वादनुपास्योऽपि स्वविपयमुपासनमुपदिशतीत्याशंकायामाह–

---

१ उपक्रमानुकूलः। २ यथा लोके तत्तस्य प्रसिद्धस्य रथस्यारेपु मध्यवर्तिशलाकासु चक्रोपान्ते नेमिरर्पिता नाभौ चक्रपिंडिकायामरा अर्पितास्तद्वत् भूतानि पृथिव्यादीनि मात्राः शब्दादयो विपयाः मीयंते इति मात्राः प्रज्ञामात्रासु स्वस्वबोधकेष्विंद्रियेपु बुद्धिद्वारा अर्पिताः कर्मेंद्रियेष्वपि तद्विपया अर्पिताः तदधीनत्वात्तद्व्यवहारस्य ताश्च प्रज्ञामात्राः प्राणे परस्मिन्नर्पिताः। ३ प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वेतिश्रुतौ

## शास्त्रदृष्टया तूपदेशो वामदेववत् ॥ ३१ ॥

'ऐतदात्म्यमिदं सर्वमिति, अंतः प्रविष्टः शास्ता जनानां सर्वात्मा तत्त्वमसि य आत्मनि तिष्ठन्नात्मनोंतरोयमात्मा न वेद यस्यात्मा शरीरं य आत्मानमंतरोयमयति सत आत्मांतर्याम्यमृतः एष सर्वभूतांतरात्मापहतपाप्मा दिव्यो देव एको नारायण इति, सर्वं खल्विदं ब्रह्मेति, सर्वं समाप्नोषि ततोऽसि सर्व' इत्यादिशास्त्रेषु व्यापकतया व्याप्यचेतनाचेतनात्मकस्य नारायणस्य स्वशरीरभूतानां चेतनाचेतनानां वाचकशब्दवाच्यत्वम्—एवंभूतया शास्त्रदृष्ट्या 'स्वशब्दवाच्यं नारायणमेवोपास्यत्वेनोपदिष्टवानिंद्रः। अत इंद्रशब्देनोपदेशो नारायणस्यैव। तत्र दृष्टांतमाह—वामदेवो हि स्वस्य नारायणात्मत्वदृष्ट्या अहं मनुरभवं सूर्यश्चेत्युपदिदेश, तद्वदिंद्रोपदेशः। अथवा वेदांतविज्ञानोपलब्धया ब्रह्मात्मसामरस्यभावनया ब्रह्मभावमुपगतस्य मनुष्यादिदेहविषयकल्पिताहंभावसंकोचस्य संपन्नविश्वाकारपराहंभावस्य वामदेवस्य स्वात्मनः सर्वगतत्वावगमात् मनुसूर्यादिप्रपंचभावोक्तिः एवमिंद्रस्यापीति निश्चीयते। प्राणोऽस्मि प्रज्ञात्मेति प्राणशब्देन परब्रह्मोच्यते, तस्यानंदरूपत्वेन सकलप्राणनहेतुत्वात्, 'प्राण एव प्रज्ञात्मानंदोऽजरोऽमृत' इति श्रवणाच्च। तथा चाहं ब्रह्मास्मीति ब्रह्मदृष्ट्या मामुपास्वेत्युपदेशः। तथा कृष्णोऽहं पश्यत गतिं ललितामिति तन्मना इति गोपांगनापि अपरा गोपांगनाः प्रत्युपदिष्टवती। एवमन्ये रुद्रादयोऽपि स्वशिष्यान् प्रत्युपदिष्टवंतः। अतः सर्वचेतनाचेतनात्मके श्रीकृष्णे परमसमाधियोगमुपगता भक्तजनाः स्वात्मप्रसक्तदेहभावविस्मरणेन निजात्मानं ब्रह्मतयोपदिदिशुः। तत्र न विरोधः। तथोक्तेभ्योऽन्यप्रक्तैर्नोपदेष्टव्यम्; तेषां तथाविधसमाध्यभावादिति सूत्राभिप्रायः। पुनराशंक्यन वदति—

## जीवमुख्यप्राणलिंगान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३२ ॥

'न वाचं विजिज्ञासीत वक्तारं विद्यात् त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् पतीन् शालावृकेभ्यः प्रायच्छमि'त्यादौ जीवलिंगं दृश्यते। 'यावदस्मिन् शरीरे प्राणो वसति तावदायुः अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती'त्यादौ मुख्यप्राणलिंगं च दृश्यते। तस्माद्धेतोरयमुपदेशो न घटत इति चेन्नैवं वाच्यम्, यतो जीवप्राणशब्दवाच्यत्वं नारायणस्य समुचितम्, उपासात्रैविध्यात्। इहोपासात्रैविध्यं हि ना-

---

१ आत्मनः सकाशात्पृथग्भूतः। २ इंद्रवाचकशब्दवाच्यम्। ३ सत् वेदांतवाक्यं तद्येषां मुखे न वर्तते ते अरुन्मुखास्तान्। ४ अरण्यश्वभ्यः। ५ नहीदं ब्रह्मणो युक्तम्।

रायणस्य स्वकीयमूर्त्यां स्वशरीरभूतविज्ञानमयक्षेत्रज्ञरूपेण च स्वशरीरभूतप्राणरूपेण चेति विवक्षितम्। आत्मतया जीवाश्रितत्वात् प्राणाश्रितत्वाच्च [1]तदुपपत्तितः नारायणस्य स्वरूपोपासनं सद्यो मुक्तिहेतुः, अन्यद्द्वयं च कालांतरेण। तद्योगात् तस्य परमात्मनो योगः शरीरिभावेनेंद्रप्राणयोः संबंधस्तस्मादिहेन्द्रप्राणादिशब्दवाच्योपासनेऽभिहितेऽपि चेतनात्मकस्य नारायणस्यैवोपासनं निश्चीयते।

इति श्रीशुद्धैकान्तधर्मप्रवर्तकसंसारसिंधुनिमग्नजनवर्गनिष्कासकाधर्मतिमिरविनाशकभास्करप्रकटपुरुषोत्तमश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने प्रथमाध्यायस्य प्रथमपादः[2] ॥१॥



## प्रथमाध्याये द्वितीयपादः।

परब्रह्मज्ञापकानां स्वोपबृंहकस्मृतिसहितानामुपनिषद्वाक्यानामसंख्यत्वात्प्रतिवाक्यं [3]तन्मीमांसानुपलब्धेः। संशययुतानां [4]केषांचिद्वाक्यानां विचारद्वारेण कृष्णद्वैपायनानुष्ठितैस्तं[5]न्यायैस्तथाभूतानामपि निर्णयो भवति। एवं कतिचिदेव वचनानि तात्पर्यलिंगसमन्वयेन परब्रह्मज्ञापकानि सूत्रितानि; तेषु कतिचित् प्रसिद्धलिंगानि वाक्यानि प्रथमपादे मीमांसितानि; कतिचिदनतिप्रसिद्धलिंगानि द्वितीयपादे मीमांस्यंते।

### सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

छांदोग्ये श्रूयतेऽस्य विषयः 'सर्वं खल्विदं ब्रह्म, तज्जलानिति, शांत उपासीत, अथ खलु क्रतुमयोऽयं पुरुषः, यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीर, इति। अत्र सर्वं खल्विदं ब्रह्मेति सर्वात्मकत्वेनोपदिष्टं ब्रह्म किं क्षेत्रज्ञसंज्ञो जीवात्मा वा परब्रह्मसंज्ञो नारायणो वेति संदेहः। क्षेत्रज्ञसंज्ञो जीवात्मेति पूर्वः पक्षः।तस्य सर्वात्मकत्वोपदेशसंभवात्।स एव श्रुत्युपदिष्टं ब्रह्मास्ति; समस्तहेयप्रतिकूलस्य कल्याणैकतानस्य परब्रह्मसंज्ञनारायणस्य सकलहेयाकृतिरूपसर्वात्मकत्वविरोधादेव सर्वात्मत्वोपदेशो हि न घटते; क्षेत्रज्ञसंज्ञजीवात्मनो हि कर्महेतुकब्रह्मादि-

---

१ उपासनप्राप्तितः। २ प्रथमपादे अधिकरणानि १० सूत्राणि ३२। ३ तस्य परब्रह्मणो मीमांसानुपलब्धेः। ४ संदिग्धवाक्यविषयकाधिकरणैः। ५ संशययुतानामपि वाक्यानाम्। ६ खलुशब्दो वाक्यालंकारार्थः, अथशब्दो हेत्वर्थः यस्मात्पुरुषो जीवः क्रतुमयः क्रतुप्रायोऽध्यवसायात्मकस्तस्मात् यादृशः क्रतुर्यस्य सोऽयं यथाक्रतुर्यथाध्यवसायोऽस्मिँल्लोके इह वर्त्तमाने देहे जीवन् स पुरुषो भवत्यस्ति तथा तादृगेव इतोऽस्माद्देहात्प्रेत्य मृत्वा भवति क्रतुफलात्मकोऽस्तीत्यर्थः।

स्तंबपर्यंतभावः संभवति स्रष्ट्र्यादिकारणत्वं च तत्तत्कर्मनिमित्ततया सर्गादिकर्मापि संभवति; ब्रह्मशब्दोऽपि बृहत्त्वगुणयोगेन 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत' इति श्रुतेस्तत्रैव वर्तते इति प्राप्ते सिद्धांतं ब्रूमः–तज्जलानिति, सर्वं खल्विदं ब्रह्मेत्यादौ सर्गस्थितिप्रलयहेतुकं तदात्मकत्वं प्रसिद्धवन्निर्दिश्यमानं परब्रह्मसंज्ञनारायणस्यैवोपपद्यते। परस्माद् ब्रह्मण एव जगज्जन्मस्थितिलयाः प्रसिद्धाः सोऽकामयत बहु स्यां प्रजायेयेति, इदं सर्वमसृजतेत्यादिषु। तथा सर्वात्मकत्वं जन्मादिहेतुकं परस्यैव प्रसिद्धम्; सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः एतदात्म्यमिदं सर्वमिति हेयप्रतिकूलस्य कल्याणैकतानस्य परमात्मनो हेयाकृतिसर्वभूतानामंतर्यामित्वेनात्मत्वं विरोधशून्यम्। 'यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरं य आत्मनि तिष्ठन् यस्यात्मा शरीरं सत आत्मांतर्याम्यमृत' इत्यादिषु शरीरभूतसमस्तचेतनाचेतनात्मत्वेन सर्वात्मभावप्रतिपादनात्। देहात्मनोश्च विलक्षणतया स्वरूपस्वभावव्यवस्थाप्रतिपादने कृतेऽपि यथा तयोरेकत्वनिर्देशस्तथा सर्वं ब्रह्मेति सकलचेतनाचेतनानां परमात्मनश्च विलक्षणस्वरूपस्वभावादिव्यवस्थाप्रतिपादने कृतेऽपि तेषां देहदेहिभावादेकत्वनिर्देशः। अतः सर्वशब्दवाच्ये सर्वात्मन्यंतर्यामिणि परब्रह्मण्येव सर्वशब्दप्रवृत्तिरुपपद्यते। शरीरवाचिशब्दः शरीरिण्यात्मन्येव पर्यवस्यति; देवमनुष्यादिशब्दवत्। सूत्रार्थो विविच्यते-सर्वं खल्विदं ब्रह्मेत्यादिषु सर्वत्र श्रुतिषु समस्तचेतनाचेतनैकभावेन निर्दिष्टं तेषामंतर्यामित्वेनात्मभूतं परब्रह्मैव ज्ञातव्यं ननु जीवात्मा, कुतः, प्रसिद्धोपदेशात्–तज्जलानिति हेतुतः सर्वमिदं जगत् ब्रह्म खल्विति प्रसिद्धवत्तस्योपदेशात्। तस्माद्ब्रह्मणो जातत्वात् ब्रह्मणि प्रलीनत्वाद् ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते सति यस्माज्जगज्जन्मस्थितिलयाः वेदांतेषु प्रसिद्धाः तदेवात्र ब्रह्मेति विज्ञायते। तथाहि श्रूयते 'यतो वा इमानि भूतानि जायंते' इत्यादि। एवंभूतं परं ब्रह्म शांत उपासीतेति यस्योपासनमुक्तं तस्मिन्नसंख्यगुणगणानुपपादयितुं सूत्रमारभ्यते–

---

१ स चानंत्याय कल्पते इतिश्रुत्यंतरे बृहत्त्वं विद्यते। २ यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते' इत्याथर्वणश्रुतिः यस्य ज्ञानमेव तपस्तस्मादीश्वरादेतत्कार्यरूपं ब्रह्म हिरण्यगर्भादिसूक्ष्मभूतात्मकं नाम स्थूलभूतात्मकं रूपं च व्रीहियवादि सर्वभौतिकमन्नं च जायत इत्यर्थः। ३ जीवात्मन्येव। ४ तस्माज्जायते इति तज्जं तस्मिन् लीयते इति तल्लं तेनानिति चेष्टते इति तदनं तज्जं च तल्लं च तदनं च तज्जलान् अवयवलोपः छांदसः, इति शब्दा हेतौ, यस्मादेवं तस्मात्सर्वं जगद् ब्रह्मैवेत्यर्थः। ५ चिदचिन्मिश्रजगदात्मकत्वम्।

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

चकारो जीवात्मनः सर्वात्मकत्वं व्यावर्त्तयति। पूर्वसूत्रे परब्रह्मैव प्रतिपादितं न जीवात्मा; कुतः, विवक्षितानां सर्वोत्तमत्वेन वक्तुमिष्टानामपहतपाप्मत्वाद्यष्टानां सर्वज्ञत्वादिषण्णां च मनोमयत्वादीनां च सत्यशौचादीनां च गुणानां नारायणमुनिसंज्ञे परब्रह्मण्येवोपपत्तेः। तथाहि श्रूयते स्मर्यते च 'एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासःसत्यकामः सत्यसंकल्प इति; अपहतपाप्मत्वं नाम अपहतकर्मत्वं कर्मवश्यताशून्यत्वमित्यर्थः, तद्वत्त्वं हि परमात्मगुणः नतु कर्माधीनजीवगुणः।

'सर्वज्ञता तृप्तिरनादिबोधः स्वतंत्रता नित्यमलुप्तदृष्टिः।
अनंतशक्तिश्च विभोर्विभुज्ञाः षडाहुरंगानि महेश्वरस्य' ॥

इत्युक्ताः षडंगभूता गुणाश्चेति मनोमयः प्राणशरीरो भारूपस्सत्यसंकल्प आकाशात्मा सर्वकर्मासर्वकामः सर्वगंधः सर्वरसः सर्वमिदमभ्यात्तो वाक्यनारद इति परिशुद्धेन तदेकाग्रेण मनसा ग्राह्यत्वाद्धेतोस्तस्मादेवागत इति व्युत्पत्या मनोमयः तत आगत इति मयड्विधानं विवेक[1]विमोकाऽभ्यासक्रियाकल्याणानवसादाऽनुद्धर्षेभ्यः संभवादिति विवेकादिसप्तसाधननिगृहीतेन नारायणोपासननिर्मलीकृतेन मनसैव गृह्यते इत्यर्थः। अनेन हेयप्रतिकूलकल्याणैकतानत्वेन समस्तेतरवस्तुविलक्षणस्वरूपत्वं निगद्यते;मलिनमनोभिर्मलिनवस्तूनामेव ग्राह्यत्वात्। प्राणशरीरः-विश्वस्थितसर्वप्राणिप्राणानां

---

१ विवेकादीनां स्वरूपमाह –जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेक इति अत्र निर्वचनम्; आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवानुस्मृतिरिति विमोकः। कामानभिध्वंग इति शान्त उपासीतेति निर्वचनम्। आरंभणसंशीलनं पुनः पुनरभ्यास इति निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण; सदा तद्भावभावित इति पंचमहायज्ञाद्यनुष्ठानं शक्तितः क्रियेति निर्वचनम्; क्रियावानेष ब्रह्मविदां वरिष्ठः तमेव वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसा नाशकेनेति च सत्यार्जवदयादानाहिंसानभिध्या(अभिचारकर्महीनत्वम्)कल्याणानीति निर्वचनम्; सत्येन लभ्यस्तेषामेवैष विरजो ब्रह्मलोक इत्यादिदेशकालवैषम्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जन्यं दैन्यमभास्वरत्वं मनसोऽवसाद इति तद्विपर्ययोऽनवसादः निर्वचनम्; नायमात्मा बलहीनेन लभ्य इति [1]तद्विपर्ययजा तुष्टिरुद्धर्ष इति तद्विपर्ययोऽनुद्धर्ष इति अतिसंतोषश्च विरोधीत्यर्थ; निर्वचनमपि शान्तो दान्त इति।

---

१ तद्विपर्ययजा-अत्र तच्छब्देन सत्संगतोऽनाद्यविद्यानिवर्त्तकभगवत्स्वरूपज्ञानानंतरमहरहरुत्तरोत्तरानुष्ठीयमाना वृद्धिर्ग्राह्या।

धारकः 'अनुप्राणंति यं प्राणाः प्राणंतं सर्वजंतुषु' इत्यादिनोक्तः सूत्रात्मसंज्ञः प्राणः शरीरं यस्य एवं प्राणशरीरत्त्वमुच्यते; भारूपः–भास्वरविग्रहः अप्राकृतस्वासाधारणानवधिकातिशयकल्याणदिव्यविग्रहत्वेन निरतिशयदीप्यमान इत्यर्थः। सत्यसंकल्पः–अप्रतिहतसंकल्पगतिः, आकाशात्मा-आकाशवन्निर्लेपो वा सूक्ष्मो वा स्वच्छरूप आत्मा यस्य तथाभूतः। यद्वा आकाशे चिदाकाशाख्ये ब्रह्मपुरे वर्तमान आत्मा दिव्यविग्रहो यस्य तथोक्तः। यद्वा आकाशस्य चिदाकाशाख्याक्षरब्रह्मण आत्मा आत्मतया सदा वर्तमानः, सर्वकर्मा–क्रियते तत्कर्म सर्वं जगत्कर्म यस्य, यद्वा सर्वं कर्म क्रिया जगदुत्पत्त्यादिरूपा यस्य तथाभूतः, सर्वकामः–काम्यंते इति कामाः–भोग्यभोगोपकरणादयः, सर्वे कामा यस्य यदधीनाः संति, अतः सर्वकामः सर्वगंधः सर्वरसः अशब्दमस्पर्शमित्यादिना प्राकृतगंधरसादिनिषेधादप्राकृताः स्वासाधारणाः सर्वप्रकाराः निर्दोषाः निरतिशयमंगलरूपाः स्वभोग्यभूताः गंधरसास्तस्य संतीत्यर्थः। सर्वमिदमभ्यात्तः–उक्तमिदं रसपर्यंतं सर्वं कल्याणगुणवृंदं अभ्यात्तः–स्वीकृतवान्; भुक्ता ब्राह्मणा इतिवत्कर्मणोऽविवक्षया कर्तरि क्तः। अवाकी-वागुक्तिः साऽस्य नास्तीत्यवाकी प्राकृतगुणमयवाणीशून्यः जनकल्याणजनकवाणीयुत इत्यर्थः। अनादरः-अभक्तजनानां दर्शनादिदाने नास्ति आदरो यस्य तथाभूत इति मनोमयत्वादयो व्याख्याताश्च–

'सत्यं शौचं दया क्षांतिस्त्यागः संतोष आर्जवम्।
शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम्॥
ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः।
स्वातंत्र्यं कौशलं कांतिर्धैर्यमार्दवमेव च॥
प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः।
गांभीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः॥
एते चान्ये च भगवन् नित्या यत्र महागुणाः।
प्रार्थ्या महत्वमिच्छद्भिर्न वियंति स्म कर्हिचित्'॥ इति

एते चान्ये चेत्यन्यशब्दवाच्याः स्वाभिमतानुरूपैकरूपाचिन्त्यनित्याद्भुतनिरवद्यनिरतिशयौज्ज्वल्यसौगंध्यसौकुमार्यलावण्ययौवनाद्यसंख्यस्वरूपगुणा अपि बोध्याः। स्वदयागुणेन त्रिगुणातीताप्राकृतब्रह्मपुरधामतो नारायणोऽपरिमितजनोद्धारणाय रामकृष्णादिरूपो भूत्वा इह लोके संचरते। तथाहि श्रूयते 'अजायमानो बहुधा व्यजायते'ति, स्मर्यते च–

' नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः'॥ इति

निर्गुणस्य सत्वादित्रिगुणहीनस्य, गुणात्मनः उक्ता अप्राकृता अपहतपाप्मत्वादयो गुणा आत्मनि स्वरूपे यस्य तस्येत्यर्थः। एते विवक्षिता गुणाः परमात्मपरब्रह्मादिशब्दवाच्ये नारायणे एवोपपद्यंते। विधिरुद्रादिक्षेत्रज्ञेष्वेतेपां विवक्षितगुणानां संभवशंकां निराकर्तुमिदं सूत्रमारभ्यते–

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

एतेपां विवक्षितासंख्यगुणानामपरिमितक्लेशयुतपरिमितसुखगंधमात्रसेविन्यत्यल्पज्ञे कर्माधीनेऽनाद्यविद्यानादिवंधनवति शारीरे क्षेत्रज्ञकलापे सत्वादिगुणत्रयसहिते विधिरुद्रादिजीवन्मुक्तक्षेत्रज्ञकलापे च अनुपपत्तेरनुपलब्धेश्च। शारीरोऽयं शरीरसंबंधी क्षेत्रज्ञकलापो न विवक्षितगुणभाजनं किंत्वनादिसिद्धपरब्रह्माख्यनारायण एव तद्गुणभाजनम्;

'एते चान्ये च भगवन्नित्या यत्र महागुणाः।
प्राध्र्यां महत्वमिच्छद्भिर्न वियंतिस्म कर्हिचित्' ॥

इति स्मरणात्। एवं सकलसद्गुणभाजनत्वात् स एव सर्वोपास्यो विज्ञायते। इममर्थं निरूपयितुं सूत्रांतरमवतारयति–

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

'एतमितः प्रेत्याभिसंभवितास्मी'ति श्रुत्या प्राप्यस्योपास्यस्य च नारायणस्य कर्मत्वेन तत्प्राप्तुरुपासकस्य जीवकलापस्य कर्तृत्वेन च व्यपदेशात् उपास्यः कर्मत्वेनोपासकश्च कर्तृत्वेन व्यपदिश्यते; अत उभयोरतिवैलक्षण्यं विज्ञायते। तयोः कर्मकर्तृव्यपदेशस्त्वन्यत्रापि स्मर्यते–' मामेति सोऽर्जुनेति, मामेव ये प्रपद्यंते इति च। तमेवार्थं शब्दांतरेण व्यपदिशन् सूत्रमारभते–

## शब्दविशेषात् ॥ ५ ॥

'एप म आत्मांतर्हृदय' इति श्रुत्योपासकः क्षेत्रज्ञः पष्ठीविभक्त्या प्रदर्शितः तदुपास्यो नारायणस्तु प्रथमया। एवं तुल्यप्रकरणे वाजसनेयिशाखावतां च श्रुतौ शब्दविशेपो जीवात्मपरमात्मनोः प्रतिपादनेऽभिहितः। तथाहि 'यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतंडुलो वा एवमयमंतरात्मनि पुरुपो हिरण्मयो यथा ज्योतिरधूममिति'। इहांतरात्मनीति सप्तम्यंतेनांतरात्मपदेनोपासकः शारीरः प्रोच्यते, पुरुपो हिरण्मय इति प्रथमान्तपदाभ्यामुपास्यो नारायणः। अतः स एव परमोपास्य इति सिद्धांतः। पुनस्तत्र सूत्रांतरमाह–

## स्मृतेश्च ॥ ६ ॥

'सर्वस्य चाहं हृदि संनिविष्टो मत्तःस्मृतिर्ज्ञानमपोहनं चेति, यो मामेवमसंमूढो जानाति पुरुषोत्तमम् इति, ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति, भ्रामयन्सर्वभूतानि यन्त्रारूढानि माययेति, तमेव शरणं गच्छेत्यादि, स्मृतिसमुदायादपि पूर्वोक्तप्रकरणे शारीर उपासकः नारायण उपास्यश्च ज्ञातव्य इति सिद्धांतितम्। पुनराशंकयन् सूत्रांतरमारभते-

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

अर्भकौकस्त्वं अल्पस्थानत्वं तद्व्यपदेशः तन्निवासिनोऽल्पत्वनिर्देशश्च। तथाहि 'एष म आत्मांतर्हृदय' इति, अणीयोहृदयनिवासेनाल्पस्थानत्वात् अणीयान् व्रीहेर्वा यवाद्वेत्यादिनाऽल्पस्वरूपनिर्देशाच्चेति हेतुद्वयात् अत्र प्रकरणे परमात्माभिधो नारायणो नाभिहितः, किंतु जीवात्मैवेत्युच्यते चेन्न, निचाय्यत्वात्; ज्यायान्पृथिव्या इत्यादिना महत्त्वेनोपदिष्टस्य परमात्मनोऽप्युपासकाल्पस्थानभूतहृदयादिनिवासादणीयस्त्वेनोपास्यत्वात्। एवं परमात्माऽप्यणीयानभिहितः। अत्र दृष्टांतः-व्योमवच्च; यथा महद्व्योमापि सूचीपाशादिव्याप्तं सदल्पत्वेन दृश्यते, चकारोऽवधारणार्थः, तद्वदस्याणीयस्त्वं ज्यायस्त्वं च श्रूयते। 'एष म आत्मांतर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतंडुलाद्वेति, ज्यायान् पृथिव्या ज्यायानंतरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य' इति उपासकशरीरनिवासेन तस्मिन्नुपगतदोषशंकां निवारयन् सूत्रांतरमवतारयति-

## संभोगप्राप्तिरिति चेन्न, वैशेष्यात् ॥ ८ ॥

उपासकजीववत् परब्रह्मणोऽपि देहांतर्गतत्वं प्राप्तम्, तेन तस्य जीववत् देहसंयोगसंजातसुखदुःखादेर्द्वंद्वस्य यः संभोगः सम्यग्भुक्तिस्तस्य या प्राप्तिः सा संभोगप्राप्तिरित्युच्यते चेन्नैवम्, वैशेष्यात्-उभयोर्धर्मवैलक्षण्यात्। नहि देहांतर्गतत्वं सुखदुःखादिद्वंद्वभोगकारणम्; किंतु शुभाशुभकर्माधीनत्वमेव। तद्धि अपहतपाप्मत्वादिधर्मवतो नारायणस्य न घटते; अल्पज्ञत्वगुणाधीनत्वादिधर्मवतो जीवस्य तु घटत एव। तथाहि श्रूयते स्मर्यते च 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती'ति; 'सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे, एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयानिति, पुरुषः

सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति। एवं तयोः सुखदुःखादीनां भाक्त्वमभाक्त्वं च प्रतिपादितम् ।

## अत्ता चराचरग्रहणात् ॥ ९ ॥

'यस्य' ब्रह्म च क्षत्रं चोभे भवतः ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स' इति श्रूयतेऽस्य विषयः कठवल्ल्याम्। इह ब्रह्मक्षत्रौदनोपलक्षितनिखिलचिदचिन्मिश्रप्रपंचस्य दधिघृतादिस्थानीयमृत्युरूपोपसेचनयुक्तकवलभोक्तृतया श्रूयमाणो नारायणोऽन्यो वेति संशयः। परमकारुणिकस्य सर्वानुग्राहकस्य सकलभक्षकत्वमनुचितम्; हिंसारूपं हि परप्राणविमोचनम्; हिंसाप्रवृत्तेः क्रोध एव मूलांकुरः,क्रोधस्यामंगलगुणस्य मोह एव मूलकंदः, तस्य[2] सर्वसंहारनिदानस्य तम एव प्रकृतिः। अतस्तामसः सर्वसंहर्त्ता नाम, तत्त्वं नाम प्राकृतज्ञानादिमत्त्वान्निष्प्रकाशत्वं सर्वसंहर्त्तृ ब्रह्मेत्युक्ते तस्य नित्यशुद्धस्य निरुपाधिकमंगलादिगुणाकरस्य निःसंसारकलंकस्याज्ञानतमोमोहक्रोधादिकामंगलदोपसंकरप्रसंगः, स्वरूपलक्षणतया निर्णीतं सर्वज्ञत्वनित्यतृप्तत्वादिकमनर्थमेव स्यात्; तस्मात् ब्रह्मणोऽन्य एतादृशगुणः संहर्ता रुद्रनामा क्षेत्रज्ञो भवतीति पूर्वःपक्षः। सिद्धांतस्तु परब्रह्मैव त्रिगुणाभिमानिविविधिरुद्रपृथिव्यादिचराचरसहितासंख्यकोटिब्रह्मांडसंहर्त्तृत्वेन श्रूयते, कुतः चराचरग्रहणात्, चराचरग्रहणेन प्रकृत्युत्पन्नमसंख्यकोटिब्रह्मांडवृंदमुपलक्ष्यते। यदुक्तं रुद्रस्य चराचरग्रहणोपलक्षितसकलांडसंहर्त्तृतया भोक्तृत्वं तदयुक्तम्; रजनीप्रलयजनितलोकदशकसंहरणरूपपरिच्छिन्नशक्तेः प्रकृतिकार्यसहोत्पन्नस्य तमःप्रचुरस्य प्राकृतप्रलयजनितसंहरणवश्यस्य पार्वतीपतेस्तस्य चराचरग्रहणोपलक्षितसकलब्रह्मांडगणसंहरणसामर्थ्यभावात्। एवं च सत्येतल्लक्षणं नारायणसंज्ञे परब्रह्मण्येव संभवति। तथाहि 'पृथिव्यप्सु लीयते' इत्यारभ्य 'महानव्यक्ते लीयतेऽव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते तमः परे देवे एकीभवतीति'—अत्राक्षरशब्देन प्रधानपतिपुरुषो ज्ञेयः, तमःशब्देन महामायाख्यमूलप्रकृतिश्च परे स्वपतौ पुरुषे लीयते; स च पुरुषः देवे परमात्मनि—एवं पृथिव्यादिप्रकृतिपुरुषपर्यंतानां वस्तुमात्राणां लयस्थानं परं ब्रह्मैव। अतोऽत्तेत्युक्तम्। ज्ञः कालकालो गुणीत्यादिना कालस्याप्यत्तृत्वश्रवणात्।

---

१ यस्य परमात्मनो ब्रह्म च क्षत्रं च उभे जात्या प्रसिद्धे ओदनः-अशनं भवतः-स्याताम्; सर्वहरोऽपि मृत्युर्यस्योपसेचनमेव-ओदनस्याऽशनत्वेऽप्यपर्याप्तस्तं प्राकृतबुद्धिर्यथोक्तसाधनरहितः सन् क इत्था-इत्थम्; एवं यथोक्तसाधनवानिवेत्यर्थः, वेद-जानाति, यत्र यस्मिन्धामनि स परमात्माऽऽस्ते तद्ब्रह्मपुरं धामापि को वेदेति शेषः। २ क्रोधस्य।

'प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' ॥ इति
'अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ॥
सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः । कालो गभीरस्य उत्तमपूरुषस्त्वम्' ॥ इति,
'तदा देवाश्च ऋपयो रजःसत्वतमोवशाः ।
ये ते सह विरिंचेन स्वकीयगुणकर्पिताः ॥
प्रविश्य तस्य जठरे शेरते दीर्घनिद्रया' । इति,
'महदादेर्विकारस्य विशेषांतस्य संक्षयः ।
सर्वस्यापि भवत्येव वासुदेवेच्छया ततः ॥
यदा च मायापुरुषौ कालोऽत्यक्षरतेजसि ।
तदिच्छया तिरो यांति स त्वेको वर्तते प्रभुः' ॥

इत्यादिस्मरणाच्च । अनेन प्रकारेण परमात्मनो नारायणस्य विश्वसंहारित्वरूपेण भोक्तृत्वं विज्ञायते, न तु तद्भक्षकतया। सूत्रार्थस्तु-ब्रह्मक्षत्ररूपौदनस्य अत्ता परमेश्वरः। अत्र ब्रह्मक्षत्रशब्दोपलक्षितस्य सचराचरस्यासंख्यकोटिब्रह्मांडरूपस्य जगतो ग्रहणात्। श्रुताद्युपसेचनं हि स्वयमद्यमानं सदन्यस्यापि भक्षणसाधनम् । अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसेच्यमानस्य सकलप्राणिमात्रस्याद्यत्वेन प्रतीयमानत्वात् ब्रह्मक्षत्रग्रहणेन सचराचरमसंख्यकोटिब्रह्मांडरूपं जगदेवोपलक्ष्यते ।

## प्रकरणाच्च ॥ १० ॥

'महांतं विभुमात्मानं मत्वा धीरो न शोचति, 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यः तस्यैव आत्मा वृणुते तनुं स्वामिति, स्वां तनुं वृणुते-निजां मूर्तिं ददातीत्यर्थः। एवं नारायणस्यैव प्रकरणम् ; अतश्च परं ब्रह्म नारायणः सर्वसंहर्त्ता नान्य इति सिद्धम् । इहाधिकरणे सर्वसंहर्तृत्वलक्षणेन सिद्धस्य नारायणस्य द्वा सुपर्णेत्यादिप्रसिद्धं स्वविभूतिजीवसाहचर्यमभिव्यंजयितुमधिकरणारंभः-

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

'ऋतं पिबंतौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदंति पंचाग्नयो ये च त्रिणाचिकेताः ॥

१ कर्मिणश्च । २ त्रिःकृत्वो नाचिकेतोऽग्निश्चितो यैस्ते त्रिणाचिकेताः तेऽपि वदंतीत्यर्थः ।

इति श्रूयतेऽस्य विषयः। अत्र सुकृतस्य कर्मण ऋतं फलं पिबंतौ भोक्तारौ छायातपाविव परस्परविलक्षणौ कौचित् श्रूयेते; तावेतौ बुद्धिजीवौ जीवनारायणौ वेति संदेहः। बुद्धिजीवौ ताविति पूर्वः पक्षः। कुतः, ऋतं पिबंताविति भोक्तृत्वावगमात्; नारायणस्य न भोक्तृत्वम्, अनश्नन्नन्योऽभिचाकशीतीति दर्शनात्; बुद्धिजीवयोर्भोक्तृत्वं प्रसिद्धमेव। किंच जीवनारायणयोश्चेतनरूपयोः छायातपवदतीव वैलक्षण्यं नास्ति; बुद्धेरचेतनत्वाच्छायावदस्ति जीवाद्वैपम्यम्; अतो बुद्धिजीवाविति प्राप्ते ब्रूमः—लोके ब्रह्मांडगुहायां जीवानां निःश्रेसाय रामकृष्णाद्यसंख्यावतारैर्नारायणः प्रविष्टः—स्वकर्मजन्यदेवमनुष्यादिकमनीयदेहैः स्थितः। तावुभौ सुकृतस्य ऋतं पिबंतौ; तत्र नारायणो निरन्नोऽपि सुष्ठुप्रकारेण कृतस्य—स्वभक्तजनार्पणीकृतस्य कमनीयनानाविधवस्त्रभोज्यान्नादेः ऋतं—स्वसंबंधेन सत्यं कुर्वन् सन् तत्पिबन् परमभक्त्यर्पितत्वादमृतवद्भुंजानो वर्तते; सुकृतिजीवस्तु सुकृतस्य कर्मणो यज्ञादेः ऋतं फलं देवादिशरीरैः पिबन् भुंजानो वर्तते; तौ च कथंभूतौ परमे परार्द्धे द्विपरार्द्धावसाने प्राकृतप्रलये इति यावत्, तौ गुहां प्रविष्टौ; तत्र नारायणः स्वभक्तजनैः सह ब्रह्मपुररूपकंदरां प्रविष्टः, जीवस्तु मूलमायोदरदरीं प्रविष्टः। अनयोश्छायातपाविति निर्देशस्तु अज्ञत्वरूपछायाप्रचुरत्वात् आतपरूपधर्मसमानज्ञानप्रकाशरूपोभयधर्मवत्त्वाच्च वेदितव्यः इति व्याख्यातार्थश्रुतौ तयोरुभयोर्मध्ये एकस्य निरन्नस्यापि भक्तमनोरथपूर्णेच्छया तदर्पितान्नादिभोक्तृत्वावगमात् आत्मारामोऽप्यरीरमदिति भोक्तृत्वस्मरणाच्च स्वतंत्रतया गुहाप्रवेशश्रवणात्। अन्यत्र च 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणमिति'[1] गुहाप्रवेशदर्शनात्, इतरस्य[2] विषयभोजनशीलस्य तु कर्मपारवश्यगुहाप्रवेशभोक्तृत्वावगमात् उभयोश्छायातपवद्वैलक्षण्यं बोध्यम्; अतोऽत्र न बुद्धिजीवावभिहितौ। यदुक्तं नारायणस्य न भोक्तृत्वं तदुक्तप्रकारेणायुक्तम्। सिद्धांते तु जीवनारायणावेव। यदुक्तं तयोर्न वैलक्षण्यमिति तत्र 'यतो नित्योऽनित्यानां चेतनश्चेतनानामि'त्यादिश्रुत्या नित्यत्वचेतनत्वादिना जीवनारायणयोः साम्येऽपि वैषम्यमनादिमलसंबंधभावाभावाभ्यां संभवति।'ज्ञाज्ञौ द्वावजावीशानीशौ' इत्यादिश्रुत्या ज्ञत्वाज्ञत्वस्वातंत्र्यास्वातंत्र्यादिधर्मवैषम्यं चावगम्यते। ननु कथमेतयोः शरीरसंबंधे समानेऽपि कस्यचिदज्ञत्वादिकानर्थसंबंधः कस्यचिदनर्थाभाव इति न शंक्यम्; सुखदुःखयोर्नैकाश्रयत्वं प्रयोजकम्, किंतु स्वातंत्र्यास्वातंत्र्यमेव। तथाहि श्रुतिः 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः, जुष्टं यदा पश्यत्यन्यमीशमस्य महिमा-

---

१ कठवल्लीपु। २ जीवस्य।

नमेति वीतशोक' इति; अस्याः सांप्रदायिकोऽर्थः-जीवोऽयमनादिना कर्मनिगडेन बद्धस्तत्तत्फलभोगानुगुणमायामयवहुकलेवरप्रविष्टो दुर्वारितापसंघातमनुभवन्ननीशया पारवश्येन तन्नपोहितुमकुशल एव मुह्यमानः शोचति-महामोहनिबंधनशोकजलधिमग्नो वर्तते;जुष्टं महामुक्तैः सेवितमन्यं क्षराक्षरपुरुपभिन्नम् ईशं सर्वनियंतारं राधालक्ष्मीपतिं यदाऽस्य प्रसादेन पश्यति-अपरोक्षेण जानाति तदाऽस्य महिमानं निरतिशयम् अपहतशोकः प्राप्नोति;अतःस्वतंत्रस्य नारायणस्यानादिमुक्तस्य शरीरसंबंधेऽपि जीववत् न तद्गतदोपापत्तिः। तस्माज्जीवनारायणौ गुहागताविति निश्चीयते। सूत्रार्थस्तु-आत्मानौ आत्मशब्दवाच्यौ जीवात्मपरमात्मानौ स्थितिकाले ब्राह्मणादिदेहे हृदयगुहां नियंतृनियम्यभावेन प्रविष्टौ। तत्र परमात्मा दिव्यमूर्त्या स्वधामस्थःसन् हृदयगुहां प्रविष्टे जीवे विकसितांतर्यामिशक्त्या प्रविष्टः सन्नियमयति; स्वयं तु ब्रह्मांडगुहायां स्वभक्तसुखार्थं रामकृष्णादिरूपैरपि विचरति; प्रलये तु तयोर्मध्ये एकः स्वभक्तैः सह ब्रह्मपुररूपां गुहां प्रविष्टः सन् महामायोदररूपां गुहां प्रविष्टे इतरस्मिन् संकुचितांतर्यामिशक्त्या प्रतीयते, इति तात्पर्यार्थेन तौ गुहां प्रविष्टौ;-तद्दर्शनात्-तयोः ऋतं पिबंतौ सुकृतस्येति तं दुर्दर्शं गूढमनुप्रविष्टमित्यादिषु गुहाप्रवेशदर्शनादिति। पुनस्तमेव निर्णयमाह–

## विशेषणाच्च ॥ १२ ॥

तयोर्विशेषणात् पृथक्पृथग्विशेषणदर्शनात् जीवनारायणावस्मिनप्रकरणे भिन्नविशेषणैर्विशिष्येते 'न जायते म्रियते वा विपश्चिदित्यादिना जीवः, अणोरणीयानित्यादिना नारायणः। एतद्विशेषणद्वयं जीवबुद्धिपक्षे कथं संभवति? ततो जीवनारायणावेव गुहां प्रविश्य प्रेर्यप्रेरकभावेन शरीरशरीरिभावेन च परस्परमाश्रिताविति निर्णयः। हृदयगुहांतर्वर्तितयोपास्यस्य नारायणस्य इहोपासनस्थानांतरमुच्यते–

## अंतर उपपत्तेः ॥ १३ ॥

[3]छांदोग्ये श्रूयतेऽस्य विषयः'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्मेती'त्यादि। इहामृतत्वादिलक्षणोऽक्ष्यंतः श्रूयमाणःपुरुषो नारायणो वान्यो वेति संशये नारायणादन्यः श्रुतो न नारायण इति वदामः। नारायणस्य 'दहरोऽस्मिन्नंतराकाशस्तस्मिन् यदंतस्तदन्वेष्टव्यं तद्वा विजिज्ञासितव्य'मित्यादिषु हृदयाकाशे एव सन्निधानश्रवणात्, जीवस्य तु विविधरूपग्रहणाय चक्षुरिंद्रियप्रवेशोऽस्ति मनःसंबंधात्; स एवाक्षिपुरुषः अथवा छायापुरुष एवाक्षिपुरुष इति प्राप्ते

१ शरीरगत। २ जीवे। ३ उपकोसलविद्यायाम्।

निरूपयामः -नारायण एवाक्ष्यंतः पुरुष इति निरुपाधिकामृतत्वाभयत्वादीनामस्मिन्नेवोपपत्तेः । यदुक्तमक्ष्यंतः स्थितिर्नारायणस्य न श्रुतेति तत्राह—

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

'यश्चक्षुषि तिष्ठन् चक्षुषोंऽतरः यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरंतरोऽयमयति एष त आत्मांतर्याम्यमृत' इति श्रुत्या चक्षुःस्थितिनियमनादिकं नारायणस्य व्यपदिश्यते। अतो नारायण एवायमक्षिपुरुषो विज्ञायते; छायापुरुषपक्षे पुनरनुपपत्तिमाह-

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

कं ब्रह्म खं ब्रह्मेति पूर्वमस्य सुखविशिष्टतयाभिधानादेवायं नारायणः । नहि छायापुरुषे सुखसंभवः । यदुक्तमक्षिपुरुषस्य जीवरूपत्वं तत्राह—

## अत एव च स ब्रह्म ॥ १६ ॥

यत एव भवभयभीताय उपकोसलाय ब्रह्मजिज्ञासवे 'कं ब्रह्म खं ब्रह्मेत्युपक्रम्योपदिष्टम्; यद्वाव 'कं तदेव खं यदेव खं तदेव कमिति; अत एव खशब्दाभिधेयः आकाशः परमेव ब्रह्म; किमीदृशोपपत्तिरस्ति जीवस्य? नहि जीवे निरतिशयसुखसंभवः। अतो यदेव पूर्वमपरिच्छिन्नसुखरूपतया प्रकृतं ब्रह्म तदेवाक्ष्याधारतया प्रतिपाद्यत इति अक्ष्यंतः पुरुषो नारायणः । पूर्वपक्षे पुनरियमप्यनुपपत्तिरित्याह—

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥

श्रुतमुपनिषदि कं आनंदमयं ब्रह्म यैस्तेषां श्रुतब्रह्मस्वरूपाणामधिगंतव्याया अर्चिरादिगतेस्तदाख्यमार्गस्याक्षिपुरुषं श्रुतवतोऽर्चिषमेवाभिसंभवंत्यर्चिषोऽहरह्न' इत्यारभ्य 'तत्पुरुषो मानवः स एनान् ब्रह्म गमयति एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमम्मानवमावर्त्तन्नावर्त्तंत' इत्यंतेऽभिधानात् नासौ जीवश्छायापुरुषो वा किंतु नारायण एव ।

---

१ एवकारोऽस्यैव हेतोर्नैरपेक्ष्यं द्योतयति। नहि छायापुरुषे तादृक्सुखसंभवोऽस्तीति चशब्दः सूचयति । २ प्राणो ब्रह्म । ३ तत्र कंशब्दो वैषयिकसुखे रूढः, खंशब्दश्चाकाशे रूढ इति परस्परभेदे प्राप्ते श्रुतिराह। ४ तत् तत्रस्थितानुपासकान् ब्रह्मलोकादागत्याऽमानवः मनुसृष्टावनुत्पन्नः ब्रह्मलोकभव इति यावत् स पुरुषः ब्रह्म गमयति प्रापयतीति अर्चिरादिदेवैर्नेतृभिरुपलक्षितत्वाद्देवपथः गंतव्येन ब्रह्मणोपलक्षितत्वाद् ब्रह्मपथश्च; एतेन पथा ब्रह्म प्रतिपद्यमानाः पुनरिमं मानवं मनोः सर्गं जन्ममरणाद्यावृतियुक्तत्वादावर्त्तरूपं नावर्त्तते न प्रविशंतीति ।

## अनवस्थितेरसंभवाच्च नेतरः ॥ १८ ॥

अनवस्थितेः—अक्षिणि प्रतीयमानानां प्रतिबिंबादीनां नियमेन तस्मिन्ननवस्थानात् तेषु निरुपाधिकानाममृतत्वादिधर्माणां असंभवाच्च नेतरः—नारायणादितरः छायापुरुषो जीवश्च देवताविशेषश्चाक्षिपुरुषो भवितुं नार्हति; प्रतिबिंबभूतस्य छायापुरुषस्याक्षिणि न नियमेन स्थितिसंभवः, जीवस्यापि सकलेंद्रियव्यापारयोग्यत्वाय समस्तेंद्रियकंदरूपे स्थाने स्थितिरस्ति; अत एकस्मिन्नक्षिणि सदैव नियता नावस्थितिः निद्रादिषु तदभावात्; देवताविशेषस्य च 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठित' इति किरणद्वारेणावस्थानवाक्यात् स्थानांतरे स्थितस्यापींद्रियाधिष्ठानोपलब्धिः, न च तस्य साक्षादक्षिण्यवस्थितिः, किंतु किरणद्वारेणैव। एतेषां सर्वेषां निरुपाधिका अमृतत्वादयो न घटंते; तस्मादक्षिपुरुषो नारायण एवेति सिद्धम्। तस्यादित्यमंडलपुरुषहृदयादिषूपासनार्थमवस्थानं[1] प्रतिपादितम्; पुनस्तस्य सर्वत्र प्रतिपादयन्निदमधिकरणमवतारयति—

## अंतर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥

अंतर्यामिब्राह्मणेऽन्यत्र चास्य विषयः श्रूयते 'यः पृथिव्यां तिष्ठन् पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमंतरोयमयति स त आत्मांतर्याम्यमृत' इत्यादिश्रुतिभिः काण्वमाध्यंदिनवाजसनेयिनां प्रतिपक्षमुदितेषु पृथिव्यादिसर्ववस्तुष्वंतर्यामितया श्रूयमाणः परब्रह्माख्यनारायणो वा जीवो वा वैराजाभिधेश्वरो वा प्रधानप्रकृतिर्वा मूलप्रकृतिर्वाऽक्षरं ब्रह्म चेति संदेहः। स्वोपार्जितविचित्रकर्मविचित्रफलभोगाय सकलभूतेंद्रियानुप्रवेशो जीवस्य युज्यते, सकलचराचरकारणतया सर्वभूतानुप्रवेशो वैराजपुरुषस्य युक्तः अथवा महदादिरूपेण परिणतत्वात् प्रधानस्य सर्वव्यापकत्वमुचितम्। 'महानव्यक्ते लीयतेऽव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते' इत्यादिना महत्तत्त्वाव्यक्ताख्यप्रधानाक्षराख्यपुरुषाणां तमःशब्दवाच्यायां मूलप्रकृतौ लयोऽभिहितः। तस्माद्धेतोस्तस्या एव तेषामुत्पत्तिः श्रुतिस्मृतिषु प्रदर्शिता। अतस्तस्या मूलप्रकृतेः सर्वत्रानुप्रवेशो युक्तः। 'अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः, प्रत्यग्धामा स्वयं ज्योतिर्विश्वं येन समन्वितमिति, 'लक्ष्यंतेऽतर्गताश्चान्ये कोटिशो ह्यंडराशयः, तदाहुरक्षरं ब्रह्म सर्वकारणकारणमिति स्मरणेन 'तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना, सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि।

---

१ उपासनार्थमवस्थानम्। २ चिदचित्सु।

तस्याः प्रधानपुरुषकोट्यो जज्ञिरे मुने' इति स्कांदोक्त्या च तमःपरे इति श्रुत्या चाक्षरब्रह्मणो मुख्यतया सर्वकारणत्वोक्तेस्तस्य सर्वानुप्रवेशः संघटते एव। 'अक्षरात्परतः पर इति, प्रकृतिपुरुषयोः परस्येति, यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' इत्यादिवाक्यैः सर्वोत्कृष्टत्वादस्पृष्टसकलविकारस्य परब्रह्माख्यनारायणस्य विकाररूपप्रपंचानुप्रवेशो न घटते। ततो नारायणमंतरेण जीवादिष्वेकतमः स्यादंतर्यामीति पूर्वपक्षे प्राप्ते ब्रूमः—पृथिव्याद्यंतर्यामितया श्रूयमाणो नारायण एव सर्वांतरात्मत्वादितद्धर्मव्यपदेशात्। 'अंतः प्रविष्टः शास्ता जनानामिति, तत्सृष्ट्वा तदनुप्राविशदिति, पुरुषविधोऽन्वयोत्र चरमोऽन्नमयादिषु य' इत्यादिषु श्रुतिस्मृतिषु चापि नारायणस्यैव सर्वात्मतयानुप्रवेशदर्शनात् 'स त आत्मांतर्याम्यमृत' इति प्रतिश्रुत्यभ्यस्यमानः सर्वात्मा नारायण एवामृत इत्युच्यते। ज्ञः काल इति, एतदमृतमभयमिति, श्रवणात् 'नारायणः परं ब्रह्म आत्मा नारायणः परः' इत्यादिना समस्तचेतनाचेतनपरत्वं नारायणस्यैव श्रूयते। नारायण एवेदं सर्वमित्यादिषु सर्वविकारिवस्तुप्रवेशे कथितेऽपि तस्य विकारस्पर्शलेशोऽपि नास्ति; अतः सर्वात्मा नारायण एवेति सिद्धांतः। सूत्रार्थस्तु अधिदैवशब्देन भूम्यादितत्वाभिमानिनो देवा ग्राह्याः। अधिलोकशब्देन भूम्यादयश्च। आदिशब्देन तत्स्थजनाश्च। तेषु अधिदैवाधिलोकादिषु यः पृथिव्यां तिष्ठन्नित्यादिश्रुतिभिः पृथिव्यादिष्वधिदैवादिपदाभिहितेषु गदितो योंऽतर्यामी स नारायणः। कुतः, तद्धर्मव्यपदेशात्—तस्य धर्माणां सकलांतरत्वसमस्तवस्तुविलक्षणत्वसर्वशरीरत्वसर्वनियमनत्वसर्वात्मत्वामृतत्वादीनां व्यपदेशादिति। जीवादीनामंतर्यामित्वमुचितमिति यच्छंकितं तत्परिहरन् सूत्रत्रिकं निगदति—

## न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥

सांख्यस्मृत्या प्रोक्तं स्मार्त्तं स्मार्त्तशब्देनाभिहिता प्रधानप्रकृतिर्मूलप्रकृतिश्चैतन्द्वयमंतर्यामीति न श्रुतं, कुतः "अतद्धर्माभिलापात्"-तस्य परमात्मनो ये धर्मास्तेषामभिलपनं श्रुतिभाषणं स्मार्त्ते नास्ति, अतोंऽतर्यामी नारायण एवेति विज्ञायते। शारीरो विराट् शरीराभिमानी पुरुषोऽपि नांतर्यामी; तस्मिन् सर्वांडनियामकत्वादिपरमात्मधर्मानुपलब्धेः। जीवश्च न भवतीत्याह—

## उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥

उभये काण्वा माध्यंदिनाश्चोभयशाखिनः अथवा उभये एते श्रुतिपाठकाः स्मृतिकाराश्चेति केचित् 'यो विज्ञाने तिष्ठन् विज्ञानमंतरो यं विज्ञानं न वेद यस्य वि-

ज्ञानं शरीरं विज्ञानमंतरो यमयतीति, य आत्मनि तिष्ठन्नात्मनोंतरो यमात्मा न वेदेति, 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीति' 'मया ततमिदं सर्वं जगदव्यक्त-मूर्त्तिनेति' 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्' इत्यादिवाक्यैर्जीवा-देनमंतर्यामिणं भेदेनाधीयते; अतो नारायणस्यैव सर्वान्तर्यामित्वं नान्येषां जीवादी-नामिति सिद्धम्। इत्थं जीवादिषु चतुर्षु पूर्वपक्षादुपगतमंतर्यामित्वं निषिध्येदानीमक्षर-ब्रह्मण्युपगतं तन्निषेद्धुं तृतीयमधिकरणमवतारयति—

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥

'[1]अथ [2]परा यया तदक्षरमधिगम्यते' 'यत्तदद्रश्यमग्राह्यम[3]गोत्रम[4]वर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यंति धीरा[5]' इत्यादिः श्रूयतेऽस्य विषयः। अत्राक्षरशब्देन निर्दिष्टमक्षरब्रह्म वा परब्रह्मसंज्ञो नारायणो वेति संदेहः। अक्षरब्रह्मेति पूर्वः पक्षः। कुतः, अदृश्यत्वादिधर्माणां निरवयवे तस्मिन्नेव संभवात्। अतोऽक्षरशब्दवाच्यमक्षरं ब्रह्मैवेति प्राप्ते ब्रूमः-अदृश्यत्वादिगुणकमक्षरब्रह्म भवतु नाम, तथापि 'तदक्षरमधिगम्यते' इत्यनेन मुमुक्षुभिरधिगम्यं प्राप्यं ज्ञेयं च 'यद्भूतयोनिं परिपश्यंति धीरा' इति धीरा धीमतामग्रेसराः संकर्षणादिनित्यमुक्ताः शुकादयो महामुक्ताश्च भूतयोनिं सर्वकारणं यत्पश्यंतीति तात्पर्यार्थेन तेषामुपास्य-तया प्राप्यं ज्ञेयं दर्शनीयं च सर्वकारणं परब्रह्मैवेति सिद्धांतः। 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य' इति श्रवणान्नाक्षरब्रह्म परमोपास्यतया ज्ञेयाद्यर्ह-मिति विज्ञायते। अदृश्यत्वादयो गुणाः परब्रह्मण्यपि संभवंति। तथाहि 'अणोरणी-यान्महतो महीयानिति' 'योऽक्षरे तिष्ठन्नक्षरमंतरो यमक्षरं न वेद यस्याक्षरं शरीरं योक्षरमंतरोयमयति स त आत्मांतर्याम्यमृत' इत्यादिना परब्रह्मसंज्ञस्य परमात्मनः अदृश्यत्वादिगुणके तस्मिन्नक्षरब्रह्मणि तन्नियमनार्थमतिशयसूक्ष्मरूपेण स्थित्युक्ते-स्तस्मादप्यधिकतयाऽदृश्यत्वादिगुणकं परब्रह्म विज्ञायते। 'अचक्षुःश्रोत्रं तदपाणिपाद-मि'त्युक्तिस्तु प्राकृतावयवनिषेधपरा दिव्यावयवप्रतिपादनपरा च। ननु 'एवं सततयु-क्तास्ते भक्तास्त्वां पर्युपासते, ये चाप्यक्षरमव्यक्तमि'त्यादिनाऽक्षरब्रह्मणोऽप्युपा-सनविधानोक्तेस्तज्ज्ञेयं प्राप्यं चाप्यवगम्यते। अतः कथं तत्प्राप्यत्वाद्यनर्हमिति चेच्छृणु निरवयवाक्षरब्रह्मोपासकास्तु ब्रह्मसुषुप्तिभूते तस्मिन्निरवयवतया तदैक्येन स्थिताः, अतस्तत्र सदास्थितस्य दिव्यविग्रहस्य परब्रह्माभिधपुरुषोत्तमस्यानवधिकातिशयस्व-

१ पूर्वमपरा ऋग्वेदादिलक्षणा विद्योक्ता तदानंतर्यमथशब्दार्थः। २ विद्या। ३ वंशशू-न्यम्। ४ जातिहीनम्। ५ सा परा विद्येत्यन्वयः। ६ अथर्वणि।

रूपानंदं निरतिशयं पार्षदत्वसुखं च ते नानुभवंति। अतस्ते कैवल्यार्थिनो मंदभाग्याः। तथाहि श्रूयते 'ततो भूय इव ते तमो य उ विद्यायां रता' इति; अस्याः सांप्रदायिकोऽर्थः-उ इति वितर्के ये नराः ततोऽन्यस्यां विद्यायां निरवयवाक्षरात्मज्ञाननिष्ठायां रताः आसक्ताः केवलं निरवयवाक्षरात्मस्वरूपमुपासते इत्यर्थः, ते परमात्मैकांतोपासनहीनाः अमानित्वादिसाधनयुक्ताः केवलात्मज्ञानवन्तः भूयो बहुतरं तम इव जीवेश्वरब्रह्मपरब्रह्मणां परस्परात्यंतोत्कृष्टत्वनिकृष्टत्वविवेकाभावादज्ञानसदृशं निरवयवं घनतेजोमयं ब्रह्म सुषुप्तिभूतमक्षरात्मस्वरूपं–प्रविशंति निरवयवतया तदैक्येन स्थिता भवंति; नतु तत्रस्थपरमेश्वरपार्षदत्वमुपगता इति। स्मर्यते च 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनमि'त्यादिवचनैः अक्षरब्रह्मोपासकानां कनीयस्त्वं परब्रह्मोपासकानां श्रेष्ठत्वं चाभिहितम्;अतोऽत्र प्रकृतमक्षरशब्दाभिधेयं परब्रह्मैव विज्ञायते। सूत्रार्थस्तु अदृश्यत्वादिगुणकः परब्रह्मसंज्ञः परमात्मैव, नाक्षरब्रह्म; कुतः धर्मोक्तेः-अदृश्यत्वादिगुणवाक्यादुत्तरत्र यस्सर्वज्ञः सर्वविदित्यादिना तस्यैव सर्वज्ञत्वादिधर्माणामुक्तेः। तथान्यत्रापि श्रुतिस्मृतिषु मुमुक्षूणां मुक्तानां चापि ज्ञेयत्वप्राप्यत्वोपास्यत्वदर्शनीयत्वादिपरमात्मधर्माणामुक्तेः। तथाहि श्रूयते स्मर्यते च 'यतो वा इमानि भूतानीत्यारभ्य, तद्विजिज्ञासस्व तद्ब्रह्मे'ति, तं ह आत्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणं प्रपद्ये इति, 'तमात्मस्थं येऽनुपश्यंति धीरास्तेषां शांतिः शाश्वती नेतरेषामिति, 'यो मामेवमसंमूढो जानाति पुरुषोत्तमम्' 'स सर्वविदिति' 'मामेव ये प्रपद्यंते मायामेतां तरंति त इति, 'तमेव चाद्यं पुरुषं प्रपद्ये इति, 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते' इति,

'आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे।
कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः'॥ इति,
ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्'॥ इति,

अत्र किमागतं परमात्मोपासनेन। प्राप्तांतर्यामित्वधर्मलेशेऽक्षरपुरुषे वैराजपुरुषे च न स्वतोंऽतर्यामित्वधर्मः, अतस्तौ नांतर्यामिणौ स्यातां किंतु स्वतंत्रतया तु सर्वांतर्यामी परमात्मैवेति सिद्धम्। पुनरत्र जीवाक्षरब्रह्मणोरनुपपत्तिमाह–

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २३ ॥

परमात्मनः सकाशात् जीवाक्षरब्रह्मणोर्यौ विशेषणभेदौ तयोः श्रुतिस्मृतिषु व्यपदेशाभ्यां हेतुभ्यां इतरौ परमात्मनोऽन्यौ जीवात्माक्षरब्रह्म च तावुपास्यतया ज्ञेयत्व-

प्राप्यत्वादिधर्मकौ न स्तः। तथाहि 'ज्ञाज्ञौ द्वावजावीशानीशावि'त्यादिना सर्वज्ञत्वेशत्वादिगुणवतो नारायणादज्ञस्य कर्मपरवशत्वेनानीशस्य जीवस्याज्ञानीशादिविशेषणभेदव्यपदेशश्रवणात्। 'परात्परतरो ब्रह्म तत्परात्परतो हरिरिति, अक्षरात्परतः परः' इत्यादिनाऽक्षरपरतयाभिहितान्नारायणात् अक्षरब्रह्मसंज्ञस्य ब्रह्मपुरस्थानस्य ब्रह्माक्षरादिविशेषणभेदव्यपदेशश्रवणाच्च ताभ्यामुत्तमो ज्ञेयत्वादिधर्मकश्च परमात्मान्य एवेति निश्चीयते। तथाहि स्मर्यते 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति, यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तम' इति। इदानीं प्रकृतस्य परमात्मनोऽप्राकृतपुरुषाकृतिं प्रतिपादयितुमधिकरणमारभ्यते—

## रूपोपन्यासाच्च ॥ २४ ॥

"आत्मैवेदमग्र आसीत्पुरुषविध" इति, "तमाहुरग्र्यं पुरुषं पुराणमिति, पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिरि'त्यादिश्रुतिवाक्यकलापः श्रूयतेऽस्य विषयः। अत्रानादिसिद्धप्रकृतिजन्याकाररहितदिव्याकारतया श्रूयमाण आत्मशब्दवाच्यः पुरुषः किं परमात्मवासुदेवादिनामाभिधेयो नारायणो वा प्रकृत्यधिष्ठाता पुरुष इति संदेहः। पूर्वपक्षन्याये तु प्रकृत्यधिष्ठाता पुरुष इत्युच्यते; कुतः, येनेक्षितायाः प्रकृतेर्विराडादिसकलचराचरोत्पत्तिश्रवणात्। अतोऽनादिसिद्धदिव्यपुरुषाकारः प्रकृत्यधिपतिः पुरुष एवाभिहित इति प्राप्ते सिद्धांतं ब्रूमः-प्रकृत्यधिष्ठातुः पुरुषस्य सप्रकृतिकस्य तु परमात्मतेजसि लीनत्वात् अनादिसिद्धाप्राकृतदिव्याकृतिः पुरुषः परमात्मवासुदेवादिनामाभिधेयो नारायण एव नत्वन्य इति विज्ञायते। तथाहि 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमिति' श्रवणात्।

'यदा च मायापुरुषौ कालोऽप्यक्षरतेजसि।
तदिच्छया तिरोयांति स त्वेको वर्त्तते प्रभुः' ॥ इति,

'प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' ॥

'परमात्मा च सर्वेषामाधारः पुरुषोत्तम' इति, वासुदेवः परं ब्रह्म बृहत्यक्षरधामनि आदावेको द्वितीयोभून्निर्गुणो दिव्यविग्रह इति' तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदे'ति स्कांदवैष्णवपुराणभागवतस्मरणाच्च। सूत्रार्थो विविच्यते—रूपस्य अनादिसिद्धाप्राकृतदिव्यपुरुषाकारतया श्रुतिस्मृतिप्रतिपादितस्य स्वरूपस्य उपन्यासात् सृष्टेः पूर्वकालेऽभिधानात् दिव्य-

पुरुषाकृतिः परमात्मैवेति सिद्धम् । प्रथमपादे प्राणाधारत्वेनोपास्यतयोक्तस्य पुनरिह जाठराग्निरूपेणोपास्यत्वमाह—

## वैश्वानरः साधारणशब्दविशेषात् ॥ २५ ॥

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती'त्यादिवचनं छांदोग्येऽस्य विषयः श्रूयते। अत्रोपास्यतयोक्तौ वैश्वानरशब्दवाच्यो नारायणोऽन्यो वेति संदेहः। पूर्वपक्षन्याये तु वैश्वानरशब्देन जाठराग्निरुच्यते।'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैवं घोषं शृणोति' इति वैश्वानरशब्दस्य जाठराग्नौ प्रयोगदर्शनात्, महाभूततृतीयोऽग्निर्वा स्यात् एष वा अग्निर्वैश्वानर इत्यादौ वैश्वानरशब्दस्य तत्र प्रसिद्धत्वात्, अग्निर्देवता वा स्यात्' वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात'इति; अस्या अर्थः-पुत्रे जाते सति वैश्वानरमग्निदेवतां प्रति द्वादशकपालेषु संस्कृतं पुरोडाशं निर्वपेज्जुहुयादिति, इत्यादिषु इष्टिदेवतात्वेन तस्य फलदातृत्वश्रवणात् नतु वैश्वानरशब्दवाच्यो नारायणः, प्रादेशमात्रमिति परिच्छेदावगमात्; अत्रोच्यते नारायण एव वैश्वानरः पूर्वोक्तेषु त्रिषु वैश्वानरशब्दस्य साधारण्येऽपि अस्मिन्प्रकरणे 'को न आत्मा किं ब्रह्म आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषितमेव नो ब्रूही'त्यादिषु नारायणस्यासाधारणब्रह्मशब्दादिविशेषणैर्विशेष्यमाणत्वात् न जाठराग्न्यादिषु तद्विशेषणवृंदं संभवति; अतो नारायण एव वैश्वानरशब्दवाच्यः। सूत्रार्थस्तु वैश्वानरः—वैश्वानरशब्दाभिहितो नारायणः। कुतः, साधारणशब्दविशेषात्-विशेष्यते इति विशेषः जाठराग्न्यादित्रिषु साधारणस्य वैश्वानरशब्दस्य परब्रह्मासाधारणैर्ब्रह्मात्मादिभिर्विशेषणैर्विशेष्यमाणत्वादिति। नारायणपक्षे प्रमाणांतरं वदति—

## स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥

'अग्निर्मूर्धा चक्षुषी चंद्रसूर्यौ दिशः श्रोत्रे वाग्विवृत्ताश्च वेदाः वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथ्वी ह्येष सर्वभूतांतरात्मे'त्यादौ नारायणस्य द्युलोकादिपृथिव्यंतरूपत्वमुक्तम्। इतिशब्दः प्रकारवचनः। तदित्थं रूपं स्मर्यमाणं प्रत्यभिज्ञायमानं अनुमी-

१ महाभूततृतीयाग्नौ। २ अग्नेः। ३ जाठराग्निमहाभूततृतीयाग्निदेवताग्निषु।
४ विश्वे सर्वे नरा जीवा नियम्या यस्येति विश्वानरः स एव वैश्वानरः पंकजादिशब्दवद्योगरूढतया संज्ञाविषये नरे 'संज्ञायामि'ति सूत्रेण नरशब्दे उत्तरपदे विश्वशब्दस्य दीर्घो विधीयते, ततो राक्षसवायसादिवत्स्वार्थिकोऽण्।

यतेऽनेनेत्यनुमानं स्मर्यमाणं वैश्वानरस्य नारायणत्वे लिंगं स्यादित्यर्थः। पुनरत्रोपगतामनिर्णयशंकां परिहरन् सूत्रमाह–

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न, तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥ २७ ॥**

'स एषोऽग्निर्वैश्वानरः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनः आस्यमाहवनीयः तद्यद्[२] भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयादि'त्यादिषु प्रतिपन्नेभ्यः प्राणाहुत्याधारभूतगार्हपत्यादिवह्निनित्रयवाचकेभ्यः शब्देभ्यो हेतुभ्यः 'स यो है तमेवमग्निंवैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेदे'ति श्रुतात्पुरुषेऽन्तः प्रतिष्ठितत्वलिंगाच्च जाठरोऽग्निरेव नासौ नारायण इति चेन्न; जाठराग्निरूपतयोपास्यस्य तदंतर्यामिण उपासनोपदेशात् केवलस्य जाठराग्नेः पूर्वोक्तत्रैलोक्यशरीरात्मत्वासंभवाच्च। किंच स 'एषोऽग्निर्वैश्वानरो यत्पुरुष' इत्येनं वैश्वानरं पुरुषमधीयते वाजसनेयिनः। अतो निरुपाधिकपुरुषशब्दवाच्यवैश्वानरस्तु नारायण एव; तेनेदं पूर्णं पुरुषेण सर्वमिति श्रवणादतो नारायण इति युक्तम्। सूत्रितशब्दानामर्थो विविच्यते-शब्दादिभ्यः-शब्दस्तावदग्निबोधकशब्दो वैश्वानरस्तदादयो हृदयादिस्थानतयोक्ताग्निवाचका ये गार्हपत्यादयः शब्दास्तेभ्यो हेतुभ्यः पुरुषेऽन्तः प्रतिष्ठितमिति पुरुषस्यांतः प्रतिष्ठानाच्च हेतोः अस्मिन्प्रकरणे साधारणाग्निशब्दाभिधेयो जाठराग्निरेव नासौ नारायण इति चेन्न; तथा "दृष्ट्युपदेशात्"-उपास्यो दृश्यतेऽनया सा दृष्टिरुपासना तया वैश्वानरशब्दाभिहितपरमात्मनो जाठराग्निशरीरत्वप्रकारेण उपासनोपदेशात्। कथमिदमवगम्यते इति चेदसंभवात्; केवलजाठराग्नेस्त्रैलोक्यशरीरात्मत्वासंभवात्। अतो नारायण एव वैश्वानरशब्दाभिहित इति निश्चीयते। अपि च कं च एनं वैश्वानरशब्दाभिहितं पुरुषमधीयते वाजसनेयिनोऽन्ये च; पुरुषस्तु अनादिसिद्धाप्राकृतदिव्यपुरुषाकारो ब्रह्मपुरस्थो नारायणः'आत्मैवेदमग्र आसीत्पुरुषविध' इति, विज्ञानम-

---

१ वैश्वानरशब्दवाच्यवस्तुनि। २ तत्तत्रोक्तन्यायेनाग्निहोत्रे संपादिते सति भोजनकाले प्रथमं यद्भक्तमोदनादिभोज्यमागच्छेत् तद्धोमीयं होतव्यद्रव्यमिति चिंतयेत्। ३ भोक्ता। ४ त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविशिष्टतया प्रतीयमानोऽग्निशब्दो जाठरशरीरतया तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः। यथोक्तं भगवता-"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति जाठरानलशरीरो भूत्वेत्यर्थः।

यादन्योंतर आत्मानंदमयः स वा एष पुरुषविध इति, यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठित' इत्यादिषु प्रसिद्ध एवेति सूत्रतात्पर्यार्थः ।

## अत एव न देवता भूतं च ॥ २८ ॥

यतोऽयं वैश्वानरस्त्रैलोक्यशरीरकः पुरुषशब्दवाच्यश्च भवति अत एव न देवता अग्निर्न तृतीयं भूतं च । इह जाठराग्निशब्दवाच्यत्वे तद्योजनाया भेदमाचार्यांतराणां मतेषु दर्शयति—

## साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥

हरेरग्निरूपतयोपास्यत्वादेवेदं पूर्वोक्तमग्निशब्दसामानाधिकरण्यं नावश्यम्; कुतः, यज्ञनारायणोपासनायामनलाग्रनयनादियोगेन नारायणे एवाग्निशब्दस्य साक्षाद्वृत्तित्वसंभवादिति पूर्वोक्तसामानाधिकरण्याभावे सत्यपि तस्याग्निशब्दवाच्यत्वे विरोधाभावं जैमिनिरुवाच ।

## अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥

'यस्त्वेतमेवं प्रादेशमात्रमि'त्यत्रापरिच्छिन्नस्य तस्य प्रादेशमात्रप्रमाणेन परिच्छिन्नत्वं अभिव्यक्तेरुपासकाभिव्यक्तये्ऽस्तीत्याश्मरथ्यमुनिः ।

## अनुस्मृतेरिति बादरिः ॥ ३१ ॥

द्युप्रभृतिपृथिव्यंतस्य वस्तुवृंदस्य मूर्द्धादिपादांतावयवत्वकल्पनं हृदयाद्यल्पस्थानयोगेन प्रादेशमात्रत्वं च अनुस्मृतेः-सर्वव्यापकत्वाचेतनाचेतनात्मकानंतकोटिब्रह्मांडशरीरकस्याप्राकृतदिव्यविग्रहस्य नारायणस्यानुस्मृतये उपासकस्मृत्यर्थमिति बादरिराचार्यो मन्यते ।

## संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३२ ॥

'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय' इत्युपासकस्योरःप्रभृतीनां वेद्यादित्वकल्पनं विद्यांगभूतायाः संपत्तेः प्राणाहुतेरग्निहोत्रकल्पनार्थमिति जैमिनिः । तथा दर्शयति च श्रुतिः 'अथ य एवं विद्वानग्निहोत्रं जुहोती'ति ।

## आमनंति चैनमस्मिन् ॥ ३२ ॥

एवं ब्रह्मपुरस्थं दिव्यविग्रहं वासुदेवादिनामाभिधेयं पुरुषोत्तमं वैश्वानरशब्दाभि-

२ तस्य वैश्वानरशब्दस्य हेतुतो नारायणपरत्वप्रतिपादनयोजनायाः ।

भिहितं द्युभ्वादित्यादिशरीरकं अस्मिन्नुपासकशरीरे प्राणाहुत्याधारत्वाय आमनंति प्राणशरीरकपरमात्मोपासका ऋषयः। चकारोऽवधारणार्थः। 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः[3] पृथिव्येव पादावि'त्यादिना उपासकस्य मूर्द्धादिपादांतेष्ववयवेषु द्युप्रभृतयः परमपुरुषस्य मूर्द्धादयः संतीति प्राणाग्निहोत्रवेलायामनुसंधेयमित्यर्थः[4]।

इति श्रीशुद्धैकांतधर्मप्रवर्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने प्रथमाध्यायस्य द्वितीयपादः समाप्तः ॥ २ ॥



## प्रथमाध्याये तृतीयपादः ।

अस्मिन् तृतीयपादे स्पष्टतया परब्रह्मस्वरूपप्रतिपादकानामुपनिषद्वाक्यानां मीमांसाप्रसंगादधिकारिवर्णनं च विधीयते ।

### द्युभ्वाद्यायतनस्वशब्दात् ॥ १ ॥

'यस्मिन् द्यौः पृथिवी चांतरिक्षमोतम्मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमन्यो वाचो विमुंचथ अमृतस्यैष सेतुरि'ति अस्य विषयः श्रूयते मुंडकोपनिषदि। अत्र श्रुतौ द्युभ्वाद्याधारतया श्रूयमाणो नारायणोऽन्यो वेति संशयः। नारायणादन्यो वायुरेव द्युभ्वाद्याधार इति पूर्वः पक्षः। 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवंती'ति श्रुतौ तस्य सर्वाधारत्वप्रसिद्धेः इति सिद्धांतं ब्रूमः—द्युभ्वाद्यायतनं द्युक्षितिप्रभृतीनां श्रुतिप्रसिद्धानां आयतनं सर्वाधारतया स्थानभूतं परं ब्रह्म, कुतः, स्वशब्दात्-स्वस्य परब्रह्मणो वाचकासाधारणात्मादिशब्दात् इति सूत्रार्थः। ननु 'तमेवैकं जानथ आत्मानमि'त्यात्मशब्दात् सूत्रात्मनो वायोरप्यात्मशब्दवाच्यत्वे सति द्युभ्वाद्यायतनं वायुरिति ज्ञाते को दोष इत्यत आह—

### मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥

'यदा पश्यः पश्यते रुक्मवर्णं, कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय, निरंजनः परमं साम्यमुपैति' ॥
'यथा नद्यः स्पंदमानाः समुद्रे, अस्तं गच्छंति नामरूपे विहाय ।
तथा विद्वान् नामरूपाद्विमुक्तः, परात्परं पुरुषमुपैति दिव्यम्' ॥

---

१ वायुः । २ बहुलत्वगुण आकाशोऽस्य संदेहः देहमध्यमित्यर्थः । ३ रयिर्धनं धान्यादिरूपं तदुत्पादिका आपोऽस्य बस्तिर्मूत्रस्थानमेव। ४ द्वितीयपादे अधिकरणानि ८ सूत्राणि ३३।

इति पुण्यापुण्यप्राक्तनामरूपविनिर्मुक्तैरुपगता प्राकृतदिव्यरूपनंदसुनंदनादिनामभिरसंख्यमुक्तपुरुषैः उपसृप्यः प्राप्यः परपुरुषो यो नारायणस्तस्यैव श्रुतौ व्यपदेशाच्च, स एवात्र मुमुक्षुप्राप्यतया व्यपदिश्यते; वायोरेतत्कथं संभवेत् अतो न वायुरिति निर्णयः।

## नानुमानमतच्छब्दात् प्राणभृच्च ॥ ३ ॥

अनुमानगम्यं प्रधानमेव द्युभ्वाद्यायतनं तस्य सर्वोपादानत्वादिति न वाच्यम्; अतच्छब्दात्—तस्य प्रधानस्य वाचकः शब्दस्तच्छब्दस्तस्याभावात्—अस्मिन् प्रकरणे प्रधानवाचिशब्दाभावादित्यर्थः, प्राणभृज्जीवश्चापि न भवति परमात्मधर्मानुपपत्तेरिति।

## भेदव्यपदेशात् ॥ ४ ॥

अत्र जीवाद्भेदेन कृष्णस्य व्यपदेशो विद्यते 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः, जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोक' इति। अतः स्वयं नारायण एव द्युभ्वाद्याधारः।

## प्रकरणात ॥ ५ ॥

'अथ परा यया तदक्षरमधिगम्यते' इति परविद्योक्तस्य परस्य खल्विदं प्रकरणम्; अतश्च नारायणः।

## स्थित्यदनाभ्यां च ॥ ६ ॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती'ति जीवस्य कर्मफलादनात् अनश्नत एव दीप्यमानस्यान्यस्य शरीरांतःस्थितिमात्रत्वाच्च जीवादर्थांतरभूतो नारायण एव द्युभ्वाद्यायतनमिति निर्णयः। मुक्तप्राप्यतयेह प्रतिपादितस्य नारायणस्य प्राप्तेः प्रयोजनं निरतिशयसुखं दर्शयति—

## भूमा संप्रसादादध्युपदेशात् ॥ ७ ॥

छांदोग्ये श्रूयतेऽस्य विषयः। छांदोग्येऽपि 'भूमैव सुखमि'त्युक्त्वा भूम्नः स्वरूपमाह- 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति तत्र संदेहः। भूमाशब्दनिर्दिष्टो नारायणस्तदन्यो वेति नारायणादन्यः प्राण एव भूमा पूर्वेषु नामादिषु

१ निर्मुक्तमायागुणोपाधिपूर्वकसर्वभजनीयतया प्राप्यत्वम्। २ मुंडकोपनिषदि। ३ सोऽहं भगवः शोचामि तं मां भगवाञ्छोकस्य परं पारं तारयत्विति नारदेन पृष्टः सनत्कुमारो नाम ब्रह्मेत्युपदिदेश; पुनर्नारदः अस्ति भगवो नाम्नो भूय इति पप्रच्छ, तस्योत्तरं वाग्वाव नाम्नो भूयसीति; तथास्ति भगवो वाचो भूय इति प्रश्ने मनो वाव वाचो भूय इत्युत्तरम्; एवं प्राणपर्यंतं भूयः प्रश्नोत्तरे दृश्येते।

तत्त्वेष्वस्ति 'भगवो नाम्नो भूय' इत्यादौ नारदप्रश्ने सनत्कुमारो 'वाग्वाव नाम्नो भूयसी'त्यादिना वागादीनि निर्दिश्य तेषां परस्परप्रश्नप्रत्युक्तिभ्यां तत्र प्राणस्यैव भूयस्त्वं प्रसक्तमाह, न नारायणस्य, अतो भूमा प्राण इति प्राप्ते ब्रूमः-नारायण एव भूमशब्दनिर्दिष्टः संप्रसादादध्युपदेशात्-संप्रसादो जीव उच्यते; 'अथ य एष संप्रसाद' इति श्रुतेः। स चात्र प्राणशब्देन निर्दिश्यते तस्मादूर्ध्वमात्मांतरत्वेन भूमोपदिश्यते; 'एष तु वा अतिवदति यः सत्येनातिवदतीति' इत्यादिना। अत्र हि पूर्वं 'स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् अतिवादी भवती'ति प्राणवादिनोऽतिवादित्वमुक्त्वा तदनंतरमेष तु वेति तुशब्देन पूर्वस्मात्प्राणातिवादिनः सकाशात् सत्यातिवादिन आधिक्यप्रदर्शनात् पूर्वातिवादनिमित्तात् प्राणशब्दोक्ताज्जीवादेतदतिवादनिमित्तस्य सत्यशब्दाभिधेयस्य हरेराधिक्यमवसीयते; स एवाग्रे भूमा विपुलगुणसंयुक्त उच्यते। अयं भूमशब्दो भावप्रत्ययांतो व्युत्पाद्यते। तथाहि पृथ्वादिषु बहुशब्दपाठात् 'पृथ्वादिभ्य इमनिज्वे'ति बहुशब्दादिमनिच् प्रत्यये कृते 'बहोर्लोपो भू च बहोरि'ति प्रकृतिप्रत्यययोर्विकारे बहोर्भावो भूमेति सिद्धम्; भूमा बहुत्वमित्यर्थः। अत्र चायं बहुशब्दो वैपुल्यपर्यायमहत्ववाची न संख्यावाची। 'अथात आत्मादेश' इत्यात्मत्वेनाप्यग्रे वर्ण्यते। अतः प्राणशब्दनिर्दिष्टाज्जीवादधिक आत्मा भूमा। सूत्रशब्दार्थमात्रं वर्ण्यते-संप्रसादशब्दाभिहिताज्जीववृंदाद् यस्याध्युपदेशः-योऽधिकत्वोपदेशोऽस्ति तस्माद्धेतोः भूमा विपुलगुणविशिष्टो नारायण एवेति निश्चीयते; इति तत्प्रतिपादयितुं सूत्रांतरमारभ्यते—

## धर्मोपपत्तेश्च ॥ ८॥

'स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नीति आत्मैवेदं सर्वं आत्मनः प्राण आत्मन आदेशे'त्यादिना स्वमहिमप्रतिष्ठितत्वसर्वात्मत्वसर्वकारणत्वादयो धर्मा उपदिश्यंते; तेषां नारायण एवोपपत्तिः न प्राणशब्दोदिते जीवे; ततो नारायण एव भूमा नापर इति सिद्धम्। ननु 'मुक्तोपसृप्य'ेति सूत्रे निरंजनः परमं साम्यमुपैतीति मुक्तानां ब्रह्मसादृश्यमभिहितम्;ततो ब्रह्मणः सायुज्यमुपगता मुक्तात्मानस्तत्पृथग्भूता वर्तंत इति

१ तेषु वागादिषु। २ संप्रसादशब्दवाच्यो जीवश्च। ३ प्राणविद्यायाम्। ४ छांदोग्ये प्राणविद्यायाम्। ५ एष तु वा अतिवदतीति वाक्यात्प्राक्। ६ अतिवादित्वं हि स्वोपास्यपुरुषाधिक्यवादित्वम्। ७ नामादिप्राणांतमतीत्य सत्यशब्दवाच्यात्मोत्कृष्ट इति यो वदति स एषोऽतिवादी। ८ पृथ्वादिगणे। ९ भूमशब्दस्य नारायणभावत्वम्।

सिद्धम्; यत्र 'नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति भूमशब्दवाच्ये ब्रह्मणि दृष्टे तन्निष्ठभेददर्शनादिनिषेधः क्रियते; तस्य कथमिह सांगत्यमिति चेत् भूम्नि प्रत्यक्षे जाते सति नान्यत्पश्यतीत्यादेरयमभिप्रायः-निरतिशयसुखस्वभावे यस्मिन्साक्षात्कृते सुखांतराभिलापेण रूपादिविषयदर्शनादौ न प्रवर्तते यन्मग्नः पुरुषः स भूमा ब्रह्मेत्युक्तौ ब्रह्मानंदलवपरमाणूनां विषयसुखविशेषजनकत्वं श्रूयते-'एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंती'ति; तस्मादिह ब्रह्मणि न द्वैतनिषेधप्रसक्तिः। प्रपंचे सत्येव कथं मुक्तात्मनां अपुरुषार्थस्य तस्य दर्शनं निषिध्यत इति न विचार्यम्; नहि मुक्तात्मनां प्राकृतप्रपंचो दर्शनविषयः, किंत्वतिगाढस्थित्या परमानंदमये परब्रह्मण्यारूढानां तेषां निरवधिकातिशयानंदस्वरूपं परब्रह्मैव तन्निष्ठमुक्तवृंदं च दृष्टिविषयो नान्यत्; यथा लोकालोकाचले सदोपगतस्थितीनां देवानां न भूतलस्थलं मेरुपर्वतादिवस्तुमात्रमाभाति, किंतु लोकालोकाचलस्थमेव तथेति संबंधः। तथाहि श्रुतिः 'एतत्ततो भवति आकाशशरीरं ब्रह्म सत्यात्मप्राणाराममि'ति'आप्नोति स्वाराज्यं आप्नोति मनसस्पतिमि'त्यादिना मुक्तात्मा प्रस्तुतस्तस्य तु वाक्पतिरित्यादिश्रुतिवचनेन स्वाधीनाप्राकृतविशुद्धवागिंद्रियादिसंबंध उक्तः। तस्य पुनस्तादृशावस्थाप्राप्त्यनंतरं एतदृश्यमानं प्राकृतप्रपंचजाले व्याप्तं आकाशशरीरं चिदंबरप्रकाशशरीरं ब्रह्मैव भातीति रहस्यार्थः। ततो मुक्तानां ब्रह्मणा सादृश्यं सत्यप्रपंचादर्शनेन प्रपंचो मिथ्येति वाचकत्वं प्रपंचो मिथ्येति दर्शित्वं चेति सर्वं समंजसमिति।

## अक्षरमंबरांतधृतेः ॥ ९ ॥

श्रूयतेऽस्य विषयो बृहदारण्यके 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमि'त्यादि। अत्राक्षरशब्दवाच्यस्त्रेधा संदिह्यते-प्रणवो नारायणो वेति, प्रणवजीवयोरन्यतर एवाक्षरशब्दवाच्यः, अक्षरशब्दस्य वर्णपर्यायत्वात् प्रणववाचकत्वमुचितम्; 'पुरुषोऽक्षरमुच्यते' इति पुरुषस्यापि तदभिधेयत्वमुक्तम्; अतस्तावेवाक्षरशब्दवाच्याविति प्राप्ते ब्रूमः-अत्राक्षरशब्दवाच्यं नारायणाख्यं परं ब्रह्मैव; कुतः, अंबरांतधृतेः-यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदंतरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते, आकाशे

१ मुक्तोपसृप्येति सूत्रे। २ भातीत्यर्थः। ३ स्वाराज्यं सुखैकरसं परब्रह्मणः पदं मनसस्पतिं ज्ञानशक्त्यधिष्ठातृभूतमाप्नोति योगीत्यर्थः। ४ अक्षरशब्दाभिधेयत्वम्। ५ स होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या यदंतरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति स होवाच।

एव तदोतं च प्रोतं चेति सर्वविकाराधारतया निर्दिष्ट आकाशः केस्मिन्नोतश्चेति गार्ग्या पृष्टे 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंती'त्यादिना 'एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्चे'त्यंतेन याज्ञवल्क्यवचनेन निर्दिष्टस्याक्षरस्यांबरांतप्रपंचधृतिरवगम्यते। कथमेतदन्यत्र नारायणात्संभवति ? ननु

'दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् ।
लक्ष्यतेऽतर्गताश्चान्ये कोटिशो ह्यंडराशयः ॥
तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् ।
विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः' ॥

इति स्मृतिस्थाक्षरपदेनांबरांतप्रपंचधारकं ब्रह्मपुराख्यं परमात्मस्थानमक्षरब्रह्मैवोक्तम्; तदेवात्र प्रतीयते न परमात्मेति चेन्न; 'यस्याक्षरं शरीरं' 'अक्षरमंतरो यमयती'ति, 'अक्षरात्परतः पर इति, आकाशशरीरं ब्रह्मेति, एष सर्वभूतांतरात्मे'त्यादिभिरक्षराख्यचिदंबरांतसर्वनियंतृतया तद्व्यापकतया चाक्षरपरतया च सर्वात्मतया च नारायण एवाभिहितः। 'एतस्मिन्नक्षरेऽक्षरशब्दाभिधेये परब्रह्मणि नारायणे हे गार्गि आकाशश्चिदंबराख्यमक्षरं ब्रह्म ओतः प्रोतश्चे'त्युक्तम् ।

## अतः स एवाक्षरशब्दाभिधेयः सा च प्रशासनात् ॥१०॥

सा चांबरांतस्य धृतिशब्दाभिधेया स्थितिः 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठत'इत्यादिप्रशासनाद्धरेः प्रकृष्टाज्ञाधीनावगम्यते। सा बद्धमुक्तोभयावस्थस्यापि जीवात्मनो न संभवति; अतोऽत्र प्रशासिता नारायण एवाक्षरशब्दाभिहित इति निश्चीयते ॥

## अन्यभावव्यावृत्तेश्च ॥११॥

अन्यभावोऽर्थांतरत्वम्; 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मंतृ अविज्ञातं विज्ञातृ' इति वाक्यशेषः नारायणात् अक्षरशब्दस्य प्रणवाद्यर्थांतरत्वं व्यावर्तयति; प्रणवजीवपक्षयोरदृष्टत्वादिविशेषितद्रष्टृत्वाद्यसंभवात्। अतोऽत्र प्रकरणे नारायणोऽक्षरमिति निर्णयः। प्रत्यक्षादिप्रमाणातीतस्यापि नारायणस्य परमकरुणावशादुपासकप्रत्यक्षत्वमुपपादयितुमेतदधिकरणमारभ्यते—

## ईक्षतिकर्मव्यपदेशात्सः ॥१२॥

अस्य विषयः श्रूयतेऽथर्वणि 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुष-

---

१ कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च । २ स होवाच । ३ यस्मिन्नाकाशः ओतः प्रोतश्च तदक्षरम् । ४ बृहदारण्यश्रुतौ ।

अभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत' इति। अत्रेक्षतिकर्मत्वेन श्रूयमाणः परः पुरुषः पुरुषोत्तमोऽन्यो वेति संदेहः। नासौ पुरुषोत्तमः अंडाधिपतिस्त्रिगुणात्मकविधिरुद्रादिकारणम्; 'वैराजरूपो हिरण्यगर्भ एव स सामभिरुन्नीयते ब्रह्मलोकमि'ति तल्लोकप्राप्तिश्रवणात्। परशब्दस्य विधिरुद्रादिजीवोत्कृष्टे तस्मिन्संभवाच्च अथवा प्रकृत्यधिपतिः पुरुषः, तस्य पुरुषशब्दवाच्यत्वात् जीवघनात्पराद्वैराजरूपहिरण्यगर्भात्तत्कारणतया परत्वोपपत्तेश्च तस्मिन्नेव प्रणववाच्यत्वप्रसिद्धेश्च,

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः' ॥

इति तस्यैव प्रकृतिपरत्ववचनाच्चेति प्राप्ते सिद्धांतं ब्रूमः — ईक्षतिधातुकर्मत्वेन कथितः सः पुरुषोत्तमशब्दाभिधेयो नारायण एव। उत्तरत्र 'तमोंकारेणैवायनेनान्वेति विद्वान् यत्तच्छांतमजरममृतमभयं परं चे'ति तदसाधारणशांतत्वादिधर्मव्यपदेशात्; नहि हिरण्यगर्भे शांतत्वादिकमस्ति। ब्रह्मलोकमित्यनेन परब्रह्मवासुदेवपुरुषोत्तमादिनामकस्य नारायणस्य ब्रह्मपुराख्यलोकः प्राप्यतयाऽवगम्यते; जीवघन इति जीवसमुदायाधारभूतो हिरण्यगर्भस्तस्मात्परात्परं हि ध्येयं श्रूयते। ततो हिरण्यगर्भपक्षो न युक्तः। प्रकृत्यधिपतिः पुरुष इति यदुक्तं तदपि न समीचीनम्; 'अमृतमभयं परं चे'ति सदामृतत्वमभयकारणत्वं च प्रकृतिपुरुषोत्कृष्टतया परत्वं च प्रकृतिपतौ कथमुपपद्यते? 'यज्जीवघनाद्धिरण्यगर्भादपि परादुत्कृष्टतरात् प्रकृत्यधिपपुरुषात्परमुत्कृष्टतमं पुरिशयं आत्मनि तिष्ठन् अक्षरे तिष्ठन् प्रकृतौ तिष्ठन् सर्वभूतेषु तिष्ठन्नि'त्यादिनाऽऽरभ्यमाणाभिः 'सत आत्मांतर्याम्यमृत' इत्यंताभिः श्रुतिभिरुक्तविधासु पुरीषु शयानमंतर्यामितया वर्त्तमानं अत एव पुरुषं पुरुषोत्तमशब्दवाच्यं नारायणं तदुपासकः साक्षात्पश्यतीति निरूपितम्। 'प्रकृतिपुरुषयोः परस्येति, त्वत्तः पुमान् समधिगम्य यथाऽस्य वीर्यमिति, मत्तः परतरं नान्यत्किंचिदस्ति धनंजयेति, प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी, पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि, परमात्मा च सर्वेषामाधारः पुरुषोत्तमः' इत्यादिषु सर्वोत्कृष्टतया नारायणस्यैव परतमत्वस्मरणाच्च ईक्षतिधातोः कर्मत्वेन पुरिशयं पुरुषमीक्षत इति व्यपदेशात् स नारायण एवोमित्यक्षरवाच्यः पुरुषशब्दा-

१ वैराजपुरुषे। २ पुरुष एव। ३ पुरुषोऽक्षरमुच्यते इति श्रुतौ।

मिहित इति सूत्रार्थेन निश्चीयते। तस्य पुरि शयनमुपासनं च प्रकटयितुमिदमधिकरणं प्रस्तूयते—

## दहर उत्तरेभ्यः ॥ १३ ॥

छांदोग्ये श्रूयतेऽस्य विषयः 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतराकाशस्तस्मिन् यदंतस्तदन्वेष्टव्यं तद्वा विजिज्ञासितव्यमि'त्यादिवाक्यम्। दहरशब्देन इह भूताकाश उच्यते उत जीवो नारायणो वेति संशयः। आकाशशब्दस्य वियति रूढतया भूताकाशो दहरः अथवा जीवो दहरः स्वल्पपरिमाणत्वात् तस्य दहरशब्दस्याणुभूतेऽस्मिन् संभवात् न सर्वव्यापी नारायणो दहर इति प्राप्ते ब्रूमः- नारायण एव दहराकाशः, कुतस्तस्मिन् उत्तरेभ्योऽपहतपाप्मत्वादिधर्मेभ्यः 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प' इति वाक्यशेषसिद्धेभ्यः। एते कथमचेतने भूताकाशे तथा संसारिणि जीवे संभवंति ? तस्मान्नारायण एव दहराकाशोऽपहतपाप्मत्वादिगुणक इति ब्रह्मपुरे ब्रह्मणः परब्रह्मणः पुरे पुररूपे अस्मिन्नुपासकशरीरे पुंडरीकं पद्माकारं यदिदमुपासकावयवभूतं दहरं हृदयांतर्वर्ति सुसूक्ष्मं वेश्म ध्येयस्य परब्रह्मणः स्थानम्; अथवा परमात्मनो लोकरूपेऽक्षरसंज्ञे ब्रह्मपुरे दहरं सूक्ष्मतरं वेश्म परब्रह्मसंज्ञनारायणस्य मंदिरमस्ति; अस्मिन्नुपासकहृदयांतर्वर्त्तिनि परमात्मवेश्मभूते पुंडरीके ब्रह्मपुरांतर्वर्त्तिनि सूक्ष्मतरे स्वमंदिरे चेत्युभयस्मिन् यो दहरः सूक्ष्मतमः अंतराकाशः अंतरो विलक्षणतया स्थिता य आकाशस्तद्वन्निर्लेपः सर्वाधारभूतश्च परमात्मा दिव्यविग्रहोऽस्ति; तस्मिन् यदंतः अंतःस्थितमपहतपाप्मत्वादि यद्गुणवृंदं तदन्वेष्टव्यम्। तच्छब्देन परब्रह्म तत्स्थापहतपाप्मत्वादिगुणवृंदं च परामृश्यते; तदुभयं मार्गणीयं तद्वा विजिज्ञासितव्यम्; तदुभयं वा ज्ञातुमेष्टव्यमिति श्रुतिरहस्यार्थेन दहराकाशशब्दाभिहितोऽपहतपाप्मत्वादिगुणगणवान् वासुदेवसंज्ञो नारायण एव निश्चित इति विज्ञायते।

## गतिशब्दाभ्यां तथाहि दृष्टं लिंगं च ॥ १४ ॥

'तद्यथापि हिरण्यनिधिं निहितं क्षेत्रज्ञा उपर्युपरि संचरंतो न विंदेयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छंत्य एतं ब्रह्मलोकं न विंदंति अनृतेन हि प्रत्यूढा' इति वाक्यशेषे प्रजानामहरहरस्मिन् दहराकाशे या गतिः श्रूयते, यश्चात्र ब्रह्मलोकशब्दस्ताभ्यामपि दहराकाशो नारायणः। तथाहि श्रुत्यंतरेण नारायणे एव एवंरूपं गमनं दृष्टम्; 'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्या-

मह' इति ब्रह्मलोकशब्दश्च तस्मिन् दृष्टः। 'एष ब्रह्मलोकः सम्राडिति होवाचे'ति ब्रह्मण्यक्षरपदे लोक्यते मुक्तैरिति व्युत्पत्त्या ब्रह्मलोकशब्दस्तद्वाचकः। अतो माभूद्गतिशब्दयोरन्यत्र दर्शनम्। अस्मिन्प्रकरणे सर्वासां प्रजानामहरहः श्रूयमाणं गमनं ब्रह्मलोकशब्दश्च नारायणस्य दहराकाशत्वे पर्याप्तं प्रमाणम् ।

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥

धृतेश्च 'अथ य आत्मे'ति दहरविद्यांतर्गतं दहराकाशं निर्दिश्य 'स सेतुर्विधृतिरेषां लोकानामसंभेदाये'त्यनतिक्रांतप्रकरणे जगद्विधारणोपदेशादपि हेतोर्दहराकाशः परमात्मा। सेतुशब्दावगतं वर्णाश्रमाद्यसंकरहेतुत्वमपि तस्यैव संभवति, नतु तद्व्यतिरिक्तस्य अस्य जगद्विधारणलक्षणस्य महिम्नः अस्मिन्परमात्मनि श्रुत्यंतरेषु उपलब्धेरपि तन्महिमाश्रयो दहराकाशः परमात्मा। तथाहि 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाये'ति, 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठत' इति ।

## प्रसिद्धेश्च ॥ १६ ॥

'को ह्येवान्यात्[1] कः प्राण्यात् [2]यदेषःआकाश आनंदो [3]न स्यात् सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यंत' इत्यादिषु आकाशशब्दस्य परब्रह्मणि नारायणे प्रसिद्धेः। आकाशशब्द एव नारायणस्यापहतपाप्मत्वादिधर्मविशिष्टतया भूतादिव्योमशंकां व्यावर्त्तयतीत्यर्थः ।

## इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १७ ॥

'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचे'ति श्रूयमाणस्य इतरस्य बद्धमुक्तोभयावस्थस्य जीवकलापस्य परामर्शो ग्रहणम् ; तस्मात् स एव दहराकाशोऽस्तीति चेन्न, उक्तानामपहतपाप्मत्वादीनां तस्मिन्नसंभवात्। अतो नारायण एव तदाश्रय इति युक्तम् ।

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥

उत्तरत्र प्रजापतिवाक्ये 'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च[4]

---

१ जीवयेत् । २ यदि । ३ प्रेरक इति शेषः । ४ यः कश्चित्तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्योपदेशेनान्विष्य विजानाति स्वयं वेद्यतामापादयति सः सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोति पूर्णात्मनाऽवतिष्ठत इत्यर्थः।

लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाती'ति जीवस्यापहतपाप्मत्वादिकं श्रूयते, जीवत्वलक्षणमवस्थात्रयवर्त्तित्वं च श्रूयते। 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचेति य एष स्वप्ने महीयमानश्चरति एष आत्मेति होवाचेति तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचेति' ततोऽवस्थात्रयवर्ती जीव एवापहतपाप्मत्वादिगुणविशिष्ट आत्मा भवितुमर्हतीति चेत् न सारमेतत्; निजानादिकर्मरूपाऽविद्यासंबंधघटितासंख्यकलेवरः अनुपगतापहतपाप्मत्वादिगुणको जीवसमुदायः परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते इति, अत्र परं ज्योतिरिति, एका मूर्त्तिरनिर्देश्या शुक्लां पश्यंति तां बुधाः, ज्वालामालोपरुद्धांगीति, मार्कंडेयपुराणस्थवाक्येनोक्तं प्रकाशबहुलाप्रतमतिकमनीयात्ययमाश्रितजनवात्सल्यौदार्यादिगुणजलधिं साक्षान्नारायणस्वरूपं उपसंपद्य स्वेन रूपेणाप्राकृतदिव्यावयविना भागवतीतनुसंज्ञेन निजस्वरूपेणाभिनिष्पद्यते संपन्नो भवति। एवं परब्रह्मप्राप्त्यनंतरमाविर्भूतस्वरूपः आविर्भूतापहतपाप्मत्वादिगुणकश्चात्र प्रतिपाद्यते नतु संसारी जीवसमुदायः। ननु तर्हि मुक्तजीवकलाप इति चेन्न, तस्यानादिसिद्धापहतपाप्मत्वादिगुणविशिष्टपरमात्मस्वरूपप्राप्त्याऽऽविर्भूततद्गुणवत्त्वात्। अतोऽनादिसिद्धगुणगणविशिष्टः परमात्मैव दहराकाशशब्दाभिहितो न बद्धो मुक्तो वा तच्छब्दाभिहितो नाप्यनादिसिद्धापहतपाप्मत्वादिगुणवानिति निश्चीयते।

## अन्यार्थश्च परामर्शः ॥ १९ ॥

'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति जीवस्य दहराकाशशब्दनिर्दिष्टेन परवस्तुना सह संपद्य स्वरूपाविर्भावोऽभिधीयते। तत्रै तादृक्तन्माहात्म्यप्रतिपादनार्थपरामर्शः, जीवकलापस्य स्वरूपाविर्भावग्रहणं अपहतपाप्मत्वादिगुणगणाविर्भावग्रहणं चोच्यते। अतो न विरोधः। इदानीं सूत्रशब्दार्थो विविच्यते-अन्यार्थः अन्यो जीवलक्षणाद्विलक्षणः परमात्ममाहात्म्यप्रतिपादनरूपः अर्थः प्रयोजनं यस्य एवंभूतः परामर्शः जीवकलापस्य स्वरूपाविर्भावादिग्रहणमिति।

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २० ॥

'दहरोऽस्मिन्नंतराकाश' इत्यत्र अल्पश्रुतेरल्पत्वश्रवणात् दहराकाशशब्दाभिहितो जीवः कुतः? अल्पस्थानाश्रयत्वादल्पस्वरूपप्रतीतेर्नायं परमात्मेति चेत्तदुक्तम्-इति शंकायाः पूर्वमुक्तमेवोत्तरं-निचाय्यत्वादेवं व्योमवच्चेति।

१ अस्माच्छरीरादितिश्रुतौ। २ भगवत्समानजीवमहिमप्रदर्शनार्थः।

## अनुकृतेस्तस्य च ॥ २१ ॥

तस्य परमात्मस्वरूपं प्राप्तस्य जीवस्य अनुकृतेः तत्समानधर्मत्वोपपत्तेः, अनुकृतिरनुकारस्तत्समानधर्मत्वमिति यावत्; परमात्मोपासनबलेन तदनुकारात् आविर्भूतस्वरूपत्वमाविर्भूतापहतपाप्मत्वादिगुणकत्वं च भवति; अतोऽनुकृतिं प्राप्तुर्जीवादनुकरणीयः परब्रह्मभूतो दहराकाशोऽर्थांतरभूत एव। अनुकाररूपा तत्साम्यापत्तिर्हि श्रूयते 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्, तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैती'ति ।

## अपि स्मर्यते ॥ २२ ॥

स्मर्यते च तदुपासनात्तत्साम्यापत्तिरूपानुकृतिर्जीवस्य–

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायंते प्रलये न व्यथंति च' ॥ इति,

तथा स्कांदेऽपि 'अक्षराख्याः पुमांसस्ते श्वेतद्वीपेऽत्र धामनि। सेवितुं वासुदेवं तं स्थिता देवर्षिणेक्षिताः॥ प्राप्ते प्रलयकाले तु पुनश्चाक्षरधामनि । स्थास्यंति ते स्वतंत्राश्च कालमायाभयोज्झिताः' इति; एवमन्यार्थश्चेत्यादिसूत्रचतुष्टये परं ज्योतिरिति पदेनोक्तं प्रकाशबहुलावृतमतिक्रमनीयावयवं दहराकाशशब्दाभिहितं ब्रह्मपुरांतर्वर्तिमंदिरस्थं स्वाभाविकापहतपाप्मत्वादिगुणविशिष्टं स्वसाधर्म्यमुपगतैर्मुक्तगणैर्निषेव्यमाणं जनकल्याणायेहाविर्भूतं नारायणस्वरूपं मुमुक्षुजनोपासनीयमिति सिद्धम्। अथ मुमुक्षुजनोपास्यं नारायणस्य रूपांतरमभिधीयते–

## शब्दादेव प्रमितः ॥ २३ ॥

श्रूयतेऽस्य विषयः कठवल्ल्यां 'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, ईशानो भूतभव्यस्य न ततो विजुगुप्सत' इत्यादि; इहांगुष्ठमात्रतया श्रूयमाणः पुरुषः नारायणो जीवो वेति संदेहः। जीव इति वक्तुं युक्तं 'स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः, अंगुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः' इति तस्यांगुष्ठमात्रत्वप्रसिद्धेः। मध्य आत्मनि तिष्ठतीति देहान्तरवर्त्तित्वावगमाच्च न तु नारायणो व्यापक इति प्राप्ते वदामः-नारायण एवांगुष्ठमात्र इति युक्तम्; ईशानो भूतभव्यस्येत्यादिना नारायणस्य सर्वेश्वरत्वश्रवणात्, नात्र (अंगुष्ठमात्र इति श्रुतौ) जीवोऽभिहितः। सूत्रार्थस्तु-शब्दादेव-'ईशानो भूतभव्यस्ये'ति श्रुतिवचनादेव नारायणः प्रमितः अंगुष्ठमात्रतया प्रमाणीकृत इति कथमपरिच्छिन्नस्यांगुष्ठमात्रत्वमिति संदिह्याह–

## ह्रद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥

अपरिच्छिन्नस्यापि नारायणस्यांगुष्ठमात्रत्वं ह्रद्यपेक्षया हृदि-उपासकांगुष्ठमात्रहृदये उपासनापेक्षयाभिहितम्। जीवस्याप्यंगुष्ठमात्रत्वं हृदि वर्त्तनापेक्षया। नारायणोपासने मनुष्याणामधिकारत्वादुपासनशास्त्रविधावधिकारोक्तेरित्यर्थः। मनुष्याणां हृदयं यावत्-प्रमाणं तदवच्छिन्नरूपं नारायणः परमकारुणिकः परिगृह्णाति, तेषां स्वोपासनासिद्धये। अतो नारायणः प्रकाशबहुलाप्तांगुष्ठमात्ररूपेणोपासकानां हृदयमध्ये तिष्ठतीति निर्णयः। मनुष्याधिकारत्वादित्यस्मिन् सूत्रे मनुष्याणामेव नारायणोपासने अधिकारः सूचितः। ननु कथं तर्हि देवानां नारायणसंबंध्युपासनमिति चेत्तत्रेदमधिकरणमारभते—

## तदुपर्यपि बादरायणस्संभवात् ॥ २५ ॥

इह नारायणोपासने देवानामधिकारः संभवति नवेति संशयः। नेति पूर्वः पक्षः। अथ समर्थो विद्वान् शास्त्रेणापर्युदस्तो हि वैदिके कर्मण्यधिकारी प्रोक्तः। न च तेषां सामर्थ्यमस्ति। तेषां विग्रहाभावात्। विग्रहवंतो हि स्तुतिध्यानादीनि कर्तुं कस्यचित्स-मर्थाः। तथा तेषामर्थित्वमपि नास्ति; सुखबहुले स्वर्गे सुखासक्त्या आध्यात्मिकादिता-पत्रयज्ञानाभावात् स्वर्गभोगेषु कालकृतपराभवज्ञानाभावाच्च नित्यानवधिकातिशया-नंदमयनारायणवर्त्तिनिरतिशयाचलसुखानुभवाभावाच्च। एवं सामर्थ्यार्थित्वाद्यभावे सति तेषामुपासनाधिकारो न संभवतीति प्राप्ते ब्रूमः सिद्धांतम्-'इंद्रो वृत्राय वज्रमुद-यच्छदिति, नताः स्म ते नाथ पदारविन्दमि'त्यादिवाक्येषु क्षेपणनमनस्तवनादीनां करशिरोमुखादिव्यापाराणां प्रामाण्यात् देवानां विग्रहवत्त्वमस्ति। अतस्तेषामुपासन-सामर्थ्यमपि संभवति; तथा वेदपुराणेतिहासेषु तेषां वेदाध्ययनं प्रसिद्धमेव; तस्मिन् सति वेदोक्ताध्यात्मादितापत्रयज्ञानसंभवात् तत्रोक्तपरमात्मोपासनोपलभ्यनिरति-शयसुखबोधाच्च तेषामर्थित्वं संभवत्येव। एवं सामर्थ्यादिसंभवात्परदेवतोपासनाधिका-रोऽस्तीति सिद्धम्। सूत्रार्थस्तु तदुपरि तेषां मनुष्याणामुपरि वर्त्तमानानां देवानामपि नारायणोपासनेऽधिकारोऽस्ति, कुतः, तेषां सामर्थ्यार्थित्वादिसंभवात् इति भगवान् बादरायणो मन्यते इति। पुनर्देवानां विग्रहादिमत्त्वे विरोधमाशंक्य परिहरति—

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २६ ॥

नानादेशवृत्तेषु तत्र तत्राहूतानां देवानां सर्वत्र युगपत्सान्निध्यमुचितम्। विग्रहादिमत्त्वे सति तन्न युज्यते; ततः कर्मणि विरोध इति चेन्न शंक्यमेतत्। विग्रहवत्त्वेऽपि सौभरि-प्रभृतिषु युगपदनेकदेहप्रतिपत्तिर्दृष्टा। ततो न कश्चिद्विरोधः। ननु माभूत्कर्मणि विरोधः, वैदिकशब्दे तु स भवतीत्यत आह—

## शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥

कर्मविरोधाभावेऽपि वैदिके शब्दे विरोधः प्रसज्यते; कथमिति चेत्तत्राह-प्राकृतदेहानां सावयवानां जीवनावधित्वात् स्वाभाविकमनित्यत्वमेव। अतः प्राकृतदेहवतां देवानामुत्पत्तिनाशावनिवार्यौ तथात्वे तदुत्पत्तेः प्राक् तद्विनाशात् परतश्च वैदिकेंद्रादिशब्दानां तदाकृतिरूपार्थशून्यत्वम्, अनित्यत्वं वा स्यात्;अनित्यत्वेऽपि प्राकृतत्वेऽपि प्राकृतपुरुषजन्यत्वम्; तेन च विधिनिषेधवाक्यानामप्रामाण्यम्; अतस्तत्प्रयुक्तकर्मणां चासिद्धिरित्यनेकानर्थापत्तिः। ततो वैदिकशब्दविरोधस्य परिहाराय विग्रहवत्त्वं देवानामनंगीकार्यमिति चेन्न, अतो वैदिकाद्देवेंद्रादिशब्दादिंद्राद्यर्थसृष्टेः। यदींद्रादिशब्दा नष्टतदाकृतिवाचकाः स्युः तदा तु खल्विद्रादिनाशे तेषामर्थशून्यत्वमनित्यत्वं वा स्यान्न तथा; किंतु गवादिजातिवाचकशब्दवदाकृतिवाचकत्वमेवेंद्रादिशब्दानामुच्यते। तथाहि यथा कुलालो बुद्धिस्थान् घटादिशब्दान् मनसि स्मृत्वा तत्तदाकारं च स्मृत्वा घटादिकं सृजति तथा पूर्वस्मिन्निंद्रादौ विनष्टे अनादिसिद्धाप्राकृतदिव्यपुरुषाकारनारायणमुखनिःसृताद्वैदिकादिंद्रादिशब्दात् ब्रह्मा पूर्वेंद्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरमिंद्रादिकं तत्तच्छक्तियुक्तं प्रतिमन्वंतरं सृजति। तत इंद्रादिव्यक्तिविनाशेऽपि वैदिकेंद्रादिशब्दस्थायास्तत्तदाकृतेरविनाशेन शब्दानां नित्यत्वादविरोधः। किमत्र प्रमाणमिति चेत् श्रुतिः स्मृतिश्च। तथाहि 'वेदेन नामरूपे व्याकरोत् सदसती प्रजापतिः' तथा स भूरिति व्याहरत्, स भूमिमसृजते'त्यादिश्रुतिः'सर्वेषां च स नामानि कर्माणि च पृथक् पृथक् वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे' इति; संस्थाः संस्थानानि रूपाणीति यावत्, तथा 'नाम रूपं च भूतानां कृत्यानां च प्रपंचनं, वेदशब्देभ्य एवादौ देवादीनां चकार सः' इत्यादिस्मृतिश्च। सूत्रार्थवर्णनम्-शब्दे इंद्रादिवैदिके शब्दे विरोधः, देवानां नाशे तद्वाचकशब्दानामर्थशून्यत्वमनित्यत्वं चेति बाधः। अतस्तेषामविग्रहवत्त्वमंगीकार्यमिति चेन्न, अतः वैदिकेंद्रादिशब्दात् तमालंब्येत्यर्थः। तेषां प्रभवात् ब्रह्मादिद्वारोत्पत्तेः। कथमिदमवगम्यते;प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां प्रमाणाभ्यां करणभूताभ्यामिति।

## अतएव च नित्यत्वम् ॥ २८ ॥

अत एव मंत्रकृतो वृणीते 'नमो ऋषिभ्यो मंत्रकृद्भ्यो' 'अयं सोऽग्निरि'ति विश्वामित्रस्य सूक्तं भवतीति; विश्वामित्रवसिष्ठादीनां मंत्रकृत्त्वेऽपि वैदिकानां विश्वामित्रादिशब्दानां तत्तदाकृतिबोधनिमित्तत्वादेवानादिसिद्धस्य मंत्रब्राह्मणमयस्य वेदस्य नित्य-

---

१ देवशरीरोत्पत्तेः। २ देवशरीरविनाशात्। ३ विधिनिषेधप्रयुक्त।

त्वमुपपद्यते। यतो ब्रह्मा वैदिकान् शब्दार्थान् स्मृत्वा सृजति। कुतः, तस्य तपोयुक्तनारायणोपासनबलेनानधीतपूर्वसिद्धमंत्रादिदर्शनशक्तत्वात्। तथाहि पूर्वविश्वामित्रादीनामाकृतिविशेषान् तत्तद्वैदिकशब्दैः स्मृत्वा तदाकारानेवापरान् तत्तच्छक्तिविशेषयुक्तान् ब्रह्मा नैमित्तिकप्रलये गते सृजति, ते[1] चानधीत्यैव पूर्वसिद्धान् तान्मंत्रानखिलान्पठंति अतस्तेषां मंत्रादिकर्तृत्वमेव वेदनित्यत्वं च। ननु नैमित्तिकप्रलये भवत्वेवं परंतु प्राकृतप्रलये ब्रह्मादौ वेदाख्यशब्दे च विनष्टे कथं वेदनित्यत्वमित्यत आह–

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥२९॥

सृज्यानां विधिवसिष्ठादिनामरूपसमाननामरूपत्वादेव प्राकृतप्रलयावृत्तावप्यविरोधः। तथाहि स सर्वज्ञो भगवान् कमनीयावयवपुरुषोत्तमशब्दाभिधेयो नारायणः प्रकृतिपुरुषाधिप आदिकर्त्ताऽक्षरपुरुषप्रविष्टः सन् पूर्वरचनाविशिष्टं जगत् स्मृत्वा 'बहु स्यामि'ति संकल्प्य भोग्यभोक्तृवर्गविशिष्टं संकुचितस्वांतर्यामिशक्तियुतं प्रलीनत्वादविभक्तनामरूपं यदसंख्यकोटिब्रह्मांडवृंदमस्ति तत् महाप्रलयांते विकसितस्वांतर्यामिशक्तिविशिष्टतया यथानामरूपविभागं सृजति, पूर्वक्रमविशिष्टान् वेदानपि संस्मृत्वा पुत्रभूताय ब्रह्मणे प्रयच्छति। कथमिदमवगम्यते, श्रुत्या स्मृत्या च; 'सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत्, दिवं च पृथिवीं चांतरिक्षमथो इति, यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा' इत्यादिश्रुतिरेव दर्शनं, स्मृतिरपि-अप एव ससर्जादौ तासु वीर्यमपासृजत्। तदंडमभवद्धैमं सहस्रांशुसमप्रभम्॥ तस्मिन्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः। ब्रह्माणं विदधे पूर्वं वेदानस्मै प्रयच्छतीति॥ तथा स्कांदेऽपि स्मर्यते–वासुदेवः परं ब्रह्म बृहत्यक्षरधामनि। आदावेकोऽद्वितीयोऽभून्निर्गुणो दिव्यविग्रहः॥ सकार्यमूलप्रकृतिः सकालाऽक्षरतेजसि। प्रकाशेऽर्कस्य रात्रीव तिरोभूता तदाऽभवत्॥ सिसृक्षाथाभवत्तस्य ब्रह्मांडानां यदा तदा। सकालाविर्बभूवादौ महामाया ततो हि सा॥ तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना। सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि॥ तस्याः प्रधानपुरुषकोट्यो जज्ञिरे मुने। युज्यंते स्म प्रधानैस्ते पुरुषाश्चेच्छया प्रभोः॥ पुमांसो निदधुर्गर्भांस्तेषु तेभ्यश्च जज्ञिरे। ब्रह्मांडानि ह्यसंख्यानि तत्रैकं तु विविच्यते॥ इत्यादि; ततः प्राकृतप्रलयावृत्तावपि वेदानां नित्यत्वमेव। मतांतरमाह–

---

१ विश्वामित्रवसिष्ठादयः।

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥३०॥

छांदोग्ये 'असौ वा आदित्यो देवमधु' इत्युपक्रम्य 'तेयत्प्रथमममृतं तद्वसव उपजीवंती'त्युक्त्वा 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यती'त्यादिवाक्यं ऋग्यजुःसामादिचोदितकर्म संपाद्य रसाधारतया मधुमयस्यादित्यस्य पूर्वदक्षिणपश्चिमोत्तरोर्ध्वांशान् वसुरुद्रादित्यमरुत्साध्यनाम्नां देवगणानां भोग्यत्वेनाभिधाय तैर्भुज्यमानाकारेणादित्यांशानुपास्यानुपदिश्य तानेवादित्यांशांस्तथाभूतान् प्राप्यानुपदिशति' एवमादिषूपासनेषु वस्वादित्यानामधिकारोऽस्ति न वेति संशयः। नास्त्यधिकार इति जैमिनिमतमेव पूर्वः पक्षः। वस्वादीनामुपास्यांतर्गतत्वेन कर्मकर्तृभावविरोधात् प्राप्यस्य वसुत्वादेः प्राप्तत्त्वाच्च। सिद्धांतस्तु वस्वादित्यादिसंज्ञक्षेत्रज्ञांतरात्मनो नारायणस्यैवोपास्यत्वात् वस्वादित्यादिक्षेत्रज्ञानां स्वावस्थोपगतप्राप्यपरब्रह्मानुसंधानाविरोधात् कल्पांतरे परब्रह्मात्मकवस्वादित्यत्वादेः प्राप्यत्वाविरोधाच्च वस्वादित्यादीनां मधुविद्यादिषूपासनेष्वधिकारः संभवंतीति बादरायणमतम्। सूत्रार्थस्तु-मध्वादिषु मधुविद्यादिषु उपासकानां वस्वादित्यादिदेवानां स्वोपास्यत्वमेव स्वप्राप्यत्वमेव च भवति; तस्माद्धेतोः तेषां स्वेषां स्वेष्वेवोपास्योपासकभावरूपविरोधेनोपास्यत्वासंभवात् वर्त्तमानैर्वस्वादित्यादिभिर्वस्वादित्यत्वं प्राप्तमिति प्राप्तस्य प्राप्यत्वासंभवाच्च मधुविद्यादिरूपोपासनेषु वस्वादित्यादीनामनधिकारं जैमिनिराचार्यो मन्यते इति।

## ज्योतिषि भावाच्च ॥ ३१ ॥

'तद्देवा ज्योतिषां ज्योतिरायुर्होपासते अमृतमि'ति ज्योतिषि आदित्याद्यसंख्यज्योतिषां प्रकाशकेऽतिकमनीयावयवे मंगलमूर्त्तौ नारायणाभिधे परब्रह्मणि देवानां साधारण्येनोपासनप्राप्तत्वेऽधिकारभाववचनादन्यत्र मध्वाद्युपासनेऽनधिकारो न्यायसिद्धो गम्यते इत्यपि जैमिनिमतम्।

---

१ तत्तत्रोक्तेषु पंचस्वमृतेषु मध्ये यत्प्रथमममृतं रोहितरूपलक्षणं तदमृतं वसवः प्रातःसवनेशानाः अग्निना मुखेनाग्निना प्रधानेनाग्निमुख्याः संतः उपजीवंत्युभुंजत इत्यर्थः। २ यः कश्चिदेतदमृतं मधु एवं यथोक्तमृग्वेदविहितकर्मपुष्पाद्भ्रमधुकरतापसंक्षरितमादित्यसंश्रयं रोहितरूपं प्राग्दिग्गतरश्मिनाडीसंस्थमग्निप्रधानवसुदेवभोग्यं वेदोपासीत स वसूनामेव मध्ये एकः अन्यतमो भूत्वा वसुभिः सहैक्यं प्राप्याग्निना मुखेनाग्निमुखः सन्नुपजीवतीति। ३ वस्वादिदेवगणैः।

## भावं तु बादरायणोऽस्ति हि ॥ ३२ ॥

मधुविद्यादिष्वपि वस्वादीनामधिकारभावं बादरायणो मन्यते। अस्ति हि वस्वादीनां विद्यमानानां सतां वस्ववस्थपरब्रह्मण उपास्यत्वसंभवः। कल्पांतरे वसुत्वादेः प्राप्यत्वसंभवश्च। कार्यकारणोभयावस्थं ब्रह्मात्र समुपास्यम्। तत्रासौ वा आदित्यो देवमधु' इत्यारभ्य आदित्यवस्वादिनामरूपकृतियुक्तकार्यविशेषावस्थं विकसितांतर्यामिशक्तिरूपं परब्रह्मोपास्यमुपदिश्यते। 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेते'त्यादिना नामरूपकृत्यरहितसूक्ष्मभावापन्नादित्ये संकुचितांतर्यामितयावस्थितं कारणावस्थं परब्रह्मोपास्यमुपदिश्यते। तदुभयावस्थब्रह्मोपासनफलं कल्पांतरे वस्वादित्वमुभयाधिकारावसाने ब्रह्मप्राप्तिश्च। तत्र 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यती'त्यादिना वस्वादित्वरूपं फलमुपदिश्यते। 'न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवाहैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेदे'ति ब्रह्मप्राप्तिरूपं फलमुपदिश्यते। ततो मध्वादिष्वपि देवानामधिकारोऽस्तीति सर्वथा देवा ब्रह्मविद्याधिकारिणोऽन्तर्यामिशक्त्याधारभूतदिव्यमंगलमूर्त्तिपरब्रह्मोपासकाश्चेति निर्णयः। अथ मनुष्याधिकारत्वादिति सामान्येन मनुष्याणामधिकारे प्राप्ते विशेषमाह—

## शुगस्य तदनादरश्रवणात्तदा द्रवणात्सूच्यते हि ॥३३॥

अस्य विषयश्छांदोग्ये श्रूयते—'आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा' इति। अत्राचार्यः शिष्यं शूद्रेत्यामंत्रयते। अतः शूद्राणामपि ब्रह्मविद्यायामधिकारोऽस्ति नवेति संदेहः। तेषामधिकारोऽस्ति अर्थित्वादिसंभवात्। नच त्रैवर्णिकानामेवेति नियमः। शूद्राणामग्निविद्यारहितत्वेऽपि मनोमात्रेण ब्रह्मविद्यारूपोपासनसंभवात्।

---

१ मधुविद्यायाम्। २ तयोर्ब्रह्मणः कार्यकारणोभयावस्थयोर्मध्ये। ३ अथ उदयास्तमनेन प्राणिनां स्वकर्मफलभोगनिमित्तमनुग्रहं कृत्वा तत्कर्मफलभोगक्षये सति सवितृरूपापन्नो विद्वान् तानि प्राणिजातानि आत्मन्युपसंहृत्य ततस्तस्मात्प्राण्यनुग्रहकालादनंतरं उर्ध्वो ब्रह्मीभूतः सन्नात्मन्युदेत्य स्वे महिम्नि प्रकाशं लब्ध्वा नैवोदेता नास्तमेता उदयास्तमनदर्शिप्राण्यभावात्; किंत्वेकलोऽद्वितीय एव मध्ये स्वात्मन्येव स्थाता। ४ तयोरुभयफलयोर्मध्ये। ५ हे शूद्र यदिमाः गाः अन्यच्च धनमाजहार आहृतवानसि तदनेन गवादिधनेनैव मुखेन विद्याग्रहणद्वारेण तीर्थेन शास्त्रोपायभूतेन त्वमालापयिष्यथाः आलापयसि मां भणयसीत्यर्थः। ६ वसंते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति त्रयाणामेवाग्निसंबंधश्रवणात्।

एतेषां विद्वत्ता कथमिति न शंक्यम्। इतिहासपुराणश्रवणादिना तेषां बोधोपलब्धेः। निषादस्थपतिं याजयेदिति न्यायेन महावाक्यग्रहणेऽधिकारसंभवाच्च। तस्मादमीषामधिकारो ब्रह्मविद्यायामुचित इति प्राप्ते ब्रूमः-नास्ति शूद्राणां ब्रह्मविद्यायामधिकारस्तेषामध्ययनाभावेन ब्रह्मविद्याधिकारोपायभूतगुणोपास्यदेवताविशेषस्य तद्गुणादीनां च ज्ञानासंभवात्। इतिहासपुराणानि वेदोपबृंहणं कुर्वंति नतु ब्रह्मविद्याधिकारोपायभावं बोधयंति। किंच ब्राह्मणसान्निध्ये सति शूद्राणामितिहासपुराणश्रवणाज्ञा भवति नतु स्वातंत्र्येण। सा चापि पापक्षयादिफलार्था न तु ब्रह्मविद्यारूपोपासनार्था। ननु तर्हि विदूरधर्मव्याधादीनां कथं ब्रह्मविद्यानिष्ठत्वमिति चेद्ब्रूमः-तेषां जन्मांतरसिद्धज्ञानस्मृतिभ्रंशाभावाद्ब्रह्मविद्यानिष्ठता भवत्येव। कथं ब्रह्मविद्योपदेशे शूद्रेत्यामंत्रणमिति चेत् नात्र जातियोगेन शूद्रेत्यामंत्रणं किंतु ब्रह्मज्ञानाप्राप्त्या शुगस्य संजातेति दर्शनात् शूद्रेत्यामंत्रणम्। एतत्सूत्रार्थेन स्पष्टीक्रियते—तदनादरश्रवणात् ब्रह्मविद्यारहिततया स्वात्मानं प्रति हंसोक्तानादरवाक्यश्रवणात् तदाद्रवणात् तदैव रैकमाचार्यं प्रत्याद्रवणादुपसर्पणाच्च अस्य शुश्रूषोर्जानश्रुतेः ब्रह्मविद्याऽनुपलब्ध्या संजाता शुक् शोकः सूच्यते रैकाचार्येण ज्ञाप्यते हि शब्दो हेत्वर्थः। यतः शूद्रेत्यामंत्रणं न जातियोगेन अतः शूद्रस्य ब्रह्मविद्याधिकारो नास्तीति। अतोऽपि शूद्रेत्यामंत्रणं न जातियोगेनेत्याह—

## क्षत्रियत्वावगतेश्च ॥३४॥

शुश्रूषोर्जानश्रुतेः क्षत्रियत्वस्य अवगतिः प्राप्तिः अतश्च हेतोः न जातियोगेन शूद्रेत्यामंत्रणम्; छांदोग्यस्योपाख्यानोपक्रमे हि 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान् मापयांचक्रे सर्वत एव मेऽत्स्यंती'ति जानश्रुतेर्दानपतित्वं बहुतरपक्वान्नप्रदायित्वं चोक्तम्; मध्ये च 'स ह संजिहान एव क्ष-

१ आजहारेमा इति श्रुतौ। २ हशब्द ऐतिह्यार्थः। जनश्रुतस्य वंशापत्यं जानश्रुतिः। पुत्रस्य पौत्र इति पौत्रायणः। श्रद्धादेयः-श्रद्धापुरःसरमेव ब्राह्मणादिभ्यो देयमस्येति श्रद्धादेयो बहु प्रभूतं दातुं शीलमस्येति बहुदायी; बहुपाक्यो बहुपक्तव्यमहन्यहनि गृहे भोजनार्थिभ्यो यस्यासौ बहुपाक्य एवंगुणसंपन्नोऽसौ जानश्रुतिर्विशिष्टे देशे कस्मिंश्चित्काले चास—बभूव ह किलेत्यर्थः। स जानश्रुतिर्ह किल सर्वतः सर्वासु दिक्षु ग्रामेषु नगरेषु च आवसथान् एत्य वसंति येष्वित्यावसथास्तान् मापयांचक्रे कारितवान्; सर्वतः सर्वेष्वेवावसथेषु मे ममान्नं लोका अत्स्यंति भोक्ष्यंते इत्यभिप्रायवानित्यर्थः। ३ स जानश्रुतिः ह किल संजिहान एव शयनं परित्यजन्नेव स्तुतिं कुर्वाणं पुरोऽवस्थितं क्षत्तारं यंतारं स्वसारथिमुवाच।

त्तारमुवाचेति क्षत्प्रेषणमुक्तम्। अंते च 'इयं जाया अयं ग्रामो यस्मिन्नास्से' इति, 'ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवासे'ति बहुग्रामप्रदायित्वमुक्तम्। एतैर्लिंगैर्जानश्रुतेः क्षत्रियत्वमवगम्यते।

## उत्तरत्र चैत्ररथेन लिंगात्॥ ३५॥

उपरिष्टाच्चास्यां संवर्गविद्यायां ब्राह्मणक्षत्रिययोरेवान्वयो दृश्यते। 'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी विभिक्ष' इत्यादौ अभिप्रतारी चैत्ररथः क्षत्रियश्चेत्यवगम्यते। कापेयाख्ययाजकयोगात् चित्ररथपुरोहितेन कापेयेन याजकेन योगो हि चैत्ररथस्य श्रुतः, 'एतेन वै चैत्ररथं कापेया अयाजयन् तमेकाकिनं अन्नाद्यस्याध्यक्षमकुर्वन् इति अभिप्रतारिणः संज्ञाभेदात् चैत्ररथत्वासिद्धावपि तद्वंश्यत्वमेतेन वाक्येन सिद्ध्यति; 'समानान्वयानां हि समानान्वयाः प्रायेण याजका भवंती'ति न्यायात् चित्ररथवंश्यत्वे सति क्षत्रियत्वं 'तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायते'ति तद्वाक्यशेषेण सिद्ध्यति। एवं चोत्तरत्र ब्राह्मणेन कापेयेन युक्तोऽभिप्रतारी क्षत्रिय इति निश्चितं तद्वत् ब्राह्मणेन रैक्वेन युक्तो जानश्रुतिरपि क्षत्रिय इति गम्यते। अतः क्षत्रिय एव शूद्रेत्यामंत्रितः। सूत्रार्थस्तु अस्यां संवर्गविद्यायां चैत्ररथेन अभिप्रतारिनाम्ना क्षत्रियेण सह उत्तरत्र अग्रे लिंगात् कापेययाजकयोगसूचनात् रैकब्राह्मणयोगेन जानश्रुतेः क्षत्रियत्वं प्रतीयते; अतः क्षत्रियस्य जानश्रुतेः शूद्रेत्यामंत्रणमिति। यदुक्तं निषादस्थपतिन्यायेन शूद्रस्य महावाक्यश्रवणमात्रेऽधिकार इति तत्राह—

---

१ इयं जाया जायार्थं मम दुहिताऽनीताऽयं च ग्रामो यस्मिन्नास्से तिष्ठसि स च त्वदर्थे मया परिकल्पितः। २ यत्र येषु ग्रामेषु उवासोपितवान् रैक्वस्तानस्मै रैक्वाय राजा ददौ ते एते राजदत्ताः ग्रामाः महावृषेषु महापुण्येषु देशेषु शालग्रामक्षेत्रसामीप्यात् रैक्वपर्णा नाम विख्याता ह किल तत्र स्थित्वा तस्मै राज्ञे विद्यामुवाचोक्तवान् ह किल रैक्व इत्यर्थः। ३ तस्मै होवाच। ४ शुनकस्यापत्यं शौनकं च कपेर्गोत्रापत्यं कापेयं ब्राह्मणं अभिप्रतारिणं च नामतः कक्षसेनस्यापत्यं काक्षसेनिं क्षत्रियं एतौ भोजनायोपविष्टौ परिविष्यमाणौ पाककैर्भाजने दीयमानान्नौ ब्रह्मचारी ब्रह्मविदां मध्ये शूरमात्मानं मन्यमानो विभिक्षे भिक्षितवान्। ५ अन्यत्रेति शेषः। ६ द्विरात्रेण यागेन। ७ चित्ररथात्।

## संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥

ब्रह्मविद्याधिकारे संस्कारपरामर्शात् 'उप त्वा नेष्ये तं होपनिन्ये' इत्यादिप्रदेशेषु उपनयनसंस्कारग्रहणात् 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति, शूद्रश्चतुर्थो वर्ण एकजाति'रित्यादिस्मृतिषु शूद्रस्य तदभावाभिलापाच्च तस्य उपनयनसंस्कारस्याभावस्तस्याभिलापात् कथनाच्च तस्य ब्रह्मविद्यायामनधिकारः। यतो 'निषादस्थपतिं याजयेदि'ति विधिः उपनयनाभावेऽप्यस्ति; अतो ब्राह्मणद्वारा याजने शूद्रस्य स्वयमितिहासपुराणोक्तकृष्णोपासने च न विरोधः।

'अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः॥
मामुपाश्रित्य कौंतेय येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिम्' ॥

इत्यादिस्मरणात् श्रीकृष्णोपासनाधिकारोऽस्ति शूद्रस्य। महावाक्यश्रवणे तु कुत्रापि विधिर्नैव दृष्टः।

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

'"नैतदब्राह्मणो विवक्तुमर्हति समिधं सौम्याहरोप त्वा नेष्ये न सत्यादगाः' इति

---

१ तं होपनिन्ये अधीहि भगव इति होपससाद ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वैतत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवंतं पिप्पलादमुपसन्ना इति; अस्या अयमर्थः तं विद्यार्थिनमाचार्यः किलोपनिन्ये उपनीतवान्; अनुपनीताय विद्यादानायोगादिति तात्पर्यम्; सनत्कुमारं प्रति नारदः अधीहि भगव इति इमं मन्त्रमुच्चार्य गुरूपसदनं कृतवानित्याह-अधीहीति; ते भरद्वाजादयः षड्ऋषयः परं ब्रह्म परत्वेनोपगतवंत इति ब्रह्मपरास्तद्ध्याननिष्ठाश्च ब्रह्मनिष्ठाः परं परमार्थरूपं ब्रह्मान्वेषमाणा विचारयंतो निर्णयार्थमेष पिप्पलादस्तज्जिज्ञासितं सर्वं वक्ष्यतीति निश्चित्य रिक्तहस्तानां गुरूपसदनायोगात् समित्पाणयः संतस्तं पिप्पलादमुपसन्नाः किल इत्याह ब्रह्मपरा इति। २ भक्ष्याभक्ष्यविभागाभावकृतम्। ३ उपनयनरहित इत्यर्थः। ४ तं जाबालं गौतमः उवाच—किं एतत्त्वदुक्तं वचोऽब्राह्मणो विशेषेण वक्तुं नार्हति; ब्राह्मणव्यतिरेकेण स्वभावतः सत्यवदनासंभवात्; अनया च परीक्षयाऽस्य शूद्रत्वाभावो निर्द्धारितः। यस्मात्त्वं सत्याद्ब्राह्मणजातिधर्मात् नागाः नापेतवानसि अतो ब्राह्मणं त्वामुपनेष्येऽतः संस्कारार्थं होमाय समिधं हे सौम्याहरेति। ५ जाबालो हि मृतपितृको गुरूपसदनं कर्त्तुकामो गोत्रमजानानो मातरं पप्रच्छ-किं गोत्रोऽहमस्मीति; साप्यहं न जानामीति उवाच। ततः स जाबालो गौतममुपससादो-

सत्यवचनेन जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव तदुपनयनानुशासनविद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः। ननूपनयनाभावे ब्रह्मोच्चारणनिषेधः काचित्कः सार्वत्रिको वा? न सार्वत्रिकः, शिशोरुपनयनाभावेऽपि 'न ब्रह्माभिव्याहरयेदन्यत्र स्वधानिनयनादि'ति स्वधानिनयने ब्रह्मोच्चारणविधानात्तेन काचित्क इति युज्यते; अतो यज्ञोपवीतसंस्कारवर्जितस्य शूद्रस्य संबंधिनीषु पाकयज्ञादिक्रियासु ब्राह्मणानामपि वेदोच्चारणे निषेधोऽस्ति, नतु तस्य ब्रह्मविद्यायामित्याशंकायामाह—

## श्रवणाध्ययनार्थप्रतिषेधात् ॥ ३८ ॥

शूद्रस्य वेदवाक्यश्रवणादि निषिध्यते; तस्माच्छूद्रसमीपे नाध्येतव्यमिति अनुपशृण्वतः कुतोऽध्ययनादिप्रसक्तिः।

## स्मृतेश्च ॥ ३९ ॥

स्मर्यते च शूद्रस्य वेदश्रवणादौ दंडः–'अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्; उदाहरणे जिह्वाच्छेदो धारणे शरीरभेद' इति। एवं श्रुतिस्मृतिभ्यां शूद्रसमीपाध्ययनादिनिषेधात्कुतस्तेषां वेदार्थविचारादिकम्। सर्वथाष्टवर्षादियुक्तब्राह्मणाद्युपयुक्तोपनयनसंस्कारमंतरेण वेदाध्ययनप्राप्तिर्न कुत्रापि कस्यचित्। अतः शूद्रा वेदविद्यायामनधिकारिण एव। एवं प्रासंगिकमधिकारिनिरूपणं कृत्वा प्रकृतमनुसरति—

## कंपनात् ॥ ४० ॥

श्रूयतेऽस्य विषयःकठवल्लीष्वंगुष्ठप्रमितपुरुषप्रकरणे 'यदिदं[4] किंच जगत्सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवंती'ति। तत्र कंपनहेतुः नारायणोऽन्यो वेति संशयः। अत्र प्राणशब्दनिर्दिष्टपदार्थाज्जनितभयेन सकलजगत्कंपनमुच्यते। नारायणस्य सकलजगद्भय-

---

पसद्य चोवाच हे भगवन् ब्रह्मचर्यमिच्छामि, मामनुगृह्णातु भवानिति; ततो गौतमेन किं गोत्रोऽसीति पृष्टः सत्यकामो जाबाल आह-नाहं गोत्रं वेद, नापि मन्मातेति; ततः स गौतमस्तदीयेन सत्यवचनेन जाबालस्य शूद्रत्वाभावं निश्चित्याह—नैतदब्राह्मण इति।

१ तच्छब्देन जाबालस्य परामर्शः। २ पद्यु ह वा एतत् स्मशानं यच्छूद्रः–पादयुक्तं संचारसमर्थमिति यावत्। ३ न शूद्राय मतिं दद्यादिति तदर्थज्ञाननिषेधः। द्विजातीनामध्ययनमिज्यादानमिति तदर्थानुष्ठाननिषेधः। शूद्राणां दानशब्देनात्र नित्यदानमुच्यते; नैमित्तिकदाने शूद्रस्याप्यधिकार इति द्रष्टव्यम्। ४ अस्या अयमर्थः-यत्किंचेदमखिलं जगत्सर्वं प्राणे

यप्रदानेन मधुरस्वभावस्य परमकारुणिकस्य जगत्कंपनहेतुत्वमयुक्तम्। तस्माद्वज्रमुद्यतमिति श्रुतेरशनिः कंपनहेतुः, यद्वा प्राणवायुः कंपनहेतुः, प्राण एजतीति श्रुतेः। प्राणवायोः देहचलनहेतुत्वेन प्राणे निमित्ते सर्वमिदं जगच्छरीररूपं चलतीति 'यदिदं किंच जगत्सर्वं प्राण एजति निःसृतमि'त्यस्य तत्रोपपत्तेः। विद्युत्स्तनयित्नुर्वृष्टिश्च महाभयहेतुरशनिरपि एतत्सर्वं वायुनिमित्तमेव निवर्त्तत इति महद्भयं वज्रमुद्यतमित्यस्यापि तत्रोपपत्तेः। 'वायुरेव व्यष्टिर्वायुरेव समष्टिरप पुनर्मृत्युं जयति य एवं वेदे'ति श्रुतेर्वायुविज्ञानादमृतत्वोपपत्तेश्चेति प्राप्ते नारायण एव कंपनहेतुरिति ब्रूमः—नारायणस्य सकलजगत्कंपनहेतुत्वं शासकत्वाद्भवति; यस्य शासनभयेन सर्वे वयं निषिद्धविमुखा विहितेषु कर्मसु प्रवर्त्तामहे, यच्छासनभयादेव वाय्वादीनां स्वस्वाधिकारप्रकारप्रवृत्तिः 'भीषास्माद्वातः पवत' इत्यादिष्ववगम्यते। कल्याणमूर्त्तिरपि नारायणः शासकतया भयदर्शनो भवति। तत् श्रूयते 'तस्माद्राजमुखं भीष्मं भावुकमि'ति। तस्मात्स्वामितया सकलजगद्भयहेतुर्नारायण एव। दहरादिषूपास्यतया निर्दिष्टस्य नारायणस्य प्राप्यत्वमुपपादयितुमधिकरणांतरमारभ्यते—

## ज्योतिर्दर्शनात्॥ ४१॥

श्रूयतेऽस्य विषयश्छांदोग्ये प्रजापतिविद्यायाम्—'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुष' इति मुक्तप्राप्यतया श्रूयमाणं परं ज्योतिः वासुदेवाभिधो नारायणः किंवा अक्षरं ब्रह्मेति संशयः। अक्षरं ब्रह्मेति पूर्वः पक्षः। यतः मुक्तप्राप्यस्य परज्योतिषोऽक्षरब्रह्मशब्दवाच्यतयावगमात्। परं ज्योतिरितिशब्दोऽक्षरब्रह्मण्येव रूढ इति प्राप्ते सिद्धांतं ब्रूमः—'मुक्तप्राप्यं यत्परं ज्योतिः स उत्तमपुरुष' इति वाक्यशेषे तच्छब्देनाभिहित उत्तमपुरुषः 'स एव अक्षरात्परतः पर' इति श्रुत्यंतरेऽक्षरपरतयाभिहितः परमात्मसंज्ञनारायण एवेति निश्चीयते। अतः उत्तमपुरुषशब्दः पुरुषोत्तमशब्दवाच्ये परमात्मन्येव रूढ इति सिद्धम्। तथाहि स्मर्यते—'कूटस्थोऽक्षर उच्यते, 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः'

---

निमित्ते सत्ये जाते चेष्टते; 'एजृ कंपन' इति धातोः कंपनार्थकत्वात्कंपनं चेष्टैवेति चेष्टत इत्युक्तं, तच्च जगत्तस्मादेव निःसृतं उत्पन्नं तच्च प्राणाख्यजगत्कारणं महत् अत्युदारम्; 'विभेत्यस्मात्सर्वं वाय्वादीति, भयं 'भीषास्माद्वातः पवते' इत्यादिश्रुत्यंतरात्; तदेव भयहेतुत्वं निरूपयति-वज्रमिति; उद्यतं वज्रमिवेत्यर्थः। प्राणाख्यब्रह्मज्ञानात्तस्य मोक्षहेतुत्वमाह—य इति। १ वाक्यस्येति शेषः। २ प्राणवायौ। ३ वाक्यस्येति शेषः। ४ प्राणवायौ। ५ अन्यत्रेति शेषः।

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः, अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति। एवं च सति परं ज्योतिरितिशब्देन वाच्यः परमात्मैवावगम्यते नत्वक्षरं ब्रह्म; कुतः, वाक्यशेषे स उत्तमपुरुष इति दर्शनात्।

## आकाशोऽर्थांतरत्वादिव्यपदेशात्॥ ४२॥

श्रूयतेऽस्य विषयश्छांदोग्ये 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्म तदमृतं स आत्मेति'। अत्र श्रूयमाण आकाशो नारायणो वा भूतादिमं व्योम वा जीवो वेति संदेहः। सकलस्थावरजंगमभूतावकाशप्रदातृत्वेन नामरूपयोर्निर्वाहकत्वस्य भूतादिमे व्योम्नि संभवात्। भूतादिमं व्योमेहाकाशः अथवा जीवः। 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति तस्य नामरूपव्याकरणसंबंधदर्शनात्; इत्येवं प्राप्ते ब्रूमः—अत्राकाशशब्देन नारायण एव नामरूपनिर्वाहकः श्रूयते अर्थांतरत्वादिव्यपदेशात् तस्यैवार्थांतरत्वादिभिरर्थांतरसूचकत्वेन प्रथमपठितैरमृतत्वादिधर्मैर्व्यपदेशात्। नहि भूतादिमाकाशे जीवे वा अमृतत्वादिकं संघटते; अतो नारायण एवात्राकाशशब्दाभिहित इति निश्चीयते। नन्वहं 'ब्रह्मास्मि' 'तत्त्वमसी'त्यादिवाक्यैरेकत्वव्यपदेशाद्बद्धमुक्तोभयावस्थजीवात्मवृंदान्नार्थांतरभूतो नारायणोऽस्तीत्याशंक्याह-

## सुषुप्त्युत्क्रांत्योर्भेदेन॥ ४३॥

'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नांतरं प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याती'ति सुषुप्त्यवस्थायां प्राज्ञेन अतिशायिप्रज्ञावता आत्मना जीवांतर्यामिशक्तिरूपेण परमात्मांशेन सह संपरिष्वक्तः अविद्यामयकारणशरीरावृतः सन् संलग्नः जीवात्मा बाह्यं पुत्रधनादि किंचन न वेद, आंतरं स्वप्नविषयकलापं च उत्क्रमणसमये प्राज्ञेनात्मना स्वांतर्यामिणा अन्वारूढः संयुक्त इत्यर्थः। सः उत्सर्जन् देहं त्यजन् तं त्यक्त्वेत्यर्थः याति यदा गच्छति तदा बाह्यमांतरं च न किंचन वेद, इति श्रुतितात्पर्यार्थे सुषुप्त्युत्क्रांत्योः सुषुप्तौ उत्क्रांतिर्मरणकालस्तस्यां च बाह्याभ्यंतरपदार्थज्ञानवर्जिताज्जीवात्तदानीमपि प्राज्ञस्यांतर्यामिणो भेदेन निर्देशात् परमात्मा जीवादर्थांतरभूतोऽस्ति; अतोऽत्र प्रकरणे आकाशशब्दाभिहितः स एवेति विज्ञायते।

## पत्यादिशब्देभ्यः॥ ४४॥

उक्ते सर्वज्ञे परमात्मनि श्रुत्यभिहितेभ्यः पत्यादिशब्देभ्यो हेतुभ्यः जीवकला-

---

१ आकाशो हेतिश्रुतौ। २ बृहदारण्यकपष्ठप्रपाठकपठित। ३ आकाशो हेति छांदोग्यश्रुतिप्रकरणे।

पादयमितर एवेति विज्ञायते;'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल' इत्यादिकमसाधारणमैश्वर्यं यदुत्तरत्र श्रूयते तदेव परब्रह्मशब्दवाच्ये नारायणे विद्यते इति सर्वत्र प्रसिद्धम्; एतच्च नारायणादन्यत्र जीवादिषु न श्रुतम्–अतो बद्धमुक्तोभयावस्थजीवकलापान्नित्यमुक्ताक्षरब्रह्मणः सकाशाच्चेतरो नारायण एवात्र प्रकरणे आकाशशब्दाभिहितः।

इति श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने प्रथमाध्यायस्य तृतीयपादः॥३॥



## प्रथमाध्याये चतुर्थपादः।

तृतीयपादे स्पष्टास्पष्टत्वेन परब्रह्मस्वरूपबोधकान्युपनिषद्वाक्यानि मीमांसितानि। अत्र चतुर्थपादे त्वस्पष्टतया परब्रह्मलिंगप्रतिपादकानि कतिपयानि वेदांतवचनानि मीमांस्यंते।

### आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च॥ १॥

श्रूयतेऽस्य विषयः कठवल्ल्याम्–"इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिरि'ति॥ अत्र महतः परत्वेन

१ बृहदारण्यके प्राज्ञेनात्मना संपरिष्वक्त इत्यादिवाक्यादग्रिमग्रंथे। २ आकाशो हेति छांदोग्यश्रुतिप्रकरणे। ३ तृतीयपादे अधिकरणाति १२ सूत्राणि ४४

४ इंद्रियाणां ग्रहत्वमर्थानां शब्दादीनामतिग्रहत्वं श्रुतौ निर्दिष्टमित्यर्थानामेव परत्वम्; गृह्णंति वशीकुर्वंति पुरुषपशुमिति ग्रहा इंद्रियाणि तेषां विषयाधीनत्वमित्यतिग्रहा विषयास्तेनातिग्रहत्वयार्थानां प्राधान्यमित्याह–इंद्रियेभ्य इति। सर्वेंद्रियार्थव्यवहारस्य मनोमूलत्वात् मनसोऽर्थेभ्यः परत्वम्; निश्चयात्मकबुद्धिद्वारा विषया भोक्तुरुपकुर्वंति इति संशयात्मकमनसो बुद्धेः प्राधान्यम्; पूर्वं यो रथित्वेनोक्त आत्मा स भोक्ता बुध्येः परः भोगोपकरणत्वात्तस्याः स्वामित्वाच्च आत्मनो महत्त्वम्; एवंभूतादात्मनोऽव्यक्तशब्दवाच्यशरीरस्य कथं परत्वमिति चेदुच्यते–महच्छब्दवाच्यभोक्त्रपेक्षयाऽव्यक्ताख्याविद्यायास्तावत्परत्वं सर्वसिद्धम्; तदधीनत्वाद्भोक्त्रादेस्तथा च तन्निष्ठं परत्वं तद्विकारे देहे उपचर्यंते।

श्रूयमाणमव्यक्तशब्दाभिहितं कपिलस्मृतिप्रोक्तं प्रधानं स्थूलसूक्ष्माभिन्नकारणशरीरं वेति संदेहः। पूर्वपक्षन्यायस्तु प्रधानमिति। कुतः, सांख्यशास्त्रे महदव्यक्तपुरुषाणामेव विख्यातेः त एवेह श्रुतौ ज्ञापिताः। [1]नात्र कश्चिच्छरीरस्य प्रसंगः। तस्मात्सांख्योक्तं प्रधानमत्राभिहितमिति प्राप्ते शरीरमिति सिद्धांतं ब्रूमः-- [2]पूर्वत्र--'आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इंद्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्' इत्यात्मशरीरादिषूपासनसाधनभूतेषु [4]तद्वशीकरणीयत्वार्थं रथिरथादिरूपकतया विन्यस्तेषु रथरूपकत्वेनाभिहितस्य शरीरस्याव्यक्तशब्देन गृहीतेः'इंद्रियेभ्यः परा ह्यर्था' इत्यारभ्य'सा काष्ठा सा परा गतिरि'त्यंतेन वाक्येनेंद्रियादीनां वशीकरणीयत्वार्थं मुत्तरोत्तरतया परत्वमुच्यते; तदेतदुत्तरत्र श्रुतिरेव दर्शयति तथाहि 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद् ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छांत आत्मनी'ति;वाङ्मनसी इति वाक्शब्दे द्वितीयायाः 'सुपां सुलुगि'ति लुक्,मनसी इति सप्तम्याश्छांदसो दीर्घः। प्राज्ञः अतिशयविवेकयुतबुद्धिमान्नरः वाक् वाचं तदुपलक्षितानि ज्ञानेंद्रियाणि कर्मेंद्रियाणि च मनसि यच्छेद्वशीकुर्यात्;तन्मनश्च ज्ञाने बुद्धौ यच्छेत्; ज्ञानं बुद्धिं च आत्मनि कार्याकार्यविवेकत्वत्यां बुद्धौ यच्छेत्; तां च महति आत्मनि शुद्धजीवात्मनि यच्छेत्; तत्तं जीवात्मानं शांते निरतिशयानंदमये आत्मनि परमात्मनि यच्छेदिति श्रुतितात्पर्यार्थः। एवं सामर्थ्ययुतो रथी वैष्णवं पदं पश्यति; तस्मादत्राव्यक्तशब्देन शरीरमेव प्रतिपादनीयं न प्रधानम्। सूत्रपदार्थो विविच्यते--एकेषां कठानां शाखापठितायामिंद्रियेभ्यः परा ह्यर्था इत्यारभ्य, 'सा परा गति'रित्यंतायां श्रुतावव्यक्तशब्देन आनुमानिकं प्रधानमेवोक्तमिति चेन्न; कुतः, शरीररूपकविन्यस्तगृहीतेः--पूर्वत्र शरीरस्य रूपकेन रथरूपेण विन्यस्ते कल्पनायां गृहीतेर्ग्रहणात्। अतोऽत्राव्यक्तशब्देन शरीरमेवोपादेयम्। यदर्थादीनां परत्वं तत्त्विंद्रियादिनियमनार्थम्। इममेवार्थं 'यच्छेद्वाङ्मनसी प्राज्ञ' इति श्रुतिर्दर्शयति। नन्वव्यक्तशब्दवाच्यं प्रधानमेव प्रसिद्धमतोऽत्र शरीरं कथमुच्यते इति संदिह्य वदति--

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

तु शब्दोऽवधारणार्थः। सूक्ष्मं भूतसूक्ष्ममेवाव्यक्तशब्दाभिहितमस्ति। तदेवावस्थान्तरापन्नं स्थूलादिशरीरं प्रतीयते। कुतः, तदर्हत्वात्--तस्याव्यक्तस्यार्हत्वात्--अवस्थांतरापन्नत्वे योग्यत्वात्। अतस्तस्याव्यक्तशब्दाभिधेयत्वमुचितमेव। यदि रथिरथादि-

---

१ कठवल्लीश्रुतौ। २ कठवल्लीश्रुतौ। ३ इंद्रियेभ्यः परा ह्यर्था, इति वाक्यात्प्राक्। ४ तच्छब्देनात्मशरीरादिग्रहणम्।

रूपकविन्यस्ता आत्मादय इंद्रियादिनियमनाय 'इंद्रियेभ्यः परा ह्यर्था' इत्यादिनोपादीयंते तर्हि 'अव्यक्तात्पुरुषः परः' 'पुरुषान्न परं किंचित्सा काष्ठा सा परागतिरि'ति पुरुषोपादानं किमर्थमिति चेत्तत्र सूत्रमाह-

**तदधीनत्वादर्थवत् ॥ ३ ॥**

रथिरथादिरूपकविन्यस्तमात्मशरीरादिकं पुरुषाभिधनारायणाधीनत्वेनार्थवत्-तदुपासनासिद्ध्ये सप्रयोजनं भवति। नारायणोंऽतर्यामितया सर्वमात्मादिकं प्रतितिष्ठन्नेवोपासनासाधनत्वेन वशीकरणीयेष्विंद्रियहयादिपूत्तरोत्तरं वशीकरणीयतया परेषु व्याप्तः ततो व्यतिरिक्ततया स्वधाम्नि दिव्यमूर्त्या पृथक् स्थितोऽस्ति। एवंभूतस्य तस्योपासकेष्वनुग्राहकत्वात् त्रिगुणातीतपरमानंददायकत्वाच्च प्राप्यत्वेन 'सा परा गतिरि'ति चाभिधीयते। तस्माद्धेतोरप्यत्राव्यक्तं शरीरमेवाभिहितम्।

**ज्ञेयत्वावचनाच्च ॥ ४ ॥**

यदि सांख्यशास्त्रोक्तं प्रधानमत्राव्यक्तशब्दोक्तं स्यात्तर्हि तस्य ज्ञेयत्वमुच्येत। अस्यामुपनिषदि तु प्रधानज्ञेयत्वस्य अवचनाद्धेतोः न च तदस्ति; अतोऽत्र कपिलस्मृत्यभिहितमव्यक्तं न ज्ञेयम्। नन्वस्यापि ज्ञेयत्वमभिहितं भवतीत्याशंक्य परिहरति-

**वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥**

'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगंधवच्च यत्।
अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते'॥

इत्यग्रेतनमंत्रोऽस्यापि ज्ञेयतां वदतीति चेन्न, 'तद्यच्छेच्छांत आत्मनी'ति श्रुत्या यस्मिन्परमात्मनि जीवस्य वशीकरणमुक्तं स एव प्राज्ञः परमात्मा 'परं ध्रुवं निचाय्य तमि'त्यत्र ज्ञेयत्वेनाभिहितः। कुतः, प्रकरणात्-

'एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः'॥

इति तस्यैव पूर्वं प्रकृतत्वात्; अतो व्यक्तं शरीरमेव, प्रधानस्य प्रसंगो नास्तीत्याह-

**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥**

त्रयाणामुपास्योपासनोपासकानामेवात्र प्रकरणे ज्ञेयत्वेनोपन्यासः प्रश्नश्च क्रियते न प्रधानादेः यथा—

---

१ कठवल्लीश्रुतौ। २ कठवल्ल्याख्यायां प्रधानस्यापि। ३ ज्ञात्वा। ४ कठवल्लीग्रंथे।

'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति'॥

इत्यादिरुपन्यासः। '[1]येयं प्रेते विचिकित्सा मनुष्य अस्तीत्येके नायमस्तीति चैके, एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीय' इत्युपासकजीवप्रश्नः। '[2]अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृतात् अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे'ति चोपास्यप्रश्नः। '[3]स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्' इति चोपासनप्रश्नः। एवं [5]तस्याप्रकृतत्वादपि शरीरमेवाव्यक्तं न प्रधानम्। किंच प्रमाणांतरमप्यस्तीत्याह—

## महद्वच्च ॥ ७ ॥

यथात्र [6]'बुद्धेरात्मा महान् पर' इति श्रुतौ कापिलतंत्रोक्तं महत्तत्त्वं न भवति तस्यात्मशब्दविशेषणत्वात् तथा[7]ऽव्यक्तशब्दादपि प्रधानं न ज्ञेयमिति सिद्धान्तः। अप्रकृतत्वात्; अतोऽत्र न प्रधानप्रसंगः। एवं चात्र भवतु, अन्यत्र प्रधानमेव कारणत्वेन श्रूयत इत्याशंक्याधिकरणमिदमारभ्यते—

## चमसवदविशेषात् ॥ ८ ॥

श्रूयतेऽस्य विषयः श्वेताश्वतरोपनिषदि—

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य' इति ॥

इह सर्वप्रपंचकारणत्वेन जन्मरहितत्वादजेति श्रूयमाणा प्रकृतिः सांख्यसिद्धा परा वेति संशये सांख्यसिद्धेति वक्तुं युक्तम्; अजामिति जन्माभाववचनात् सर्वप्रजा-

---

१ मनुष्ये प्रेते मृते सति येयं विचिकित्सा संशयः परलोकगामी भोक्ताऽयं जीवोऽस्तीत्येके नास्तीति चान्ये, अतस्त्वयानुशिष्ट उपदिष्टोऽहमेतन्निर्विचिकित्सितत्वं विद्यां ज्ञातुमिच्छामीति मृत्युं प्रति नचिकेता वरत्रयं पृष्टवान्—स्वपितुः सौमनस्यमग्निविद्यात्मविद्या चेति; तेषां वराणां मध्ये एष तृतीयो वर इत्यर्थः। २ नचिकेतसो मृत्युप्रदत्तवरत्रयस्वरूपं तु श्रीभाष्यादेवावगंतव्यम्। ३ धर्मात्तत्फलाच्च सुखादधर्मात्तत्फलाच्च दुःखात् कृतात्कार्यादकृतात्कारणात् भूतादतीतात् भव्याद्भाविनः चशब्देन विद्यमानादन्यत्रान्यद्वित्यर्थः। एवं भूतं यत्पश्यसि तद्वदेति मृत्युं प्रति नचिकेतोवाक्यम्। ४ हे मृत्यो सः मदर्थं दत्तवरस्त्वं स्वर्ग्यं स्वर्गहेतुकमग्निं अध्येषि सदा स्मरसि तेन त्वं तद्विषयां विद्यां वदेत्यर्थः। ५ प्रधानस्य। ६ कठवल्ल्याम्। ७ कठवल्ल्याम्।

कारणत्वाच्च, लोहितशुक्लकृष्णामिति वर्णोपलक्षितगुणत्रयावगमाच्च तदन्यस्याः कस्याश्चिदेवंविधत्वं न युक्तमिति प्राप्ते सिद्धांतः-न विधिपुत्रकपिलतंत्रसिद्धा प्रकृतिरिह कारणत्वेनोच्यते न हि जन्माभावमात्रेण तस्या एव प्रतीतिः 'चमसवदविशेषात्'-यथाऽर्वाग्बिलश्चमस इति मंत्रे भक्षणसाधनत्वयोगेन चमसाख्ये पदार्थे प्रवृत्तस्य चमसशब्दस्य शिरसि प्रवृत्तौ 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस' इति वाक्यशेषे विशेषदर्शनं तथाऽजामेकामित्यजाशब्दस्य कापिलतंत्राभिहितप्रधाने प्रवृत्तौ अविशेषाद्विशेषदर्शनाभावात् केवलया शब्दप्रवृत्त्या नायमजाशब्दः कपिलतंत्रोक्तप्रधानविषयः। ननु तंत्रसिद्धायाः प्रकृतेरन्याजा कीदृशीत्यत्राह—

## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥९॥

ज्योतिःशब्देन परब्रह्मसंज्ञो नारायण उच्यते। ज्योतिः परब्रह्म उपक्रमः कारणं यस्या एवंभूतेयमजा प्रकृतिरेवोच्यते। तु शब्दोऽवधारणार्थः। तथाहि तेनैव प्रकारेण नारायणकारणिकायाः प्रकृतेः प्रतिपादकं मंत्रं अधीयते एके तैत्तरीयशाखिनः। 'अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जंतोः' इति परब्रह्मोपक्रम्य 'सप्त प्राणाः प्रभवंति तस्मादि'त्यादिना सप्रकृतिपुरुषस्य समस्तचेतनाचेतनविशिष्टस्य नारायणप्रकाशरूपसंकुचितांतर्यामिशक्तौ तिरोभूतस्य प्रपंचस्य ततः पुनरुत्पत्तौ सत्यां तस्य विकसितांतर्यामिशक्तिरूपब्रह्मात्मकत्वप्रतिपादनसमये तां ह्यजामिति पठंति, अतस्तत्प्रत्यभिज्ञानादियं परब्रह्मकारणिकेति निश्चीयते; अतो न तंत्रसिद्धेयमिति वादो युक्तः। नन्वियमजा नारायणकारणिकेत्यस्याः नारायणकार्यत्वमुच्यते कथमस्यास्तादृश्या अजामित्यजन्मत्ववाद इत्याशंक्याह—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

कल्पनाशब्देन सृष्टिरुच्यते।

'छंदासि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदंति।
अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः'॥

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति कल्पनोपदेशात् जगत्सृष्ट्युपदेशात् प्रकृतेः सूक्ष्मत्वस्थूलत्वोभयावस्थाभ्यामजत्वपरब्रह्मकार्यत्वयोरविरोधः। तथाहि—

---

१ बिल्व। २ आथर्वणिका बृहन्नारायणोपनिषदध्ययनवंतश्च। ३ परब्रह्मणः सकाशात्। ४ श्वेताश्वतरोपनिषदि अजामेकामिति श्रुतौ तस्यास्तंत्रसिद्धप्रधानेतरप्रकृतेरेव प्रत्यभिज्ञानात्। ५ श्वेताश्वतरोपनिषदि।

प्रलयकाले नामरूपे विहायाचिद्वस्तुरूपा प्रकृतिसंज्ञा मायापि स्वधामस्थस्य दिव्यविग्रहस्य नारायणस्य संकुचितांतर्यामिशक्तिरूपप्रकाशे सूक्ष्मरूपेण संलग्नाऽभवत् । अतः संकुचितांतर्यामिशक्तिरूपस्य नारायणस्य शरीरतया तदानीमवतिष्ठते । इत्थं 'यस्य प्रकृतिः शरीरमि'ति श्रुतिर्हि वदति । एवं रीत्याऽस्या अजात्वं सृष्टिसमये नारायणविकसितांतर्यामिशक्त्या नामरूपोपेतत्वं हि कार्यत्वं नारायणस्य च कारणत्वमविरोधेन निश्चीयते । तथाहि स्कांदे स्मर्यते—'सकार्यमूलप्रकृतिः सकालाक्षरतेजसि । प्रकाशेऽर्कस्य रात्रीव तिरोभूता तदाभवत् ॥ सिसृक्षाथाभवत्तस्य ब्रह्मांडानां यदा तदा । सकालाविर्बभूवादौ महामाया ततो हि सा' ॥ इति मध्वादिवत् । यथा आदित्यस्य सृष्टिसमये वस्वादिभोग्यरसाधारत्वेन मधुत्वं कार्यत्वं च तस्य पुनः प्रलयकाले मध्वादिव्यपदेशानर्हात्यंतसूक्ष्मरूपेणावस्थानादकार्यत्वं च मधुविद्यायां प्रतीयते 'असौ वा आदित्यो देव मधुनैवोदेता नास्तमेतैकल एव मध्ये स्थाते'तिश्रुतेः। एवं प्रकृतेरजात्वं परब्रह्मकारणत्वेन कार्यत्वं चाविरुद्धम् । तस्मादजा न तंत्रसिद्धा। पुनरन्यत्र कपिलतंत्रसिद्धानि पंचविंशतिसंख्यानि तत्त्वानि श्रूयंत इत्याशंक्य तत्परिहर्तुमधिकरणांतरमारभ्यते—

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

वाजसनेयिशाखाध्ययने श्रूयतेऽस्य विषयः—

'यस्मिन् पंच पंचजना आकाशश्च प्रतिष्ठितः ।
तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोमृतमि'ति ॥

अत्र पंच पंचजनाः किं सांख्यसिद्धानि तत्वानि श्रुतिप्रसिद्धानि वेति संशयः। पंचविंशतिसंख्यायास्सांख्यशास्त्रप्रसिद्धत्वात् अत्र तदवभासात् सर्वथा पंच पंचजना इति तान्येव प्रतिपाद्यानीति प्राप्ते ब्रूमः—पंच पंचेति पंचविंशतिसंख्योपसंग्रहादपि न तांत्रिकानि तत्त्वानि यस्मिन्निति यच्छब्दनिर्दिष्टनारायणाधारत्वममीषां प्रतीयते इति तेभ्य एषां नानाभावात् पृथग्भावात् आकाशस्य प्रथगनिर्देशेन तत्त्वातिरेकाच्च तंत्रातिरेकस्तत्त्वानामधिकसंख्यात्वम्; अतोऽत्र न सांख्योक्तपंचविंशतितत्त्वप्रसंगः।

---

१ श्वेताश्वतरोपनिषदुपदिष्टप्रकृतेः । २ यस्मिन् पंच पंचजना इतिश्रुतौ । ३ तस्याः सांख्यशास्त्रप्रसिद्धपंचविंशतितत्वसंख्याया अवभासात् । ४ सांख्यशास्त्रप्रसिद्धानि । ५ तत्त्वानाम् । ६ सांख्यशास्त्रप्रसिद्धतत्त्वेभ्यः । ७ यस्मिन्पंच पंचजना इतिश्रुत्युपदिष्टानां तत्वानाम् । ८ आकाशस्य पृथग्निर्देशे । ९ यस्मिन्पंचेतिश्रुतौ ।

किंच पंचविंशतिसंख्योपसंग्रहोऽपि न युक्तः'दिक्संख्ये संज्ञायामि'ति संज्ञाविपयो ह्ययं समासः। तस्मात्पंचजना नाम केचित्ते पंचेति पंच पंचजना इत्युच्यंते सप्त सप्तर्षय इतिवत्। अतो न सांख्यतत्वप्रसक्तिः। के पुनरेत इत्यत आह—

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

'प्राणस्य प्राणमुत चक्षुपश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुरि'ति वाक्यशेषात् पंचजनसंज्ञकाः प्राणादयः पंचेति गम्यंते। अतो न तांत्रिकतत्वप्रसक्तिः। पुनरुपपत्तिरुच्यते।

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एकेषां काण्वानां पाठे असत्यन्ने अन्नस्यान्नमिति शब्दाभावे सति 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि'त्युपक्रमगतेन ज्योतिषां ज्योतिःशब्देन पंच पंचजना इंद्रियाणीति ज्ञायंते। ज्योतिषां ज्योतिः प्रकाशकानामिंद्रियाणामपि प्रकाशकं ब्रह्मेत्युक्त्वा ततः 'पंच पंचजना' इत्युक्ते सति तानि शब्दादिप्रकाशकानि पंचेंद्रियाणीति गम्यंते।

## कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥ १४ ॥

आकाशादिषु कार्यवर्गेषु कारणत्वेन सर्वत्र वेदांतवाक्यकलापे 'असद्वा इदमग्र आसीदिति, सदेव सौम्येदमग्र आसीदिति, तद्धेदं तर्ह्यव्याकृतमासीदि'त्यादिके ज्ञातविशेषणे ह्यज्ञातविशेषपदार्थे च 'आत्मा वा इदमेक एवाग्र आसीदिति, आत्मैवेदमग्र आसीत् पुरुषविध' इत्यादिभिर्विशेषपदार्थसूचकवाक्यैर्यथा व्यपदिष्टस्य निर्दिष्टस्यात्मशब्दाभिहितस्याप्राकृतदिव्यमनोहरमंगलमूर्तेः पुरुषाकृतेर्नारायणस्यैवोक्तेः न तांत्रिकप्रधानसंज्ञाव्याकृतग्रहणं तथात्र विशेषवाक्यदृष्टानामिंद्रियाणामेवोक्तेः न तांत्रिकतत्त्वग्रहणम्। तत्र तांत्रिकतत्त्वग्रहणायोगः कथमित्यत आह—

---

१ माध्यंदिनशाखापठितश्रुतावपि प्राणशब्देन स्पर्शेंद्रियं गृह्यते, वायुसंबंधित्वात्स्पर्शेंद्रियस्य; चक्षुष इति चक्षुरिंद्रियं श्रोत्रस्येति श्रोत्रेंद्रियं अन्नस्येति घ्राणरसनयोः तंत्रेणोपादानम् अन्नशब्दोदितपृथिवीसंबंधित्वाद् घ्राणेंद्रियमनेन गृह्यते; अद्यतेऽनेनेत्यन्नमिति रसनेंद्रियमपि गृह्यते; मनसः इति मनःपंचत्वमप्यविरुद्धम; प्रकाशकानि मनःपर्यंतानींद्रियाणि पंचजनशब्दनिर्दिष्टानि तदविरोधाय घ्राणरसनयोस्तंत्रेणोपादानम्। २ यस्मिन्पंच पंचजना इतिश्रुतौ। ३ प्राणस्य प्राणमुत चक्षुपश्चक्षुः इत्यादिवाक्यशेषोपदिष्टानाम्। ४ यस्मिन्पंचेतिश्रुतौ।

## समाकर्षात् ॥ १५ ॥

'सोऽकामयत बहु स्यामि'ति पूर्वनिर्दिष्टस्य सर्वज्ञस्यैव 'असद्वा इदमग्र आसीदि'ति वाक्ये समाकर्षात् पूर्वत्राव्याकृतशब्देनोक्तस्यैव 'स एष इह प्रविष्ट आनखाग्रेभ्य' इति वाक्येन सर्वांतर्यामिपुरुषाकारनारायणे समाकर्षाच्च यथा स एवावगम्यते तथात्रापि समाकर्षात्पंचजनानामिंद्रियत्वावगतिरिति न विरोधः। गतः सांख्यतत्त्वाशंकाप्रसंगः। पुनरपि जीवान्नारायणस्यान्यभावमुपपादयति—

## जगद्वाचित्वात् ॥ १६ ॥

श्रूयतेऽस्य विषयः कौषीतकिब्राह्मणोपनिषदि 'ब्रह्म ते ब्रवाणी'त्युपक्रम्य 'यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्य' इत्यादि वाक्यम्। इह वेद्यत्वेन श्रुतो नारायणो जीवो वेति संशयः। 'एवैष आदित्ये पुरुषः तमेवाहमुपासे य एवैषश्चंद्रमसि पुरुषो य एवैष विद्युती'त्यादिपूर्ववाक्यसंदर्भे प्रकृतादित्यादिसकलपुरुषकर्तृत्वस्य जीवेऽपि विद्यमानत्वात् कर्मशब्दस्य शुभाशुभकर्मवाचित्वेन जीवसंबंधात् सकलकर्मसंबंधातीते नारायणे तदभावाच्च जीव एवायमिति पूर्वः पक्षः। सिद्धांतस्तु कर्मशब्दस्यैतच्छब्दसामानाधिकरण्येन क्रियत इति व्युत्पत्त्या च जगद्वाचित्वात् जगत्कार्यवान्नारायण एवात्र प्रतिपाद्यः। न हि जीवे सूर्यचंद्रादिपुरुषसंयुक्तसकलजगत्कर्तृत्वसंभवः। पुनराशंक्य परिहरति—

## जीवमुख्यप्राणलिंगान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

तद्यथा श्रेष्ठी स्वैर्भुंक्ते यथा वा स्वाः श्रेष्ठिनं भुंजंत्येवमेवैष प्रज्ञात्मा एतैरात्मभिर्भुंक्ते एवमेवैत आत्मान एतमात्मानं भुंजंतीति यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन्प्राण एवैकधा भवतीति जीवमुख्यप्राणलिंगदर्शनात् नासौ नारायण इति न वाच्यम्। पूर्वत्र प्रतर्दनविद्यायां व्याख्यातत्वात् इहापि पूर्वापरपर्या-

---

१ यस्मिन्पंचेतिश्रुतावपि। २ प्राणस्य प्राणमित्यादिवाक्यशेषोपदिष्टानां प्राणादीनां समावेशात्। ३ गार्ग्याख्यऋषिणा बालाकिना अजातशत्रुनामकस्य राज्ञः संवादः श्रूयते कौषीतकिब्राह्मणे; बालाकिरजातशत्रुणा ब्रह्मज्ञेन ब्रह्मणि संवदितुं 'ब्रह्म ते ब्रवाणी'त्युपक्रम्यादित्यादिपुरुषाञ्जीवानुक्त्वा तूष्णीं बभूव; तमजातशत्रुर्मृषावादितयापोद्यशिष्यभूताय गार्ग्याय ब्रह्मोपदेशार्थमिदमाह। ४ शुभाशुभकर्मसंबंधाभावात्। ५ वेद्यत्वेन श्रुत्युपदिष्टः। ६ यो वै बालाके इतिश्रुतौ। ७ यो वै बालाके इत्यादिश्रुतौ वेद्यत्वेनोपदिष्टः पुरुषः। ८ प्रथमाध्यायप्रथमपादस्य द्वात्रिंशत्तमसूत्रे प्रतर्दनविद्यायां कौषीतकिब्राह्मणोपनिषदुपदिष्टप्रतर्दनविद्याविषयकप्राणाधिकरणांतर्गते। ९ बालाक्यजातशत्रुसंवादविषयककौषीतकिब्राह्मणोपनिषद्यपि।

लोचनया ब्रह्मपरत्वे प्रकरणे स्थिते [1]तदनुरूपतयाऽन्यानि लिंगानि नेतव्यानि। पूर्वत्र हि उपक्रमे 'ब्रह्म ते ब्रवाणी'ति ब्रह्मोपक्षिप्तं मध्ये च यस्य चैतत्कर्मेति सकलजगत्कर्तृत्वमुक्तम्। परत्र चोपसंहारे 'सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेदे'ति ब्रह्मोपासनैकांतं सर्वपाप्मापहतिपूर्वकं स्वराज्यं फलमुक्तम्; एवमस्य प्रकरणस्य ब्रह्मपरत्वनिश्चये जीवमुख्यप्राणलिंगानि तत्परतयैव नेतव्यानि। सूत्रार्थस्तु—जीवमुख्यप्राणलिंगात् तद्यथा श्रेष्ठी स्वैर्भुंक्ते इत्यादौ भोक्तृत्वरूपजीवलिंगात् अथास्मिन् प्राण एवैकधा भवतीत्यत्र मुख्यप्राणलिंगाच्च स प्राणो [2]भोक्ता जीव एवास्मिन्[3]प्रकरणेऽभिहितो न परमात्मेति चेत् इति संदिह्यते चेत् तद्व्याख्यातं परमात्मैवात्रोक्त इति तस्य संदेहस्योत्तरं पूर्वत्र प्रतर्दनविद्यायां व्याख्यातम्। 'तद्यथा श्रेष्ठी स्वैर्भुंक्ते' इत्यादिकायाः श्रुतेरयमर्थः-यथा लोके श्रेष्ठी मुख्यः पुरुषः स्वैः स्वकीयैर्भृत्यैर्भोगोपकरणभूतैः साकं तत् लोकप्रसिद्धं भृत्यार्पितचतुर्विधान्नं भुंक्ते यथा वा यथैव स्वाः स्वकीया भृत्या अपि श्रेष्ठिनं मुख्यं पुरुषं भुजंति भोजयंते, अंतर्भावितण्यर्थोऽयं धातुः, नानारससंस्कृतान्नाच्छादनादिनोपजीवयंतीत्यर्थः, एवमेव श्रेष्ठिवदेव एषः शरीरांतर्वर्त्ती प्रज्ञात्मा इंद्रियादिभ्यः प्रकृष्टज्ञाता जीवोऽपि एतैरात्मभिः शरीरांतर्वर्त्तिचक्षुरादींद्रियाधिष्ठातृभिरादित्यादिदेवैः शब्दादिविषयप्रकाशादिना भोगोपकरणभूतैः साकं तदर्पितांस्तत्तद्विषयान् भुंक्ते सेवते, एवमेव भृत्यवदेव एते आत्मानः इंद्रियाधिष्ठातारः सूर्यादिदेवाः एतमात्मानं शरीराभिमानवंतं क्षेत्रज्ञं भुंजंति इतस्तत आनीयार्पितान् शब्दादिविषयान् भोजयंते; दृष्टांतदार्ष्टांतिकयोरुभयोरपि पक्षयोरेतदुक्तं भवति-यथा स्वामिभृत्ययोः स्वस्वकर्मफलभागिनोः[4]परस्परसापेक्षवैषयिकसुखादिप्राप्तौ तत्तत्कर्मानुगुणप्रापितकरणकलेवरस्तत्तदंतर्यामिरूपः परमात्मैव हेतुर्नान्यथा [5]तत्सिद्धिस्तथा करणाधिपक्षेत्रज्ञचक्षुरादिकरणाधिष्ठातृसूर्यादिदेवानामप्यन्योन्यसापेक्षवैषयिकसुखादिप्राप्तौ तत्तदंतर्यामिरूपः परमात्मैव हेतुर्नान्यथा तत्सिद्धिरिति [6]तच्छ्रुतौ परमात्मनस्तत्तच्चिदचिदंतर्यामित्वानुसंधानं प्रतिपिपादयिषितमिति यथाश्रुतोऽयं सांप्रदायिकोऽर्थः। [7]पक्षांतरं वदति—

---

१ परब्रह्मपरत्वानुकूलतया। २ जीवमुख्यप्राणपराणि। ३ अत्र भोक्तृत्वजीवलिंगे मुख्यप्राणलिंगे च तत्तदंतर्यामितया परमात्मैवोक्त इत्यर्थः। ४ यो वै बालाके इत्यादिके कौषीतकिब्राह्मणप्रकरणे। ५ परस्परसापेक्षवैषयिकसुखादिप्राप्तिसिद्धिरित्यर्थः। ६ तद्यथा श्रेष्ठी स्वैर्भुंक्ते इत्यादिकायां श्रुतौ। ७ अन्यवाक्यानां ब्रह्मपरत्वे इति शेषः।

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥१८॥**

'तौ ह सुप्तं पुरुषमाजग्मतुस्तं हाजातशत्रुरामंत्रयांचक्रे बृहन् पाण्डरवासः सोमराजन्निति स इह तूष्णीमेव शिष्ये तदुह एनं यष्ट्या व्याचिक्षेप स तत एव समुत्तस्थावि'त्यत्र स प्राणदेहनामभिरामंत्रणे कृतेऽपि तदश्रुतम्; ततः परं यष्टिघाते सत्युत्थानेन प्राणाद्यतिरिक्तयष्टिघातज्ञातृजीवसद्भावप्रतिपादनं तदतिरिक्तं तदंतर्यामिनारायणप्रज्ञापनार्थमिति 'क्वैष' एतत् बालाके पुरुषोऽशयिष्ट क वा एतदभूत् कुत एतदागादि'ति प्रश्नाद्'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवतीति, सता सौम्य तदा संपन्नो भवति' इत्यादिश्रुत्यंतरसमानार्थात् तत्प्रतिवचनाच्चावगम्यते। तथा एके वाजसनेयिनो विस्पष्टमस्मिन्बालाक्यजातशत्रुसंवादे एतत्समानार्थमधीयते। तत्र हि 'यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदा भूः कुत एतदागात्' इति प्रश्नः।'यत्रैष तत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः तदैतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोंऽतर्हृदय आकाशस्तस्मिञ्छेत' इति प्रतिवचनम्; तस्मान्निखिलजगत्कर्ता सकारणशरीरजीवस्य सुषुप्तावाश्रयभूतांतर्यामिशक्तिरूपो नारायण एवात्र प्रतिपाद्योऽस्तीति सिद्धम्। पुनरिममेवार्थं सूत्रपदार्थेन स्पष्टयति-जैमिनिराचार्यस्तु अन्यार्थं जीवेतरपरब्रह्मसद्भावप्रज्ञापनार्थं श्रुतौ जीवनिरूपणमस्तीति प्रश्नव्याख्यानाभ्यां प्रश्नप्रतिवचनाभ्यां मन्यते; अपि चैवं तथैव एके वाजसनेयिनः बालाक्यजातशत्रुसंवादांतर्गतप्रतिवचनवाक्यं नारायणबोधकमस्तीति स्पष्टं पठंति। मैत्रेयीब्राह्मणे सर्वत्र जीवब्रह्मणोरेकशब्दविषयत्वे प्रतीयमाने सति कथं तयोर्वैलक्षण्यमिति प्रश्नपरिहारायेदमधिकरणमारभ्यते—

---

१ वचनं अश्रुतं श्रवणविषयं न कृतम्। २ जीवातिरिक्तम्। ३ जीवांतर्यामि। ४ जीवातिरिक्ताधिकरणभवनापादनविषयान्प्रश्नान् स्वयमेव चकार क्वैष इत्यादि; अयमर्थः हे बालाके! शयनमेतद्यथा तथैतत्पुरुषः कस्मिन्नधिकरणे स्वापे शयनं कृतवानित्यधिकरणप्रश्नार्थः। एतद्भवनमेकीभावो यथा स्यात्तथा काश्रयः सुप्तोऽभूदिति भवनायतनप्रश्नार्थः। शयनभवनयोराधारं पृष्ट्वोत्थानावस्थायामागमनापादानं पृच्छति कुत इति; एतदागमनं यथा स्यात्तथा कस्माद्दुद्वाधावस्थायामगात् उत्थानं कृतवानित्यर्थः। एतत्प्रश्नोत्तरदानासमर्थं बालाकिं मत्वा स्वयमेवोत्तरमाह यदा सुप्त इत्यादि। ५ तदा। ६ कौषीतकिब्राह्मणोपनिषदुपदिष्टप्रश्नोत्तरसमानार्थम्। ७ आकाशशब्दो हि परमात्मनि प्रसिद्धः दहरोऽस्मिन्नंतर आकाश इति। ८ कौषीतकिब्राह्मणोपनिषदुपदिष्टप्रश्नोत्तरश्रुतौ। ९ तौ ह सुप्तं पुरुषमित्यादिकायाम्। १० एवं च पुरुषकर्त्तरि वेदितव्ये परमात्मनि कौषीतकिब्राह्मणवाक्यं समन्वितमिति सिद्धम्।

## वाक्यान्वयात् ॥ १९ ॥

बृहदारण्यके 'न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवती'त्यारभ्य 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य' इत्यादि श्रूयते। इहात्मनस्तु कामायेत्यादिवाक्यैर्भोगप्रीतियुक्ततया संसारित्वावगमात् अत्र प्रतिपाद्यमानो जीव इति पूर्वपक्षे प्राप्ते सिद्धांतयामः—नारायण इति; कुतः, 'अमृतत्वस्य तु नाशास्ति वित्तेन आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं इदं सर्वं यदयमात्मेत्यादेर्येनेदं सर्वं विजानाति तं केन विजानीयादि'त्यवसानस्य कृत्स्नस्य वाक्यस्य मोक्षज्ञानप्रदातरि सर्वज्ञे नारायणेऽन्वयात्। भोगप्रीतियुक्तस्यानाद्यविद्यायुतस्य नारायणज्ञानमंतरा मोक्षानर्हस्य जीवस्यानुवादेन तदंतर्यामिनारायणप्रतिपादनाविरोधः। कथमिह सर्वत्र जीवशब्देन नारायणाभिधानमिति चेत्तदिदं मतांतरेणोपपादयति—

## प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः ॥ २० ॥

'आत्मनि खल्वरे दृष्ट' इत्यादिनोक्तमेकविज्ञानेन सर्वविज्ञानमिति प्रतिज्ञायाः सिद्धेः सिद्ध्यै जीवस्य परमात्मकार्यतया तदव्यतिरिक्तत्वं ज्ञापयितुं जीवशब्देन नारायणस्य लिंगमभिधानमित्याश्मरथ्यो मेने।

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति एवमुक्तप्रकारेण उत्क्रमिष्यतः शरीरं विहाय गमिष्यतो मुक्तजीवस्य ब्रह्मभावाज्जीवशब्देन ब्रह्माभिधानमित्यौडुलोमिराचार्यो मेने।

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

'य आत्मनि तिष्ठन्' इत्यादिश्रुतौ शरीरभूते जीवात्मनि नारायणस्यात्मतयावस्थानश्रवणाज्जीवशब्दवाच्यत्वं नारायणस्येति काशकृत्स्नो मेने। इदमेव मतं सूत्रकारस्य त्रयाणां जैमिनिप्रभृत्याचार्याणां मतेषु परस्परं किंचिद्विरोधात् सूत्रकारमतानुसारिकाशकृत्स्नमतमेव सिद्धांततयाऽवगंतव्यं तदेव श्रुतिस्मृत्यभियुक्तसंमतमस्ति।

---

१ बृहदारण्यके। २ आत्मा वा इदमेक एवाग्र आसीदिति प्राक् सृष्टेरेकत्वावधारणात् यथा सुदीप्तात्पावकाद्विस्फुलिंगाः सहस्रशः प्रभवंते सरूपाः तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायंते तत्रैवापियंतीत्यादिभिर्ब्रह्मणो जीवोत्पत्तिश्रवणात्तस्मिन्नेवाप्ययश्रवणाच्च जीवस्य परमात्मकार्यत्वम्। ३ परमात्माऽभिन्नत्वम्।

पूर्वं "जन्माद्यस्य यत" इति द्वितीयाधिकरणे 'यतो वा इमानि भूतानी'ति पंचमीविभक्तिविशिष्टश्रुत्युदाहरणेनांतर्यामिशक्तिरूपनारायणस्य जगदुपादानत्वं सामान्येन सूचितं तद्विशेषतः समर्थयितुमिदमधिकरणमारभ्यते—

## प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधात् ॥ २३ ॥

'अस्मान्मायी सृजते विश्वमेतदिति, तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुरिति, सोऽकामयत बहु स्यामिति, सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यामि'त्यादीनि वाक्यान्यस्य विषयः। एतेषु प्रसिद्धं निमित्तोपादानोभयकारणत्वं ब्रह्मणो युक्तं नवेति संदेहः। संदेहस्य बीजं तु लोके निमित्तस्य कुलालादेरुपादानमृत्पिंडादिभावादर्शनेनोपादानस्य मृत्पिंडादेर्निमित्तकुलालादिभावादर्शनेन च प्रतीयमानस्तयोरत्यंतभेद एव। अत्र पूर्वपक्षः प्रवर्तते—यद्यपि तदैक्षतेत्यादिश्रुतिभिः सर्वज्ञं परब्रह्मैव प्रपंचकारणत्वेन प्रतिपादितं तथापि 'गौरनाद्यंतवती सा जनित्री भूतभाविनी'त्यादिश्रुतिभिः प्रपंचोपादानत्वेन तु प्रधानमेव प्रतिपाद्यते इति प्रतीयते; नहि श्रुतयः सर्वज्ञस्यापरिणामिनोऽधिष्ठातुस्तस्याधिष्ठेयाद्चेतनात्परिणामिनः प्रधानादृते प्रपंचकारणत्वं प्रतिपादयंति। तथाहि 'निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनम्; स वा एष महानज आत्माऽजरोमर'इति, 'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्। ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः॥ सूयते पुरुषार्थाश्च तेनैवाधिष्ठिता जगत्'इति॥ तथा प्रकृतिमुपादानतयाधिष्ठायैव परमात्मा निमित्तभूतः सन् प्रपंचं सृजति इति श्रूयते स्मर्यते च—'अस्मान्मायी सृजते विश्वमेतदिति, 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरमि'ति[1]। अतः प्रपंचसर्जने परब्रह्म निमित्तकारणमेव नोपादानम्। उपादानं तु तदधिष्ठितं प्रधानमेव। कुतः, असंभवात्; असंभवो हि घटं कुर्वाणः कुलालः स्वयमेव मृत्पिंडीभूय घटं न निर्मिमीते; तथा पटं निर्मिमाणः कुविंदः स्वयमेव तूलतंतुरूपीभूय पटं न करोति; यदि स्वव्यतिरिक्तेनोपादानकारणभूतेन मृत्पिंडादिना निमित्तभूतः स्वयं कुलालादिः कर्तुमीहते तदा तु घटादिनिर्माणं संभवत्येव; एवं च सति नैकस्मिन्संभवति निमित्तत्वमुपादानत्वं च जगत्कार्ये प्रतीति। किंच लोके ईक्षापूर्वकं कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृश्यते; बहुकारकपूर्विका च क्रियाफलसिद्धिर्हि दृश्यते; अतः 'स ईक्षांचक्रे स प्राणमसृजते'त्यादिश्रुतिषु परब्रह्मण ईक्षापूर्वकप्रपंचकर्तृत्वावगमादनेककारकसाध्यत्वाच्च कार्यस्य निमित्तभूतस्यैकस्य ब्रह्मण

१ क्षेत्रज्ञकर्मानुगुणं मदीया प्रकृतिः सत्यसंकल्पेन मयाध्यक्षेणेक्षिता सचराचरं जगत्सूयते।

उपादानत्वं न संभाव्यते। निष्प्रयोजनं च निमित्तस्य ब्रह्मण उपादानत्वकल्पनम्; वि-नापि तेत्कल्पनमुपादानभूतप्रकृतितो विश्वरूपकार्यनिष्पत्तेः कुलालादिकस्य मृत्पिंडादेः पृथक्त्वेऽपि घटादिकार्यनिष्पत्तिदर्शनादिति प्राप्ते सिद्धांत उच्यते—जगतः प्रकृतिरु-पादानकारणं चकारान्निमित्तकारणं च ब्रह्मैवाभ्युपगंतव्यं नतु केवलं निमित्तकार-णमेवेति निश्चीयते। कुतः प्रतिज्ञादृष्टांतानुपरोधात्; प्रतिज्ञा तावत् 'स्तब्धोस्युततमादेश-मप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि'ति श्रूयमाणस्यादेशशब्दा-भिहितस्यैकस्य परमात्मनो विज्ञानेन सर्वचिदचिद्वस्तुविज्ञानविषया दृष्टांतश्च 'यथा सौम्यैकेन मृत्पिंडेन विज्ञातेन सर्वमिदं मृन्मयं विज्ञातं स्यात् यथा सौम्यैकेन लोहमणिना विज्ञातेन यथा सौम्यैकेन नखनिकृंतनेने'ति मृत्पिंडादेरुपादानकारणस्य विज्ञानात् घटादिसर्वकार्यविज्ञानविषयः। यदि ब्रह्मणो निमित्तकारणमात्रत्वं तदा तेद्विज्ञानेन सकलप्रपंचविज्ञानं न संभवति; नहि कुलालादिज्ञानेन घटादिकार्यं विज्ञायते; अतो निमित्तभूतस्य ब्रह्मण उपादानत्वे तूपादानभूतमृत्पिंडादिविज्ञानेन घटादि-तत्कार्यविज्ञानवत् सूक्ष्मभावापन्नचिदचिद्वस्तुविशिष्टांतर्यामिरूपोपादानभूते ब्रह्मणि विज्ञाते सर्वं कार्यं जगद्विज्ञातमेव भवति। कारणमेवावस्थांतरमापन्नं कार्यं न द्रव्यांत-तरमिति कार्यकारणयोरभेदतयावस्थितमृत्तिकादितद्विकाररूपदृष्टांतानुपरोधदर्शनेन तेदुपपादकप्रतिज्ञासमर्थनान्निमित्तभूतं ब्रह्मैवोपादानमुच्यते। यत्तु प्रतिवादिना निमित्तोपादानयोरसामानाधिकरण्यं श्रुत्यादिना प्रतीयते इत्युक्तं तदसत्; प्रतिज्ञावि-षयकश्रुतौ तयोः सामानाधिकरण्यावगमात्। 'सदेव सौम्येदमग्र आसी-देकमेवाद्वितीयमि'ति जगत्सर्गात् पूर्वमेकत्वावधारणादद्वितीयपदेनाधिष्ठात्रं-तरप्रतिषेधाच्च। प्रतिज्ञाविषयकश्रुतेरयमर्थः—आरुणिः स्वपुत्रं श्वेतकेतुं प्रत्याह, किं, हे श्वेतकेतो त्वं स्तब्धोसि उत तथापि तमादेशं आदिश्यते प्रशिष्यतेऽनेनेत्यादेशः करणे घञ् 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्र-मसौ विधृतौ तिष्ठत' इत्यादिश्रुतेः घञः करणविहितत्त्वेऽपि कर्ता विवक्षितः, तमादे-ष्टारं अप्राक्ष्यः गुरुं प्रति पृष्टवानसि; स कीदृग्विध इत्यपेक्षायां तं विशिनष्टि येन आदेष्ट्रा निमित्तभूतेन अधिष्ठात्रोपादानभूतेन परमात्मना विज्ञातेन तच्छरीरभूतम-विज्ञातं सर्वं चिदचिद्रूपं जगद्विज्ञातं भवतीति निमित्तोपादानत्वयोः सामानाधिकर-ण्यमवगम्यते; अन्यत्स्पष्टार्थमिति। नन्वेवं च सति

---

१ तस्य ब्रह्मण उपादानत्वकल्पनम्। २ निमित्तमात्रब्रह्मविज्ञानेन। ३ चिदचिद्वि-शिष्टांतर्यामिकारणविज्ञानेन सर्वकार्यविज्ञानविरोधाभावोपपादकप्रतिज्ञासमर्थनात्।

'गौरनाद्यंतवती सा जनित्री भूतभाविनी ।
विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्' ॥

इत्यादयः श्रुतयः प्रकृतेराद्यंतवदभावेन नित्यत्वजगदुपादानत्वयोर्बोधिका विरुध्यंत इति चेत्तत्रोच्यते-तत्रापि प्रलये सूक्ष्मभावापन्नाविभक्तनामरूपकारणावस्थचिदचिद्विशिष्टांतर्यामिरूपं ब्रह्मैव प्रकृतिशब्देनाभिधीयते; 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयादि'त्यादौ तदन्वयातिरिक्तवस्त्वंतराभावेन ब्रह्मात्मकत्वश्रवणात् । 'सर्वं खल्विदं ब्रह्मैतदात्म्यमिदं सर्वमि'त्यादौ कार्यावस्थस्य कारणावस्थस्य च समस्तस्य जगतः शरीरशरीरिवदपृथक्तया ब्रह्मात्मकत्वश्रवणाच्च । यदुक्तं नैकस्मिन् संभवति निमित्तत्वमुपादानत्वं च जगत्कार्यं प्रति; कार्यस्यानेककारकसाध्यत्वान्निमित्तस्यैकस्य ब्रह्मण उपादानत्वं न संभाव्यत इत्यादि; अत्रोच्यते-स्वरूपस्वभावगुणविभूतिभिःक्षराक्षरविलक्षणस्यानवधिकातिशयासंख्येयकल्याणगुणगणस्याधिष्ठातुः सत्यसंकल्पस्याचिंत्यापरिमेयशक्तेर्युगपत्साक्षात्सदा स्वतः सर्वज्ञस्यैकस्य परब्रह्मण एवोभयकारणत्वमनेककारकसाध्यविचित्रकार्यनिर्माणपटुत्वं चोपपद्यते । 'ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी'त्यादौ निमित्तभूतस्य ब्रह्मणः स्वसंकल्पेन विकसितांतर्यामिशक्तिविशिष्टविभक्तनामरूपस्थूलचिदचिद्वस्तुरूपशरीरतया [1]परिणामश्रवणात् मृत्पिंडादेरचेतनस्य तु ज्ञानेक्षणादिधर्मायोगेनाधिष्ठातृत्वासंभवात् ज्ञानादिधर्मवतोऽधिष्ठातुः कुलालादेरपि सत्यसंकल्पत्वादिगुणायोगेन विचित्रपरिणामपूर्वकसृष्टिनिर्माणासंभवाच्च तथात्वं नोपपद्यते । एवं च सति ब्रह्मणो जगतो निमित्तत्वोपादानत्वप्रकारः स्पष्टतया वर्ण्यते । स्वधामस्थो दिव्यमनोहरमंगलमूर्त्तिः परमात्मा चिदचिद्व्यतिरिक्तः सन् स्वेच्छया संकुचितांतर्यामिशक्तिरूपस्वप्रकाशे सूक्ष्मभावेन संलग्नमंतर्यामिशक्तिविशिष्टत्वात्तच्छरीरभूतं नामरूपविभागानर्हं प्रकृतिपुरुषादिसकलचेतनाचेतनरूपविश्वं प्रलयकाले यदस्ति तत् सर्वं सृष्टिसमये विकसितांतर्यामिशक्तिविशिष्टतया स्थूलभावार्हं विभक्तनामरूपं करोतीति तस्य जगन्निमित्तकारणत्वं विज्ञायते; प्रलयकाले सूक्ष्मभावापन्नाविभक्तनामरूपकसकलचेतनाचेतनशरीरकं अतएव चेतनाचेतनशरीरि चेतनाचेतनविशिष्टं संकुचितांतर्यामिरूपं कारणावस्थं मृत्पिंडसुवर्णादिस्थानीयं परब्रह्मणो

१ नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणायेति, गजेंद्रकृतभगवत्स्तुतिपद्ये अद्भुतकारणायेतिपदव्याख्याने श्रीधरस्वामिनो निमित्तस्य ब्रह्मण एवोपादानत्वेऽपि विरोधाभावमाहुः कारणत्वेऽपि मृदादिवद्विकारं वारयति अद्भुतकारणायेतीति ।

यत् स्वरूपं तज्जगत उपादानकारणम्। तदेव सृष्टिकाले ततो व्यतिरिक्तनिमित्तभूतदिव्यविग्रहपरमात्मेच्छया विभक्तनामरूपप्रकृतिपुरुषादिसकलचिदचिद्वस्तुशरीरकं स्थूलभावापन्नचिदचिद्वस्तुशरीरि स्थूलचिदचिद्वस्तुविशिष्टं स्थूलचिदचिद्वस्तुयथार्हप्रकाशकं घटकुंडलादिस्थानीयं निमित्तभूतस्य परब्रह्मणो विकसितांतर्यामिरूपं कार्यावस्थं भवतीति विज्ञायते। परब्रह्मणोऽतर्यामिरूपेण कार्यानुस्यूतत्वे ततः पृथग्भूतत्वे च श्रुतिः— 'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।

एकस्तथा सर्वभूतांतरात्मा रूपं रूपं प्रतिरूपो बहिश्च' ॥

इत्येवं परब्रह्मणा निमित्तस्य चिदचिद्वस्तुविशिष्टांतर्यामिशक्तेः संकोचविकाशाभ्यां जगतः प्रलयोत्पत्तिस्थितयो भवंति। एवं च सति स्वधामस्थं परमात्मस्वरूपं जगतो निमित्तं कारणं तस्यैव परमात्मनः सूक्ष्मचिदचिद्वस्तुविशिष्टमंतर्यामिरूपमुपादानकारणमिति विवेकः। ननु कार्यावस्थस्य शरीरिणोऽतर्यामिरूपस्य ब्रह्मणः शरीरभूतचिदचिद्वस्तुगतविकारवत्त्वं संभवतीति चेन्नैवं शंक्यम्; कुतः, चिदचिद्वस्तुशरीरस्यांतर्यामिशक्तिरूपस्य परब्रह्मण एवोपादानत्वेऽपि चेतनाचेतनगतविकाराणामस्पर्शदर्शनाय 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्ध' इति व्यपदेशात्। ननु निरीश्वरसांख्यतंत्रसिद्धयोः प्रकृतिपुरुषयोर्जगत्कारणत्वे को दोष इति चेत्तत्र ब्रूमः-अत्र पक्षे पुरुषस्योदासित्वमकर्तृत्वं चोक्तं जडायाः प्रकृतेश्च जगत्कर्तृत्वं सर्वात्मसर्वनियामकपरब्रह्मणस्तयोरुभयोर्नियम्यत्वात्मत्वहीनत्वं चोक्तम्। एवं सांख्यतंत्रोक्तौ परब्रह्मनियम्यत्वात्मत्वरहितयोरुदासिजडयोः प्रकृतिपुरुषयोर्जगत्कर्तृत्वासंभवात् तदुक्तौ श्रुतिस्मृतिविरोधाच्च कारणत्वासंभवः। अतो निरीश्वरसांख्यतंत्रोक्तयोस्तयोर्जगत्कारणत्वं श्रुतिस्मृतिविरुद्धमिति सिद्धांतः। सेश्वरसांख्यतंत्रोक्तयोः परब्रह्मांतर्यामिशक्तिविशिष्टयोः प्रकृतिपुरुषयोर्जगदुत्पत्त्यादिकं परब्रह्मेच्छया संभवति, अतो न विरोधः। निरीश्वरसांख्यतंत्रोक्तप्रकृतिपुरुषस्वरूपमुक्तं धन्वंतरिसूत्रे 'उभावप्यनादी उभावप्यनंतावुभावप्यलिंगावुभावपि नित्यावुभावप्यपरावुभावपि सर्वगतावि'ति। 'न विद्यते परो याभ्यां तावपरौ इति निरीश्वरसांख्यतंत्रसिद्धांतः। सेश्वरसांख्यतंत्रोक्तप्रकृतिपुरुषयोः परमात्माधीनत्वं तस्मादुत्पत्त्यादिकं च श्रीमद्भागवते भगवद्गीतायां स्कांदे च स्मर्यते—'कालवृत्त्यानुमायायां गुणमय्यामधोक्षजः, पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्' इति, 'त्वत्तः पुमान् समधिगम्य ययास्य वीर्यम्' इति, 'स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः, यदिच्छयैवोपगतामभ्यपद्यत लीलया' इति, नान्यत्र मद्भागवतः प्रधानपुरुषेश्वरादिति, प्रकृतिपुरुषयोः परस्य शं नस्तनोतु

चरणः पुरुषोत्तमस्येति, 'पुरुषः प्रकृतिर्व्यक्तमात्मा भूतेन्द्रियाशयाः । शक्नुवंत्यस्य सर्गादौ न विना यदनुग्रहात्' इति, 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते' इति, 'यदा च मायापुरुषौ कालोऽत्यक्षरतेजसि ॥ तदिच्छया तिरोयांति स त्वेको वर्त्तते प्रभुः' इति, सिसृक्षाथाभवत्तस्य ब्रह्मांडानां यदा तदा । सकालाविर्बभूवादौ महामाया ततो हि सा ॥ तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना । सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि ॥ तस्याः प्रधानपुरुषकोट्यो जज्ञिरे मुने ' इति, प्रभाप्रभावतोर्वा गुणगुणिनोरेकात्म्यन्यायेनोपादानस्यांतर्यामिरूपस्य निमित्तेतरत्वं नास्तीति विज्ञापयितुं हेत्वंतरं वदति–

## अभिध्योपदेशाच्च ॥ २४ ॥

'सोऽकामयत बहु स्यां प्रजायेयेति, तदैक्षत बहु स्यां प्रजायेये'त्यादिषु संकुचितांतर्यामिरूपेण नामरूपादिविभागशून्यसूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थोऽहं विकसितांतर्यामिशक्त्या संविभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरकः स्यामिति निमित्तभूतस्य स्रष्टृरूपस्येक्षितुः सर्वज्ञस्य परब्रह्मण एव स्थावरजंगमविचित्रजगदाकारेण या अभिध्या बहुभवनचिंतनं तस्या उपदेशात् निमित्तकारणादन्यदुपादानकारणं नास्तीति ब्रह्मण एव जगत उपादानत्वं निमित्तत्वं च निश्चीयते, तदेव स्पष्टं दर्शयितुं सूत्रांतरमाह–

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

न केवलं प्रतिज्ञादृष्टांताभिध्योपदेशादिभिरेवायमर्थो निश्चीयते किंतु, साक्षात्प्रत्यक्षमेव वेदांतवाक्येषु उभयाम्नानात्–उभयोः कारणयोः आम्नानादभ्यसनात् जगत उपादानं निमित्तं च ब्रह्मैव श्रूयते; तथाहि 'किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी'त्यारभ्य 'यदध्यतिष्ठद्भुवनानि धारयन्नि'त्यंतेन वाक्येनोपादाने निमित्ते च पृष्टे सति 'ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी'त्यारभ्य 'ब्रह्माध्यतिष्ठद्भुवनानि धारय'न्नित्यंतेन वाक्येन ब्रह्मैवोपादानं निमित्तं चास्तीत्युत्तरं साक्षादाम्नायते । उक्ते[१]ऽर्थे प्रमाणांतरमस्तीत्याह–

## आत्मकृतेः ॥ २६ ॥

'तदात्मानं स्वयमकुरुते'ति वाक्ये आत्मनः स्वस्य जगदाकारत्वेन नारायणस्य कृतिरवगम्यते; अतः स एवोपादानं निमित्तं च विज्ञायते । ननु स्वभावतोऽस्पृष्ट-

---

१ ब्रह्मणो जगदुभयकारणत्वरूपः । २ ब्रह्मणो जगदुभयकारणत्वरूपे अर्थे ।

सकलचेतनवर्त्तिदोषमात्रकलंकः निःसीममंगलगुणरत्नाकरो निरंकुशनित्यसिद्धवैभवः प्रपंचातीतः पुरुषोत्तमाभिधनारायणो विचित्रानंतपुरुषार्थास्पदविचित्रचिदचिन्मिश्र-प्रपंचरूपेण कथं वर्त्तते इत्यत्राह–

## परिणामात् ॥ २७ ॥

नित्यशुद्धानंदस्य निरतिशयमंगलस्वभावस्य दिव्यमूर्त्त्या स्वधामस्थस्य जगन्निमित्तकारणभूतस्य परब्रह्मणः संकुचितांतर्यामिशक्तिविशिष्टमविभक्तनामरूपातिसूक्ष्म-चिदचिद्वस्तुरूपं शरीरमुपादानकारणभूतं आत्यंतिकप्रलये सति स्वप्रकाशे सूक्ष्मत्वेनादृश्यमभूत् तद्रूपेण तस्यापि जगदाकारत्वं युक्तमेव; तच्छरीरकस्य परब्रह्मणः स्वसंकल्पेन विकसितांतर्यामिशक्तिविशिष्टविभक्तनामरूपस्थूलचिदचिद्वस्तुरूपशरीर-त्वेन परिणामात् सर्वमविरुद्धम्। ननु कारणविकृतिरूपो हि परिणामः,पूर्वावस्थापरित्यागेनावस्थांतरापत्तिः परिणाम उच्यते; एवं च सति परब्रह्म निर्विकारादेः स्वधर्मात्कथं न चलेदिति चेत् यथा तस्य निमित्तस्योपादानत्वेऽपि विकारादिस्पर्शो न स्यात्तथा तस्य परिणामोऽपि न संभवति। ननु कोऽयमपूर्वः परिणामः? तच्छ्रवणे वयं कुतूहलिनः स्मः,अतः कथ्यतामिति चेच्छृणु,वयं ब्रूमः-'पृथिव्यप्सु लीयते आपस्तेजसि लीयते तेजो वायौ लीयते वायुराकाशे लीयते आकाशमिंद्रियेषु इंद्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयंते भूतादिर्महति लीयते महानव्यक्ते लीयते अव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते तमः परे देवे एकीभवति' इति, सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमिति, 'प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी, पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ परमात्मा च सर्वेषामाधारः पुरुषोत्तम' इति, 'एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रय' इति, 'यदा च मायापुरुषौ कालोऽप्यक्षरतेजसि। तदिच्छया तिरो यांति स त्वेको वर्त्तते प्रभुः' इत्यादिश्रुतिस्मृतिषु 'न कर्माविभागादिति चेन्नानादित्वादि'ति वक्ष्यमाणसूत्रे च कारणावस्थं सूक्ष्मं प्रकृतिपुरुषादिसकलचेतनाचेतनवस्तुपरमात्मनोऽक्षररूपप्रकाशेऽव्यक्तभावेन संलग्नमभूदित्युक्तम्; अतः परमात्मानमेकमद्वितीयं वदंति बुधाः। नन्वेकत्राक्षरतेजसि लीनमित्युक्तमन्यत्र परमात्मनि लीनमिति च पृथक् पृथक् कथं लीनतेति चेत्तत्रोच्यते–अक्षररूपतेजःपरब्रह्मणोः प्रभाप्रभावतोरिवाभेदविवक्षयाऽक्षरतेजसि लीनमपि तत् परमात्मनि लीनमिति वदंति; परमात्मन्येव तत्संलग्नमित्युक्तौ तु सकलदो-

१ चिदचिच्छरीरकस्य। २ प्रकृतिपुरुषादि।

पगंधवर्जितस्यातिशुद्धस्य परमात्मनः समस्तचेतनाचेतनगतदोषसंबंधापत्तिर्भवेदतो नैवं वाच्यम्; यतस्तस्य संकुचितांतर्यामिशक्तिविशिष्टं यत्सूक्ष्मचिदचिद्वस्तु भवति अतस्तत्परमात्मशरीरभूतं वदंति। तदा दिव्यमूर्तिपरमात्मनश्चिदचिद्विशिष्टाया अंतर्यामिशक्तेरेव संकोचो नतु निमित्तभूतस्य स्वस्य; उत्पत्तिकाले च विभक्तनामरूपकस्थूलचिदचिद्वस्तुशरीरे आत्मतया स्थितायास्तस्यांतर्यामिशक्तेरेव विकाशरूपपरिणामो नतु स्वस्य; एवं तस्मिन् निर्विकारत्वादिधर्मक्षतिर्न स्यात्; स्वेच्छया परमात्मनोऽन्तर्यामिशक्तेः संकोचविकाशाभ्यां चेतनाचेतनवस्तुवृंदस्य सूक्ष्मस्थूलभावौ भवतः। तदंतर्यामिशक्तिविकाशेन चेतनाचेतनानां स्थूलभावप्राप्तिः श्रूयते 'सोऽकामयत बहु स्यामि'ति नामरूपादिविभागरहितः सूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थो नारायणोऽहं संविभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरको भवेयमिति सः संकल्पमकरोत् ततश्चेदं सर्वमसृजत यदिदं किंचेति स्वशरीरभूतं सूक्ष्मचिदचिद्वस्तु स्वप्रकाशाद्विभज्य तत्सृष्ट्वा तदेवानुप्राविशदिति स्वतेजसो विभक्ते चिदचिद्वस्तुनि स्वयं विकसितांतर्यामिशक्तिरूपात्मतया प्रविश्य सच्च त्यच्चाभवदित्यादिना सदसत्प्रपंचरूपेण बहुधा परिणतोऽभवदिति पुरुषस्य बाल्ययुवत्वादिवत् ब्रह्मणो जगच्छरीरिणः कारणत्वं कार्यत्वं च। पुनस्तदेव स्पष्टं दर्शयितुमिदं सूत्रमाह—

## योनिश्च हि गीयते ॥ २८ ॥

'यद्भूतयोनिं परिपश्यंति धीराः कर्त्तारमीशं पुरुषं ब्रह्मयोनिमि'त्यादिषु सकलस्य प्रकृतिपुरुषादिस्थावरजंगमांतस्य भूतवर्गस्य परमात्मा योनित्वेनाधीयते; हि यस्माद्धेतोः स योनिरिति गीयते तस्मादुपादानमपि ब्रह्मैवेति विज्ञायते; योनिशब्दश्च उपादानकारणबोधक इति यथोर्णनाभिः सृजते गृह्णीते चेति वाक्यशेषाद् ज्ञायते; अतो जगत उपादानं निमित्तं च परब्रह्मैवेति सिद्धम्।

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

'जन्माद्यस्य यत' इत्यादिना एतेन एतदंतेन व्याख्यानीकृतेन न्यायकलापेन सर्वे ब्रह्मस्वरूपाभिधायिन उपनिषद्वाक्यसमूहाः उपासनबोधकाः पुरुषसूक्तादयो मंत्रब्राह्मणविभागाश्च स्मृतीतिहासपुराणाभियुक्तसूक्तिविशेषाश्च व्याख्याता इति अध्यायसमाप्तिद्योतिका द्विरुक्तिः। वेदादिषु यत्र यत्र चेतनेऽथवाऽचेतने जगत्कारणत्वादि श्रूयते तत्र तत्र प्रमाणवचनेषु तदंतर्यामी नारायण एव बोध्यः, यत्र यत्रापुरुषार्थविकाराज्ञत्वादिको धर्मस्तत्र तत्र नारायणस्य परब्रह्मणः शरीरं चिदचिद्वस्त्वेव

बोध्यमिति सर्वं निरूपणं समंजसमेवेति [1]सिद्धम् ।

इति श्रीशुद्धैकान्तधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने प्रथमाध्यायस्य चतुर्थपादः समाप्तश्चाध्यायः ॥४॥

---

## श्रीसहजानंदाय नमो नमः ॥

---

## द्वितीयाध्याये प्रथमपादः ।

### स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् ॥ १ ॥

प्रथमेऽध्याये सच्चिदानंदस्वरूपे सर्वज्ञत्वसर्वशक्तिकत्वादिगुणकृतस्वरूपलक्षणे सकलजगज्जन्मादिकृतोपलक्षणे सर्वचेतनाचेतनविलक्षणे समस्तदोषकलंकवर्जिते सर्वात्मनि स्वाभिमतानुरूपैकरूपाचिंत्यनित्याद्भुतनिरवद्यनिरतिशयौज्जवल्यसौंदर्यसौगंध्यसौकुमार्यलावण्ययौवनाद्यसंख्यस्वरूपगुणगणविशिष्टे हरिकृष्णवासुदेवपरमात्मपुरुषोत्तमादिनामके परमकारुणिके परब्रह्मणि नारायणे निखिलवेदान्तवाक्यानां तदनुगुणानां स्मृत्यादीनां च तात्पर्येण समन्वयोऽभिहितः। इदानीं द्वितीयेनाध्यायेन तस्य समन्वयस्य वेदांतविरुद्धस्मृतितर्कादिभिः प्राप्तो विरोधः परिह्रियते। प्रथमं सांख्यस्मृतिविरोधः परिह्रियते। अस्मिन्सर्वत्र पूर्वोक्तसमन्वयो विषयः। इह वैदिकसमन्वयस्य सांख्यस्मृत्या संकोचोऽस्ति नवेति संदेहः। कथमिति चेत्तत्रोच्यते-ब्रह्मणो जगत्कारणत्वं वेदोऽभिधत्ते, कपिलस्मृतिश्च प्रधानस्य। विरिंचिसुतः कपिलो हि महातपस्वी ततस्तद्वचनमपि प्रमाणमेव; वेदोऽपि भगवानखिलप्रमाणसार्वभौमः स चाप्रामाण्यगंधमपि न सहते-तस्मादनयोः कस्य केन बाध इति संशयप्राप्तिः। अत्र सांख्यस्मृतेर्धर्मादिप्रतिपादनेऽनवकाशत्वेन कारणवादे प्रबलत्वात् वेदस्य धर्मादिप्रतिपादने सावकाश-

---

१ चतुर्थपादे अधिकरणानि ६ सूत्राणि २९ । २ ब्रह्मव्यतिरिक्तं चेतनाचेतनवस्तुजातं तस्य शरीरं श्रुतिशतप्रसिद्धमस्ति तदस्त्यस्येति शारीरं ब्रह्म तदधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते । ३ द्वितीयाध्याये । ४ सर्वेषु चतुर्षु पादेषु । ५ प्रथमाध्यायोक्तवेदांततदुपबंहकस्मृत्यादिवाक्यसमन्वयः ।

तया कारणवादे दुर्बलत्वात् धर्मादिप्रतिपादनेऽनवकाशया सांख्यस्मृत्या कारणवादे वेदस्य संकोच उचित इति चेद् वदति पूर्वपक्षी--तर्हि वयं नेति वदामः। अन्यासां वेदाविरोधिनीनां मन्वादिस्मृतीनां वैदिके कारणवादान्वयेऽनवकाशदोषप्रसंगात्। 'आसीदिदं तमोभूतमि'त्यारभ्य, 'ततः स्वयंभूर्भगवानव्यक्तो व्यंजयन्निदं, महाभूतादिप्रवृत्तेजः प्रादुरासीत्तमोनुदम्। सन्निधाय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्ज्जादौ तासु वीर्यमुपासृजदि'ति मनुः। भगवद्गीतासु च 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तत' इति। स्कांदे च 'यदा च मायापुरुषौ कालोऽत्यक्षरतेजसि। तदिच्छया तिरोयांति स त्वेको वर्त्तते प्रभुरि'ति॥ सिसृक्षाथाभवत्तस्य ब्रह्मांडानां यदा तदा। सकालाविर्बभूवादौ महामाया ततो हि सा॥ तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना। सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि॥ तस्याः प्रधानपुरुषकोटयो जज्ञिरे मुने' इत्यादिभिः कारणवादिनीभिर्मन्वादिस्मृतिभिरनुमेयश्रुतिमूलायाः प्रधानकारणवादिन्याः सांख्यशास्त्राभिधकपिलस्मृतेरेव बाधः परमप्रामाणिकरामानुजप्रभृत्याचार्यैः परिगृह्यते। सूत्रार्थो वर्ण्यते-स्मृत्यनवकाशदोषप्रसंगः--वैदिके परब्रह्मकारणवादान्वये प्रधानकारणवादिन्याः सांख्यस्मृतेः अनवकाशो योऽवकाशाभावः स एव दोषप्रसंगो मंतव्य इति चेन्न, कुतः; अन्यस्मृत्यनवकाशदोषप्रसंगात्-अन्यासां वेदानुकूलानां मन्वादिस्मृतीनां वैदिके कारणवादान्वये योऽनवकाशो भवेत्स एव दोषप्रसंगो मंतव्यः, स त्वत्र न प्रतीयते, अतस्ताभिः सांख्यस्मृतेर्बाधो युक्तः।

## इतरेषां चानुपलब्धेः ॥२॥

इतरेषां मन्वादीनां परमप्रामाणिकानां सर्वज्ञानां स्मृतिषु विधिसुतकपिलस्मृत्यभिहितस्य प्रधानकारणत्वस्य अनुपलब्धेः प्रधानकारणवादिनी स्मृतिरवेदमूलैवेति वक्तुं युक्तम्; अतः सांख्यस्मृत्या वैदिकसमन्वयस्य न संकोचः।

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

अष्टांगयोगप्रतिपादिनी विधिसुनोर्हिरण्यगर्भपर्यायोगस्मृतिरपि प्रधानकारणत्वमेव वदति विधितनयकपिलस्मृतिवत्; यथा वैदिकसमन्वयस्य प्रधानकारणत्ववादिन्या सांख्यस्मृत्या विरोधात्तयो तस्य संकोचो नाभवत् तथा चानया योगस्मृत्यापि वैदि-

१ मप्रज्ञानमलक्षणम्, अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः। २ सांख्यस्मृत्या। ३ वैदिकसमन्वयस्य।

कसमन्वयस्य संकोचो न भवति, भवति वेति संदेहे संकोचो भवतीति पूर्वपक्षं ब्रूमः। कथमिति चेत्तत्रोच्यते—यद्यपि सांख्यस्मृतेरनुमेयश्रुतिमूलत्वे सति वैदिकसमन्वयसंकोचो न संभवति तथापि श्वेताश्वतरोपनिषदि ब्रह्मसाक्षात्कारहेतुतया योगविद्यायाः प्रपंचितत्वात्प्रत्यक्षश्रुतिमूलया हिरण्यगर्भयोगस्मृत्या प्रधानकारणवादिन्या परब्रह्मकारणवादिवैदिकसमन्वयस्य संकोच उचित इति प्राप्ते सिद्धांतं वदामः-न योगस्मृत्या श्रुतिसमन्वयसंकोचः, कुतः योगस्मृतेः। "योगश्चित्तवृत्तिनिरोधः" इति सूत्रमारभ्य वैदिकाष्टांगयोगप्रतिपादने हि तात्पर्यमस्ति नावैदिके प्रधानकारणवादे। यदि योगस्मृतावपि सांख्यस्मृतिवत्तात्पर्यमस्ति चेत्तर्हि तस्या अपि प्रत्याख्यानं न्याय्यम्। ततो हिरण्यगर्भयोगस्मृत्यापि प्रधानकारणवादिन्या परब्रह्मकारणवादिश्रुतिसमन्वयस्य संकोच इति यदुक्तं तदयुक्तमेव। अथ सूत्रार्थमात्रं वर्ण्यते-तेन वैदिकसमन्वयविरुद्धप्रधानकारणत्वप्रदर्शकसांख्यस्मृतिनिषेधेन योगः प्रत्युक्तः—प्रधानकारणत्वबोधकयोगशास्त्रमपि प्रत्याख्यातं-निषिद्धमेवेत्यर्थः। पुनरपि ब्रह्मकारणवादिशास्त्रसमन्वयस्य सांख्यतंत्रोक्ततर्केण बाध्यतामाशंक्य परिहरति—

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

यथा वैदिकसमन्वयस्य सांख्यस्मृत्या न बाधः तथा तत्तर्केणाप्यस्य बाधो नास्ति, अस्ति वेति संशये सर्वथा तर्कबाध्योऽयं ब्रह्मकारणवाद इति पूर्वः पक्षः प्रवर्तते। कथमिति चेत्तत्र वदामः—ब्रह्मणः प्रपंचस्य चान्योन्यविलक्षणत्वात् अस्य जगतः तथात्वं ब्रह्मकार्यत्वं न संभवति। कुतो वैलक्षण्यमवगतमिति चेत् शब्दादेव; चोऽवधारणे। 'विज्ञानं चाविज्ञानं चे'ति श्रुतिशब्दो हि प्रपंचस्य विकारास्पदत्वाज्ञत्वाद्यपुरुषार्थरूपमभिधत्ते, अतः सत्यज्ञानानंदरूपात् ब्रह्मणोऽस्य वैलक्षण्यं सिद्धम्। एवं च सति कथमनयोरश्मेपयोरिव कार्यकारणत्वं घटते? अत्र पुनरुपपत्तिमाह—

## अभिमानव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

यद्यचेतनत्वेन चेतनाद् ब्रह्मणो विलक्षणमिदं जगत्तर्हि 'तं पृथिव्यब्रवीत्

---

१ द्वितीयाध्याये। २ त्रीणि कायग्रीवाशिरांसि उन्नतानि यस्मिन् तच्छरीरं समं संस्थाप्य युंजीतेति योजना 'त्रिरुन्नतं संस्थाप्य समं शरीरमि'त्यादिकायाः। ३ सांख्यतर्केण ४ वैदिकसमन्वयस्य। ५ प्रपंचस्य। ६ अस्मिन्स्वमते जगद्ब्रह्मणोर्वैलक्षण्यात्कार्यकारणत्वाभावोपपत्तौ युक्त्यंतरेण तत्र बाधमाशंक्य पुनस्तदुपपत्तिमाह पूर्वपक्षी।

आपो वा अकामयंत शृणोत ग्रावाणो विदुष' इत्यादौ वाक्ये पृथिव्याद्यचेतनस्य कथं चेतनकार्यव्यपदेशः ? तस्मादिदं चेतनमेव सर्वं जगत्; अतो ब्रह्मप्रपंचयोः चेतनाचेतनरूपतया न वैलक्षण्यं शंकनीयम्; इति चेत्तत्राह-यतः पृथिव्यादिषु सर्वत्र चेतनकार्यव्यपदेशस्तु तदभिमानिदेवतासंबंध्येवावगम्यते 'हंताहमिमास्तिस्रो देवता' इति देवताशब्दविशेषात्, 'अग्निर्वाक् भूत्वा मुखं प्राविशदिति, आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदिति, वायुः प्राणो भूत्वा नासिके प्राविशदि'त्यादिभिः अचिद्वस्त्वभिमानिदेवतानुगतेश्च । तस्माच्चेतनसमूहमिश्राचेतनत्वादिनापि कल्याणगुणगणविशिष्टाद् ब्रह्मणो विलक्षणमेव जगत् । ततो जगतः कार्यत्वं ब्रह्मणः कारणत्वं च पूर्वपक्षयुक्तिबाध्यमेव ।

## दृश्यते तु ॥ ६ ॥

सिद्धांत उच्यते-विलक्षणयोरपि ब्रह्मप्रपंचयोः कार्यकारणभावः संभवति । अचेतनाद्गोमयाच्चेतनवृश्चिकोत्पत्तिदर्शनाच्चेतनात्पुरुषादचेतनकेशाद्युत्पत्तिदर्शनाच्च । अतः शुष्कतर्कः श्रुतिसमन्वयस्य न बाधक इति निर्णीयते । पुनः शंकित्वा परिहरति—

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

एवं कार्यकारणयोर्वैलक्षण्यात् कारणे कार्यमसदेव ' असद्वा इदमग्र आसीदि'ति श्रुतेरिति चेन्नैवं वाच्यं प्रतिषेधमात्रत्वात् । अस्याः श्रुतेस्तयोः समानलक्षणत्वनियमप्रतिषेधमात्रविषयत्वात् । अतः कार्यकारणयोर्वैलक्षण्येऽपि पूर्वोक्तेन चेतनाचेतनानां ब्रह्मणश्च शरीरशरीरिभावरूपेण श्रुतिस्मृत्यभिहितचातुर्येण वस्त्वेकता न हीयते एव ।

## अपीतौ तद्वत्प्रसंगादसमंजसम् ॥ ८ ॥

इतौ-जगतो ब्रह्मणः सकाशादुत्पत्तौ सत्यामित्यर्थः । तयोरेकभावोक्त्या तद्वत्प्रसंगात्-जगतो यथा तथा ब्रह्मणोऽपि विकारत्वाज्ञत्वादिप्रसंगात् श्रुत्यभिहितं सर्वज्ञत्वनिर्विकारत्वादिकं तद्धर्मवृंदं असमंजसं स्यात् । इममेवार्थं विवृणोति [1]सत्कार्यवादेन । कार्यकारणयोर्जगद्ब्रह्मणोर्वस्त्वेकत्वे श्रुतिसमन्वयस्य तर्कबाध्यत्वमस्ति नवेति संदेहे सति तदस्तीति पूर्वः पक्षः । कथं, यत एव जगद्ब्रह्मणोर्वस्त्वैक्योक्तौ जगत इव ब्रह्मणो विकाराज्ञानाद्यनिष्टप्रसंगः समागच्छते,

१ 'सदेव सौम्येदमग्र आसीदि'ति श्रुत्युक्तेन ।

तत उपनिषद्वाक्यानामेकार्थसांगत्यमसमंजसमस्ति, अतस्तर्केण श्रुतिसमन्वयस्य बाध इति ।

## न तु दृष्टांतभावात् ॥ ९ ॥

पूर्वाधिकरणाभिहितबाधबोधकपूर्वपक्षव्यावर्त्तकौ न तु शब्दौ । 'यस्यात्मशरीरं यस्याव्यक्तं शरीर' मित्यादिबृहदारण्यश्रुत्या यः 'पृथिवीमंतरे संचरन् यस्य पृथिवी शरीर' मित्यारभ्य 'य आत्मानमंतरे संचरन् यस्यात्मा शरीर' मिति सबालोपनिषच्छ्रुत्या च ।

'खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्वानि दिशो द्रुमादीन् ।
सरित्समुद्रांश्च हरेः शरीरं यत् किंच भूतं प्रणमेदनन्यः' ॥

इति श्रीमद्भागवतोक्त्या च सिद्धचिदचिच्छरीरकस्य परब्रह्मणो नारायणस्य कारणतया कार्यतया चावस्थाने सति गुणदोषव्यवस्थायां दृष्टांतसद्भावात्तत्रोपनिषद्वाक्यानामेकार्थसांगत्यमसमंजसं न भवति;कथमिति चेत्तत्रोच्यते-यथा मनुष्यादिभावोपगतात्मनो बालत्वयुवत्वस्थविरत्वादिभावेऽपि बालत्वादयः शरीर एव सुखादयस्त्वात्मन्येव तद्वदत्रापि शरीरभूतचिदचिद्वस्तुगताज्ञानविकाराद्यनिष्टानि शरीरभूते चिदचिद्वस्तुन्येव तिष्ठंति, निरवद्यत्वाविकारसर्वज्ञत्वसत्यसंकल्पत्वादयः आत्मभूते नारायण एव, इत्थं दृष्टांतभावात् दृष्टांतदार्ष्टांतिकयोः सत्यत्वात् उपनिषद्वाक्यानामेकार्थसांगत्यस्यासामंजस्यं चेतनाचेतनशरीरिणि परब्रह्मणि नास्त्येव ।

## स्वपक्षदोषाच्च ॥ १० ॥

केवलं तर्कावलंबने स्वपक्षरूपे प्रधानकारणवादे एव दोषः । तथाहि निर्विकारपुरुषसंनिधिवशात्प्रकृतिप्रवृत्तौ सत्यां परस्परधर्माध्यासो दुर्निवार्यः। अन्यत्रान्यधर्मानुसंधानरूपोऽध्यासः स निर्विकारस्य पुरुषस्य सदोदासित्वादकर्त्तुर्न संभवति, अचेतनायाः प्रकृतेश्चानुसंधानरूपोऽध्यासो न संभवत्येव; अतः प्रधानकारणवाद एव तर्कबाध्यः ।

## तर्काप्रतिष्ठानादपि ॥ ११ ॥

तर्कस्याप्रतिष्ठितत्वात्प्रधानकारणवादस्य तन्मूलत्वात्तत्र प्रतितर्कं तर्कांतरसंभवात्तस्यैव त्याज्यत्वं न ब्रह्मकारणवादस्य ।

---

१ चिदचिच्छरीरकस्य ब्रह्मणः कार्यकारणतयावस्थाने । २ जगन्निर्माणहेतुकचैतन्यगुणानुसंधानरूपः । ३ तर्कमूलत्वात् । ४ प्रधानकारणवादे । ५ प्रधानकारणवादस्य ।

## अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसंगः ॥ १२ ॥

अन्यथा यथा प्रधानकारणवादस्य प्रतितर्केण पराहतिर्न भवेत् तथा प्रकारांतरेण प्रधानस्य कारणत्वमनुमेयमिति चेत् एवंवादोऽपि युक्तो न भवतीत्याह-तत्र वादेऽप्येवं तयोः परस्परसंयोगानर्हस्वभावयुक्तयोः प्रकृतिक्षेत्रज्ञसमूहयोर्निजस्वभावविरुद्धान्योऽन्यधर्माध्याससंपादकतर्कोपरि प्रतितर्ककलहसंभावनया एतद्वादप्रतिष्ठितत्वाभावदोषादनिर्मोक्ष एव प्रसज्यते; अनिर्मोक्षप्रसंगो हि क्षेत्रज्ञकलापस्य नित्योदासीनस्य प्रकृतिसंबंधाभावान्नित्यमुक्तत्वे न प्रतीयते; तयोर्नित्यं परस्परधर्माध्यासत्वे सति तु पुरुषसमूहस्य स एव प्रतीयते सदा प्रकृतिधर्माध्यासवतस्तस्योपदेष्ट्टतदन्यमुक्ताभावात् । ततः शुष्कतर्कमूलप्रधानकारणवाद एव त्याज्यः ननु प्रबलश्रुतिप्रमाणसिद्धो ब्रह्मकारणवाद इति युक्तम् ।

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १३ ॥

यथेदमनीश्वरसांख्यशास्त्रं तर्कमूलत्वेनाप्रतिष्ठितत्वादिभ्यः प्रत्याख्यातं तथैवैतेन प्रत्याख्यानेन शिष्टानामपरिग्रहाः कणभक्षाक्षपादादीनां बुद्धिमतां पक्षा अप्यपरिग्राह्या इति व्याख्याताः। एतदुक्तं भवति कणादमतसिद्धपरमाणुकारणवादोऽपि निराकृत इति ।

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १४ ॥

पूर्वत्र यदुक्तं चिदचिदात्मकविश्वविशिष्टांतर्यामिरूपनारायण एवाद्वितीयः सन् कारणं कार्यं च भवतीति विशिष्टं ब्रह्माद्वैतं तस्य[1] वैदिकवाक्यसमन्वयसिद्धस्य युक्तिबाधापत्तिरस्ति नवेति संशयः। एवं सति पूर्वपक्षः प्रवर्त्तते-यदि चिदचिच्छरीरकत्वमिष्यते नारायणस्य तदा शरीरित्वमस्य सिद्धम्; तथा सति जीववत्सशरीरत्वेन तस्यापि शरीरसंबंधप्रयुक्तसुखदुःखभोक्तृत्वापत्तेरस्मात्संसारिणो जीवात्तस्य नारायणस्याविभागः प्राप्तः,अतोऽयं जीवोऽयं नारायणश्चेति विशेषानुपपत्त्या जगद्विशिष्टत्ववादे नारायणस्य निर्दोषस्वरूपासिद्धिप्रसंग इत्येवं पूर्वपक्षी मन्यते चेत् नात्र विरोध इति सिद्धांतः। निर्दोषनिखिलमंगलदिव्यमनोहरमूर्त्तित्वेन जीवान्नारायणस्य विभागः स्यादेव न खलु शरीरित्वप्रयुक्तमनिष्टभोक्तृत्वं किंतु पराधीनत्वप्रयुक्तमेव। यथा लोके राज्ञः सशरीरत्वेऽप्यनन्यवश्यस्य[2] न स्वाज्ञाहननजन्यदुःखसंबंध इतरेषां तु भवति इति तस्य स्वाज्ञाभंगजन्यदुःखभोक्तृत्वं नेतरसमानम्। 'ज्ञाज्ञौ द्वावजावीशानीशाविति' जीवनारायणयोरस्वातंत्र्यं स्वातंत्र्यं च स्वतः सिद्धमेव; अतश्चेतनाचेतनस्वभावेभ्योऽ-

---

१ विशिष्टाद्वैतस्य ब्रह्मणः । २ सार्वभौमत्वात् स्वतंत्रस्य ।

तिविलक्षणस्वभावया दिव्यमनोहरमंगलमूर्त्या स्वधामस्थस्य स्वतंत्रस्यांतर्यामितया चिदचिच्छरीरिणो नारायणस्यास्वतंत्राज्जीवाच्छरीरसंबंधतुल्यत्वेऽपि विभागोऽस्त्येव; अतो न विशिष्टाद्वैतहानिः। यद्यपि स्वातंत्र्यास्वातंत्र्याद्यन्योन्यविरुद्धधर्मसंबंधेन जीवब्रह्मणोर्विभाग उच्यते तथापि तयोरचिद्विशिष्टजीवब्रह्मणोरनन्यत्वं सिध्यत्येवेत्याह—

## तदनन्यत्वमारंभणशब्दादिभ्यः ॥ १५ ॥

इह कार्यकारणयोर्जगद्ब्रह्मणोः श्रुतिसमन्वयसिद्धमनितरत्वं युक्तं नवेति संदिह्यते। अचेतनत्वाल्पज्ञत्वकर्मवश्यत्वाकर्मवश्यत्वसर्वज्ञत्वाद्यन्योन्यविरुद्धधर्मसंबंधवैलक्षण्यं संदेहस्य कारणम्; विरुद्धधर्मिणोरनयोः कथमनन्यत्वमुपलभ्यते? पूर्वाधिकरणे सर्वज्ञत्वादिमत्त्वेन नारायणस्य भोक्तृत्वाज्ञत्वादिना जीवस्य चोभयोर्विभागो निर्दिष्टः[1] अचिद्वस्तुनोऽप्यनेनात्यंतविलक्षणत्वादनन्यत्वकथा दूरत एव त्यक्ता। नहि कार्यकारणत्वमनन्यत्वसाधकम्; गोमयवृश्चिकादौ कार्यकारणत्वे सत्यपि तस्मिन् वैलक्षण्यदर्शनात्। घटमृत्पिंडादिष्वपि पदार्थजलाहरणरूपक्रियादिव्यवहारभेदादभेदो नास्त्येव। अथवा कार्यकारणयोरत्यंताभेदे प्रपंचब्रह्मणोरखंडत्वैकधर्मतया[2] सर्वत्र कर्तृकर्मक्रियादिव्यवहारलोपः स्यादित्येवं प्राप्ते पूर्वपक्षे ब्रूमः—संकुचितांतर्यामिशक्त्या सूक्ष्मचेतनाचेतनवस्तुषु व्याप्तात् सूक्ष्मचिदचिच्छरीरिणः कारणात् ब्रह्मणः कार्यं[3] विकसितांतर्यामिरूपेण विशिष्टं स्थूलचिदचिद्वस्तुभूतं जगदनन्यदेव; कथमेतदवगम्यते? आरंभणशब्दादिभ्यः- आरंभणे शब्द आदिर्येषां तेभ्यः,'यथा वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेयेति' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो सर्वं खल्विदं ब्रह्म तज्जलानिति तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' इत्यादिशब्देभ्यः[4]। यदुक्तं नहि कार्यकारणत्वमनन्यत्वसाधकमिति तत्राह—

## भावे चोपलब्धेः ॥ १६ ॥

घटादिकार्यभावे तदेवेदं मृद्द्रव्यमित्थमवस्थितमिति कारणस्योपलब्धेश्च कारणादनन्यत्कार्यम्; यथा सजीवस्य देवदत्तदेहस्य बालत्वयुवत्वाद्यवस्थाविशिष्टत्वमनन्यत्वं

१ जीवब्रह्मणोरनन्यत्वाभावहेतुविभागनिर्देशेन। २ अविनाशिस्वरूपसमानधर्मतया। ३ कारणस्य ब्रह्मणः सर्वेषु कार्येषु। ४ इदं सर्वं यदयमात्मा ब्रह्मैवेदं सर्वमात्मैवेदं सर्वम्।

तथा नारायणांतर्यामिशक्तिविशिष्टत्वात्स्वशरीरभूतस्य मृत्पिंडस्थानीयकारणावस्थसूक्ष्मचिदचिद्वस्तुसमूहस्य तद्विकसितांतर्यामिशक्तिविशिष्टतया शरीरभूतघटादिस्थानीयकार्यावस्थस्थूलचिदचिद्वस्तुतया भवनमनन्यत्वम्; इत्थं मृत्पिंडघटादिदृष्टांतो योजनीयो न त्वन्यथा; कुतः, श्रुत्यभिहितानां चेतनाचेतनपरमात्मनां विलक्षणस्वरूपस्वभावानां परस्परविरोधापत्तेः। तदेव स्पष्टयति—

## सत्वाच्चावरस्य ॥ १७ ॥

अपरस्येति पाठांतरम्। अवरस्य स्थूलचेतनाचेतनरूपकार्यस्य जगतस्तद्व्यतिरिक्तनारायणप्रकाशे सूक्ष्मरूपतया सत्वात् कारणावस्थतया प्रलयकाले विद्यमानत्वात् संकुचितांतर्यामिशक्तिविशिष्टसूक्ष्मचिदचिद्वस्तुरूपकारणादनन्यत् विकसितांतर्यामिशक्तिविशिष्टस्थूलचिदचिद्वस्तुकार्यं व्यपदिश्यते। अनेन प्रकारेण कार्यकारणयोर्जगद्ब्रह्मणोरनन्यत्वं ज्ञातव्यं नतु मृद्घटादिदृष्टांतवदत्यंताभेदेन; कुतः, परस्परविरुद्धाल्पज्ञत्वाचेतनत्वसर्वज्ञत्वादिधर्मविशिष्टानां चेतनाचेतनांतर्यामिणां कार्यकारणभावेनात्यंताभेदे वाच्ये सति तत्त्वत्रयनिरूपकश्रुतिस्मृतीनां परस्परविरोधापत्तेः। नन्वेवं च सति मृद्घटादिदृष्टांतप्रदर्शने किं प्रयोजनमिति चेत्तत्र ब्रूमः—मृद्घटादिदृष्टांतप्रदर्शनं तु कारणावस्थसूक्ष्मचिदचिद्वस्तूनां नामरूपविभागाभावप्रतिपादनपरम्, कार्यावस्थानां तेषां च नामरूपविभागबोधनपरं च नतु तत्त्वत्रयस्यैकत्वप्रतिपादनपरम्। पुनराशंक्य तत्प्रतिहर्तुं सूत्रांतरमारभ्यते—

## असद्व्यपदेशान्नेति चेन्न धर्मांतरेण वाक्यशेषाद्युक्तेः शब्दांतराच्च ॥ १८ ॥

'इदं वा अग्रे नैव किंचनासीदि'ति कार्यस्य पूर्वमसद्व्यपदेशात् कारणे कार्यमसदिति चेन्न, स्थूलत्वविरोधिसूक्ष्मत्वधर्मांतरयोगेनैवायमसद्व्यपदेशः नतु चिदचिद्वस्त्वभावेन; कुतः, 'तदसदेव सन्मनोकुरु तस्या'मिति वाक्यशेषात् मनस्कारोपि विद्यमानस्यैव भवति, युक्तिरपि तथा असद्व्यपदेशस्य धर्मांतरयोगनिमित्ततामवगमयति। 'युवा प्रागासीदिदानीमस्ति तदानीं न भविष्यती'ति बाल्यत्वयुवत्वस्थविरत्वरूपैरन्योन्यविरोधिभिर्भावरूपैर्धर्मैर्विद्यमानस्यैव जीवविशिष्टशरीरस्यासदादिव्यपदेशोपपत्तौ न तद्व्यतिरिक्तः[1] कश्चिदभावो[2] नाम पदार्थो भवति येन असद्व्यपदेशालंबनं धर्मांतरं कल्पनीयं स्यादिति युक्तेः तथा शब्दांतराच्च 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते'

---

१ जीवविशिष्टशरीरव्यतिरिक्तः। २ अभावेन।

इत्यादेः—अत्रायमभिप्रायः—पूर्वं दिव्यमनोहरपरममंगलमूर्त्या स्वधामस्थस्य सूक्ष्मचिदचिद्वस्तुव्यतिरिक्तस्य जगन्निमित्तभूतस्यांतर्यामिशक्तिमतोऽद्वितीयस्य नारायणस्य प्रकाशभूतांतर्यामिशक्तिविशिष्टनामरूपविभागानर्हंसूक्ष्मचिदचिद्वस्तुशरीरकं शरीरशरीरिणोरभेदविवक्षयाऽद्वितीयमुपादानकारणभूतमंतर्यामिशक्तिरूपपरमात्मस्वरूपं शक्तिशक्तिमतोरभेदेनैकमेवासीत् पुनः स्वेच्छया तद्रूपः परमात्मा सूक्ष्मतया स्वस्थं चिदचिद्वस्तुवृंदं तत्पूर्वदशाविरोधिस्थूलत्वयुक्तनामरूपविभागार्हं यथा स्यात्तथा बहिर्विस्तारयति। अंतर्यामिशक्तिमतो नारायणस्य चिदचिद्वस्तुष्वंतर्यामिशक्तेः संकोचावस्था प्रलयः विकाशावस्था सृष्टिरिति एवं कारणात्परब्रह्मणः शरीरशरीरिभावेनाभिन्नमेव जगत्कार्यमिति विज्ञायते। अत्र दृष्टांतांतरमाह—

## पटवच्च ॥ १९ ॥

कनकक्रिमिकोशकार्पासानां तंतुभिर्निर्मितपटवत् सूक्ष्मावस्थं स्थूलावस्थं च विश्वं व्यपदिश्यते। तथाहि यथा कनकादीनां तंतुत्रयेण रचितस्य पटस्य सूक्ष्मतया संकोचः कारणावस्था, तस्य प्रसारणं कार्यावस्था, अथवा कंचुकरूपेण महापटकुटीरूपेण वा रचना कार्यावस्था भवति; तथा सूक्ष्मचिदचिद्वस्तुविशिष्टं संकुचितांतर्यामिशक्तिरूपं ब्रह्म कारणं विभक्तनामरूपस्थूलचिदचिद्वस्तुविशिष्टं विकसितांतर्यामिशक्तिरूपं ब्रह्म कार्यं च भवति। पुनर्निदर्शनांतरमाह—

## यथा च प्राणादिः ॥ २० ॥

यथा वायुरेक एव स्थानभेदेन प्राणादिभेदमात्रहादिभेदं च भजते तथांतर्यामिशक्तिमदेकमेव ब्रह्म स्थूलभावापन्नप्रकृतिपुरुषादिसकलचेतनाचेतनरूपस्थानभेदेन तत्तत्कर्मफलप्रकाशकमंतर्यामिशक्तिभेदं भजते। एवं ब्रह्मणः कारणाद्व्याप्यव्यापकभावेनानन्यत्कार्यं जगदिति युक्तम्। उक्तमर्थमाक्षिप्य समाधत्ते—

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

परब्रह्मणो जगत्कारणत्वं संभवति नवेति संदेहः। न संभवतीति पूर्वपक्षः प्रवर्त्तते। कुतः, 'तत्त्वमस्ययमात्मा ब्रह्म अहं ब्रह्मास्मी'त्यादिवाक्येषु जीवब्रह्मणोरेकत्वोक्त्या जीवो ब्रह्मेति प्राप्तौ प्रपंचसर्जनस्य जीवदुःखहेतुत्वेन जीवभावापन्नस्य ब्रह्मणः स्वहिताकरणादिदोषप्रसक्तेः सर्वज्ञस्य सत्यसंकल्पस्य ब्रह्मणः प्रपंचकारणत्वानुपपत्तेः। एवं त्वदुक्तौ जीवब्रह्मणोर्भेदवादिन्यः श्रुतयः प्रपंचब्रह्मणोरनन्यत्वं कथयता त्वयैव परित्यक्ता भवेयुः। तर्हि भेदो वाच्यः, भेदे सत्यनन्यत्वासिद्धिः स्यात्, अतोऽत्रैवं

वक्तव्यम्; औपाधिकभेदप्रतिपादिकाः भेदश्रुतयः स्वाभाविकाभेदप्रतिपादिका अभेदश्रुतयश्चेति चेत्तत्रेत्थं शंक्यते-स्वभावेन स्वस्मादभिन्नं जीवकलापं प्रकृत्यनावृतः प्रपंचकारणभूतो ब्रह्मनामा परमात्मा किं न जानाति जानाति, न जानातीति चेत्सर्वज्ञत्वहानिः, जानातीति चेत् स्वस्मादनन्यस्य जीवस्य आध्यात्मिकादित्रिविधास्तापाः स्वस्यैव तापाः संतीति बोद्धुः परमात्मनः हिताकरणादिदोषप्रसक्तिरवर्जनीया । ननु जीवब्रह्मणोर्भेदोऽज्ञानकृतः। तत्र पक्षे भेदप्रतिपादिका भेदश्रुतय इति चेत्तत्रापि पूर्वोक्तदोषप्रसंग इति प्राप्ते सिद्धांतं ब्रूमः–'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'पृथगात्मानं प्रेरितारं च मत्वा जुष्ट' इत्यादिभिर्जीवात्मनोऽर्थांतरभूतः परमात्मेत्यवगमात् जीवकर्मानुगुणप्रपंचरचनायाश्च परब्रह्मणो लीलामात्रप्रयोजनत्वात् प्रपंचकारणत्वं संभवत्येव।'तत्त्वमसी'त्यादिवाक्येषु जीवब्रह्मणोरेकत्वनिर्देशस्तु तयोः'यस्यात्मा शरीरमि'त्यादिश्रुत्यंतरेषु शरीरशरीरिभावस्य स्वाभाविकत्वप्रतिपादनाज्जीवस्य परब्रह्मतादात्म्यभावमवगमयति। सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणावस्थं स्थूलचिदचिद्वस्तुशरीरं ब्रह्मैव कार्यावस्थमिति कार्यकारणयोरनन्यत्वम्; किंच शरीरभूतयोश्चेतनाचेतनवस्तुनोर्दुःखित्वपरिणामित्वादिस्वभावाः शरीरिणो ब्रह्मणश्च सकलदोषगंधवर्जितत्वसमस्तकल्याणगुणाकरत्वादिस्वभावाश्च तत्त्वानां तेषां त्रयाणां स्वरूपवैलक्षण्यबोधकाः श्रुतिसिद्धाः संतीति निश्चीयते। इदानीं सूत्रार्थविवेचनं विधीयते-इतरशब्देन ब्रह्मणोऽन्यो जीवो व्यपदिश्यते; इतरस्य जीवस्य ब्रह्मत्वेन व्यपदेशात् तयोरेकत्वमवगतम्; अतो जीवभावापन्नस्य स्वस्य दुःखित्वादिधर्मोपलब्धेर्हितरूपप्रपंचाकरणमहितरूपप्रपंचकरणमित्याद्यनेकदोषप्रसक्तिर्ब्रह्मणो भवति; अतस्तस्य जगत्कारणत्वं न संभावनीयमित्यर्थः । तस्य जगत्कारणत्वं युक्तमिति प्रतिपादयितुं सूत्रमाह–

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

तुशब्द उक्तपक्षव्यावर्त्तकः। कार्यकारणयोरनन्यत्वेऽपि जीवात्मनोऽधिकमर्थांतरभूतं ब्रह्म श्रूयते; कुतः, भेदनिर्देशात्। तथाहि 'करणाधिपाधिपः, प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'पृथगात्मानं प्रेरितारं च मत्वा' 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिजाकशीति' 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'विद्याविद्ये ईशते यस्तु सोऽन्यः' नित्यो नित्यानां चेतनश्चेतनानाम् अंतः प्रविष्टः शास्ता जनानां जुष्टं यदा पश्यत्यन्यमीशम्' य आत्मनि तिष्ठन्नात्मनोंतर' इत्यादिश्रुतिभिर्नियम्याज्जीवान्नारायणस्य नियंतुर्भेदो निर्दिश्यते। ननु पूर्वं 'तदन-

न्यत्वमारंभणशब्दादिभ्य' इत्यादिग्रंथव्याख्याने चिदचिदात्मकप्रपंचस्य परस्य ब्रह्मणश्चानन्यत्वमभेदप्रतिपादकश्रुतिगणेन युष्माभिः साधितम्; अत्र तु तयोः पृथक्त्वं भेदप्रतिपादकश्रुतिगणेन साधितम्; तत्र यत्प्रपंचस्य परस्य ब्रह्मणश्चानन्यत्वं युष्माभिरभेदोपपादकश्रुतिगणेन साधितं तत्किं स्वाभाविकं स्वीक्रियते उतौपाधिकम्? तयोर्यत्पृथक्त्वं च भेदोपपादकश्रुतिगणेन साधितं तत्किमौपाधिकं स्वीक्रियते उत स्वाभाविकं किंवात्र भवदभिप्रेतमिति न वयं निर्णेतुं शक्नुमः। किंच केवलभेदवादभेदाभेदवादनिर्विशेषवस्त्वैक्यवादरूपाणि त्रीणि मतानि संति; तत्र कतमं मतमुभयथा श्रुतिगणेन युष्माभिः साधितमिति चेन्न वयमुभयथा श्रुतिगणेन भवदभिप्रेतं प्रपंचब्रह्मणोरनन्यत्वे पृथक्त्वे च स्वाभाविकत्वमौपाधिकत्वं चाश्रित्य त्वदुक्तमतत्रयान्यतममतं साधयामः, किंत्वनेन श्रुतिगणेन प्रतिपाद्यं विशिष्टाद्वैताख्यं मतमेव साधयामः। यत्त्वया मतत्रयमुक्तं तत्राद्यं मतं वेदांतज्ञैरस्माभिरनंगीकृतम्; यतः केवलभेदवादिनां मते हि घटपटयोरिवात्यंतभिन्नयोः प्रपंचपरब्रह्मणोः केनापि प्रकारेणैक्यासंभवादखिलोपनिषत्प्रसिद्धं कृत्स्नस्य प्रपंचस्य चिदचिदात्मकस्य ब्रह्मशरीरभावमाश्रित्य विधीयमानमैतदात्म्यमिदं सर्वमिति तस्य ब्रह्मतादात्म्यभावोपदेशनं न संभवेत्; सकलोपनिषत्परित्यागरूपो विरोधश्चाप्यापद्येत; परित्यक्तश्रुतिप्रकोपश्चापि जायेत। द्वितीयमतमपि नास्माभिः स्वीकृतम्; यतस्तद्वादिनां मतेऽपि विरोधबाहुल्यमापद्यते। ते च जीवब्रह्मणोर्भेदश्रुतय औपाधिकभेदविषयाः अचिद्ब्रह्मणोर्भेदश्रुतयस्तु स्वाभाविकभेदविषया इति मन्यंते। अत्र को वा विरोध इति चेज्जीवब्रह्मणोरौपाधिकभेदवादे ह्युपाधिसंसर्गेण ब्रह्मण एव जीवभावांगीकार आपतेत्; तथात्वे सर्वोपाध्युपहितस्वरूपस्य तस्यैकत्वाभ्युपगमाज्जीवानां परस्परं भोगव्यतिकरादयो दोषा उपपद्येरन्; जीवब्रह्मणोर्नित्यत्वादिप्रतिपादकश्रुत्यादिविरोधश्चाप्युपपद्येत; ब्रह्मण्येवोपाधिसंसर्गाच्चोपाध्युपहितब्रह्मणो जीववदजीवगता अनिष्टनिःसीमत्रिविधतापादिसहिष्णुत्वादयोऽनेके दोषा अपि ब्रह्मण्येव प्रसज्येरन्; तथा सति निरस्तनिखिलदोषगंधमंगलगुणगणाधारब्रह्मस्वरूपनिरूपकश्रुत्यादयो विरुध्येरन्;सर्वोपाध्युपहितस्वरूपस्य ब्रह्मणो दुःखित्वाद्यनर्थोपलब्धेर्हितरूपप्रपंचाकरणमहितरूपप्रपंचकरणमित्यादयोऽनेके दोषा ब्रह्मण्येव प्रसज्येरन्। तृतीयमतमपि नास्माभिरंगीकृतम्; यतस्तद्वादिनां भवतां मतेऽपि कृत्स्नप्रपंचस्य ब्रह्मणश्च स्वरूपस्वभावगुणादिभिः परस्परवैलक्षण्यस्य तयोर्नित्यत्वस्य च प्रतिपादकश्रुत्यादयो विरुध्येरन्; किंच निर्विशेषे ह्येकस्मिन्वस्तुनि सति कृत्स्नप्रपंचस्य ब्रह्मतादात्म्यभावोपदेशकश्रुतिगणो वैयर्थ्यं चापद्येत, कृत्स्नप्रपंचगतदोषाणां ब्रह्मण्येव प्रसंगश्चापि स्यादेव। तथात्वे सति ब्रह्मणःसकलदोषवर्जितत्वसमस्तकल्याणगुणगणाकर-

रत्वादिप्रतिपादकश्रुत्यादिविरोधश्चापद्येत; विधिनिषेधशास्त्रव्यर्थता च स्यात्। किंच एतस्मिन्मतत्रिके दूषणोक्तिविशेषप्रपंचस्तन्निरासविशेषप्रपंचश्च श्रीरामानुजाचार्यकृतश्रीभाष्यवेदार्थसंग्रहादिग्रंथेभ्योऽवगंतव्यः। किंच अस्मत्सिद्धांते संशयं कुर्वता त्वया त्वन्मतमेवांतर्गतं वाचि समायातीति न्यायेन प्रकाशितं, तत्र सजातीयविजातीयस्वगतभेदशून्यवस्त्वैक्यं प्रतिपादयता प्रपंचब्रह्मणोः पारमार्थिकभेदोपपादकश्रुतीनामौपाधिकत्वं च वदता त्वयैव स्वसिद्धांते आसुरमतत्वमसत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमिति भगवदुक्तेःप्रकाशितं, तयोः स्वाभाविकभेदप्रतिपादकश्रुत्यादिप्रकोपश्चांगीकृत इत्यलं प्रच्छन्नबौद्धानां युष्माकं मते दूषणपल्लवनेन। एवं दोषबाहुल्याद्विरोधबाहुल्याच्चैतानि त्रीणि मतानि परिहाय सर्वथा निर्दोषं सकलमतराजराजं विशिष्टाद्वैतमतमेवाश्रितानामस्माकं न क्वापि विरोधाद्यापत्तिः। अथ स्वमतं निरूपयितुमादौ तदुपपादिकानां भेदाभेदवादिनीनां श्रुतीनामाशयःप्रतिपाद्यते। तत्र तावद् भेदवादिन्यो हि श्रुतयश्चिदचिदात्मकप्रपंचस्य परस्य ब्रह्मणश्च स्वरूपस्वभावादीनां वैलक्षण्यमसंकरत्वमनादिसिद्धं पारमार्थिकं भेदं च वदंति; ब्रह्मणश्चिदचिदात्मकप्रपंचाद्व्यतिरिक्ततया दिव्याप्राकृतमूर्तिमत्तया निमित्तकारणतया सपार्षदतया च ब्रह्मपुरेऽवस्थितिमंतर्यामित्वक्तया सर्वावस्थावस्थितचिदचिदात्मकप्रपंचानुप्रवेशं च वदंति; कथमिव यथा वह्न्यादयो देवा मूर्तिमंतः सानुचराः संतः स्वस्वलोके स्थित्वा स्वस्वांशेन प्रपंचेऽनुप्रविष्टास्तथा तस्याप्युभयथाऽवस्थानं वदंति। एवमेव बृहदारण्योपनिषदि तृतीयाध्यायस्य सप्तमेऽन्तर्यामिब्राह्मणे 'यः पृथिव्यां तिष्ठन् पृथिव्या अंतर' इत्यारभ्यैतद्ब्राह्मणसमाप्तिपर्यंतं प्रपंचेंऽतर्यामितया परब्रह्मानुस्यूतं दिव्याप्राकृतमूर्तिमत्तया च ततः पृथक् स्थितं चेति वर्णितमित्यवगम्यते। अन्यथा–

'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतांतरात्मा रूपं रूपं प्रतिरूपो बहिश्च॥
वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतांतरात्मा रूपं रूपं प्रतिरूपो बभूव॥
सूर्यो यथा लोकसर्वस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतांतरात्मा न लिप्यते लोकदुःखेन बाह्यः॥
एको वशी सर्वभूतांतरात्मा एकं रूपं बहुधा यः करोति'।

इति कठवल्ल्युपनिषदि ब्रह्मणः प्रपंचानुप्रवेशे ततो व्यतिरेकभावे च मूर्तिमतां स्वस्वलोकस्थानां वह्न्यादिदेवानां स्वस्वांशेन प्रपंचानुप्रवेशरूपदृष्टांतासंगतिः स्यात्।

एवमन्यत्राप्युपनिपत्सु तस्योभयथाऽवस्थानं निरूपितम्। अभेदवादिन्यः श्रुतयस्तु स्वरूपस्वभावादिभिर्विलक्षणतयावस्थितस्य कृत्स्नस्य चिदचिदात्मकप्रपंचस्य ब्रह्म-तादात्म्यभावं श्रुत्यंतरप्रसिद्धात्प्रपंचब्रह्मणोः शरीरशरीरिभावस्य स्वाभाविकत्वाना-दिसिद्धत्वप्रतिपादनादेवावगमयंति नतु निर्विशेषं चिन्मात्रस्वरूपं ब्रह्मैव स्वयं कृत्स्न-प्रपंचरूपतया जातमिति प्रतिपादयति। अन्यथा 'सत्यं ज्ञानमनंतं ब्रह्म' 'ज्ञाज्ञौ द्वा-वजावीशानीशौ' 'नित्यो नित्यानामि'त्यादिश्रुत्युपदिष्टमविनाशित्वाजत्वनित्यत्वादिकं ब्रह्मणो विरुध्येत। 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्य' इति न्यायेन तदनुग्रहीताभिः श्रुति-भिश्चोपदिष्टमजत्वं नित्यत्वं च जीवस्य विरुध्येत; वैषम्यनैर्घृण्येन सापेक्षत्वात्तथाहि दर्शयति न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चेति न्यायाभ्यां प्रतिपादितो यो जीवानादित्वाभ्युपगमेन तत्कर्मनिमित्ततया वैषम्यनैर्घृण्यपरिहारः सोऽपि विरुध्येत; कार्याकार्यधर्माधर्मबंधमोक्षस्वर्गनरकादिबोधकानि शास्त्राण्यपि वैयर्थ्यमापद्येरन्; 'अजामेकां लोहितशुक्लकृष्णां' 'गौरनाद्यंतवती सा जनित्री भूतभा-विनीति' 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी'त्यादिश्रुतिस्मृतिभिः' प्रतिपादिता प्रकृतेरजत्वानादितापि विरुध्येत; तस्मादभेदश्रुतीनामुक्तार्थप्रतिपादने एव तात्पर्यम-वसीयते। एवमेतयोरुभयोः श्रुतिसमूहयोरविरुद्धोऽयं मार्गः। अथ विशिष्टाद्वैतशब्दसमा-सोक्तिपूर्वं भेदोपपादकश्रुतिसंगृहीतं तदर्थं प्रपंचयति-सर्वकारणकारणस्याचिंत्यविचित्रा-नंतशक्तेर्नित्यविशुद्धनिरतिशयानंदमयस्य परममंगलास्पदस्य कृत्स्नचिदचिदात्मकप्रपं-चात्स्वरूपस्वभावगुणविभूतिभिरतिविलक्षणतया श्रुतिस्मृतिशतवचनैः प्रतिपादितस्य दिव्याप्राकृतभोगोपकरणवति दिव्ये ब्रह्मपुरे दिव्याप्राकृतकरचरणाद्यवयववद्भिःस्वपा-र्षदादिगणैरनवरतमुपास्यमानचरणपंकजस्य दिव्याप्राकृतान्योन्यसंस्पर्द्धिरूपानुरूपकर-चरणाद्यवयवविशिष्टमनोहरमूर्त्तिमतो निमित्तकारणस्य परस्य ब्रह्मणः श्रीवासुदेवस्यां-डसंजिहीर्षावशाद्यदा प्रलयस्तदाऽतिसूक्ष्मदशापन्ननामरूपविभागानर्हकारणावस्थशरी-रभूतसकलचिदचिद्वस्तुविशिष्टं शक्तिशक्तिमतोरभेदावगमात्परब्रह्मशब्दवाच्यांतर्यामिश-क्तिरूपं कारणावस्थं शरीरिभूतं परं ब्रह्माद्यविशिष्टशब्देनोच्यते;यदा च तस्यैवांडसिसृक्षा-वशात्सर्गस्तदाऽतिस्थूलदशापन्ननामरूपविभागार्हकार्यावस्थशरीरभूतसकलचिदचिद्व-स्तुविशिष्टमुक्तविधांतर्यामिशक्तिरूपं कार्यावस्थं शरीरिभूतं परं ब्रह्म द्वितीयविशिष्टश-ब्देनोच्यते। एवं कारणकार्यावस्थावस्थितयोः कृतैकशेषविशिष्टशब्दवाच्ययोरवस्थाद्व-यवत्स्वरूपविशेषणसंबंधप्रयुक्ततत्स्वरूपवैलक्षण्येन भिन्नयोरपि परब्रह्मणोरद्वैतमभेदो वि-शिष्टाद्वैतमिति षष्ठीतत्पुरुषसमासाश्रयणं सर्वथाऽनवद्यम्।एवंभूताभेदो दृष्टांतेन साध्य-ते-यथा लोके दंडी कुंडली कमंडलुवानयं देवदत्त इत्येवंजातीयके ह्युदाहरणे एकस्य

देवदत्तस्यैव दंडित्वकुंडलित्वकमंडलुवत्वरूपविशेषणसंबंधप्रयुक्तेन तत्स्वरूपवैलक्षण्येनैव भेदोऽवगम्यते नतु विशेष्ये तत्स्वरूपे भेदस्तथैकस्यापि परस्य ब्रह्मणः कारणकार्यरूपावस्थाद्वयवत्त्वरूपविशेषणसंबंधप्रयुक्तेन तत्स्वरूपवैलक्षण्येनैव भेदोऽवगम्यते नतु विशेष्ये तत्स्वरूपे भेदः। एवमेव चिदचितोरपि कारणकार्यरूपावस्थाद्वयवत्त्वरूपविशेषणसंबंधप्रयुक्तेन तत्तत्स्वरूपवैलक्षण्येनैव भेदोऽवगम्यते नतु विशेष्ययोस्तत्तत्स्वरूपयोर्भेद इत्यपि प्रसंगाद्बोध्यम्। एतावता कारणकार्योभयावस्थायां चेतनाचेतनानां परस्य ब्रह्मणश्च सद्भावेन तेषां सर्वेषामनादित्वं नित्यत्वं च चेतनाचेतनानां सदा परब्रह्मनियम्यत्वं परब्रह्मणश्च सदा तदुभयनियामकत्वमुपपन्नमिति फलितोऽर्थः। नन्वेवं चिदचिद्ब्रह्मणां कार्यकारणोभयावस्थायां संघातभावांगीकारात्स्वभावादिसंकरोऽप्युपपद्येतेति चेत्तत्रोत्तरयामः—यथा स्वरूपतः पृथगवस्थितानां कारणभूतानां शुक्लकृष्णरक्ततंतूनां संघाततया निर्मितस्य चित्रपटस्य शौक्ल्यादिगुणसंबंधस्तत्तत्तंतुप्रदेशे एव भवतीति न पटरूपकार्यावस्थायामपि सर्वत्र वर्णसंकरस्तथा कारणावस्थायां स्वरूपतः पृथगवस्थितानां चिदचिद्ब्रह्मणां संघाततया प्रतीयमानजगद्रूपकार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियंतृत्वाद्यसंकरः। नन्वेवं चेतनाचेतनब्रह्मणां स्वभावाद्यसंकरत्वे सिद्धेऽपि यथा लोके महापातकिजनसंसर्गिणस्तत्संसर्गप्रयुक्तं पातकित्वमापतति यथा चोपरसंसर्गिणः काष्ठस्य तत्संसर्गप्रयुक्तलवणत्वं दृश्यते तथा शरीरभूतचेतनाचेतनसंसर्गिणो ब्रह्मणस्तत्तत्संसर्गप्रयुक्तपरिणामित्वापुरुषार्थाश्रयत्वे प्रसज्येयातामिति चेत्तत्रोत्तरयामः—यथा शरीरसंसर्गिणोऽपि जीवस्य बालत्वयुवत्वस्थविरत्वादयो धर्माः शरीरे एव पर्यवस्यंति सुखदुःखादिभोक्तृत्वापरिणामित्वादयो धर्मा जीवात्मन्येव पर्यवस्यंति तथा सर्वावस्थावस्थितशरीरभूतचेतनाचेतनसंसर्गेऽपि परिणामित्वापुरुषार्थाश्रयत्वे शरीरभूतचेतनाचेतनेष्वेव पर्यवस्यतः। निरस्तसमस्तदोषगंधत्वसत्यसंकल्पत्वनिरतिशयज्ञानानंदत्वाद्यसंख्योदारगुणगणा ब्रह्मण्येव पर्यवस्यंति नतु तद्गताः परिणामित्वादयः। अत्र चेतनाचेतनब्रह्मणां कार्यकारणभावांगीकारे इयान्विशेषोऽवगंतव्यः-तथाहि कार्यत्वं हि द्रव्यस्यैकस्यावस्थांतरप्राप्तिः। तत्रावस्थाद्वयेऽप्यचेतनवर्गस्य स्वरूपान्यथाभावलक्षणो विकारः चेतनवर्गस्य तु ज्ञानसंकोचविकाशलक्षणोऽन्यथा भावो विकारः ब्रह्मणोऽपि स्थूलसूक्ष्मोभयावस्थावस्थितानां चेतनाचेतनानां पृथक् पृथक् फलप्रदानाय तत्तदवस्थतत्तद्विशिष्टतारूपविकारो भवति; विकारो ह्यवस्थांतरापत्तिरूपः स च शरीरभूतेषु चेतनाचेतनेषु तत्तच्छरीरिणि ब्रह्मणि च समानः, अतएवैकस्यावस्थांतरापत्तिरूपविकारापेक्षया 'ये-

नाश्रुतं श्रुतं भवती'त्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टांतो [1]निदर्शितो नतु मृद्घटादिवत्प्रपंचब्रह्मणोरत्यंताभेदप्रतिपादनापेक्षया। किंच 'प्रजापतिः प्रजा असृजत्' 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, यतो वा इमानि भूतानि जायंत' इत्यादयः श्रुतयश्चिदचिदात्मकप्रपंचस्योत्पत्तिप्रलयादिवादिन्यश्चेतनवर्गस्य ज्ञानविकाशसंकोचकरौ विचित्रशरीरसंयोगवियोगौ बोधयंति; अचेतनवर्गस्य तु स्वरूपान्यथाभावं बोधयंति। चेतनवर्गस्योत्पत्तिप्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च 'न जायते म्रियते' इत्यादयो 'नित्यो नित्यानामि'त्यादयश्च श्रुतयः स्वरूपान्यथात्वाभावं ज्ञानसंकोचविकाशरूपानिष्टविकारवत्त्वेऽपि तदनादित्वं च बोधयंति;'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यः पृथिव्यां तिष्ठन् पृथिव्या अंतरो यं पृथिवी न वेद' इत्यादयः'स वा एष महानज आत्माजरोऽमरोऽमृतो ब्रह्म नित्यो नित्यानामि'त्याद्याश्च श्रुतयः परस्य ब्रह्मणश्चेतनाचेतनेभ्यः स्वरूपस्वभावादिवैलक्षण्यं बोधयंति। तद्यथा श्रुतिभिर्भोग्यभूताचेतनवर्गभोक्तृभूतचेतनवर्गतत्तन्नियंतृपरमात्मनो विलक्षणस्वभावान्प्रतिपाद्य भोग्यभूताचेतनवर्गगतमुत्पत्त्यादिकं भोक्तृभूतचेतनवर्गे प्रतिषिध्य तस्य नित्यत्वादिकं च प्रतिपाद्य भोग्यभूताचेतनवर्गगतमुत्पत्त्यादिकं भोक्तृभूतचेतनवर्गगतं च सांसारिकत्रिविधतापाद्याश्रयत्वं तत्तन्नियंतरि ब्रह्मणि प्रतिषिध्य तस्य नित्यत्वं निरवद्यत्वं सर्वदा सर्वज्ञत्वं सत्यसंकल्पत्वं करणाधिपाधिपत्वं सर्वपतित्वं सर्वात्मत्वं च प्रतिपाद्य सर्वावस्थावस्थितसकलचेतनशरीरकत्वं प्रतिपादितम्। एवं सर्वावस्थावस्थितचिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणं सृष्ट्यनंतरं नानात्वावधारणं च नामरूपविभागाभावभावाभ्यामुपपद्यते। तथाहि 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते' 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं बहु स्यां प्रजायेये'त्यादयः श्रुतयो हि चिदचिद्विशिष्टस्य ब्रह्मणो नामरूपविभागानर्हसूक्ष्मदशापत्तिविवक्षयैकत्वं नामरूपविभागार्हस्थूलदशापत्तिविवक्षया नानात्वं च वदंतीति सकलवेदांतवेद्यतया निर्विवादत्वात्सर्वथा निरवद्यं विशिष्टाद्वैताख्यमतमेव न्यायविद्भिः स्वीकर्तव्यम्।

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

सर्वथा जीवब्रह्मणोरभेद एव अभेदश्रुतिभिरिति चेन्न, अनुपपत्तेः। कथमनुपपत्तिस्तत्राह—अश्मादिवत्–अश्मकाष्ठलोष्ठतृणादेरचेतनस्य चेतनवर्गादिव जीववृंदस्याप्यज्ञत्वकर्मवश्यत्वादिदोषकलापेन सर्वज्ञत्वसत्यसंकल्पत्वाद्यसंख्यगुणगणविशिष्टा-

[1] यथा सोम्यैकेन मृत्पिंडेन विज्ञातेन सर्वं मृन्मयं विज्ञातं स्यादित्यादिना।

न्नारायणादत्यंतविजातीयत्वश्रवणात्तदनुपपत्तिस्तयोरेकत्वानुपपत्तिः। तस्मात्परं ब्रह्म जीवादर्थान्तरभूतमेव। यदि चेतनजात्या समानस्यापि जीवस्य लक्षणगुणैर्वैषम्यात्परब्रह्मत्वानुपपत्तिः तर्हि किमुताचेतनस्य जडत्वादिधर्मविलक्षणस्येति तात्पर्यं बोध्यम्। सर्वथा श्रुतिस्मृतिन्यायैरुक्तेन विशिष्टकार्यत्वेन स्वानन्यरूपादपि चेतनाचेतनप्रपंचात् स्वरूपस्वभावगुणविभूतिभिरतिविलक्षण एव सर्वज्ञः परमात्मा।

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' 'एको ह वै नारायण आसीदि'त्यादिषु नारायण एक एव जगतः कारणमवगम्यते। तस्यैकस्य नानाविधप्रपंचकारणत्वमुचितं न वेति संदेहे तन्नोचितमिति पूर्वपक्षं ब्रूमः। तदसंभवात्; कार्यमेतदाकाशवाय्वग्निसलिलरूपं विचित्रं कथं कारणवैचित्र्यमंतरेण संभवति? दृश्यते हि रथादिकार्येषु बहुकारकोपसंहारस्तस्मादेकस्य कारणत्वं न संभवतीति चेत् नैतदुचितम्। सूक्ष्मचिदचिद्वस्तुशरीरिणः स्वतः सिद्धासंख्यैश्वर्ययुतस्यैकस्यापि संकुचितांतर्यामिशक्तिरूपब्रह्मणो विकसितांतर्यामिशक्तिमिश्रस्थूलचेतनाचेतनप्रपंचरूपकार्येण परिणामः संभवत्येव। यथा घृतमिश्रस्य क्षीरस्यैकस्यैव दधिभावेन तद्वत्स बोध्यस्तस्मात् ब्रह्मैककारणकं जगत्कार्यं भवति। यदुक्तं कार्यवैचित्र्यं कारणवैचित्र्यापेक्षमिति तदयुक्तमेव। चेतनादेकस्मात्पुरुषात्केशनखादिविचित्रकार्यनिष्पत्तिदर्शनात्; अतो विचित्रजगत्कार्यनिर्वाहे ब्रह्म न कारणांतरापेक्षमिति शक्तिमतां सर्वं संभाव्यत एवेत्याह—

## देवादिवदपि लोके ॥ २५ ॥

लोके स्वे स्वे स्थाने स्थिता ब्रह्मादयो देवाः आदिशब्दग्राह्याः कर्दमकश्यपाद्या ऋषयश्च तेषां शास्त्रावगतशक्तीनां यथा स्वापेक्षितवस्तुसर्गकर्तृत्वं तथा स्वलोके स्थितस्य शास्त्रावगतसामर्थ्यस्य नारायणस्य स्वेच्छया प्रकृतिपुरुषादिस्थावरजंगमांतसकलप्रपंचकर्तृत्वमवगम्यते 'स इमांल्लोकानसृजत्' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'अखिलकारकशक्तिधर' इत्यादिषु नारायणस्यासंख्यशक्तिमत्त्वं श्रूयते तस्य किमसाध्यम्?।

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

अत्रैकस्य ब्रह्मणो यो जगदाकारेण परिणामोऽभिहितः स किं एकस्य मृत्पिंडस्य

घटशरावादिपरिणामवद्वा सूक्ष्मचिदचिद्वस्तुशरीरिणोऽन्तर्यामिरूपस्य तस्य स्थूलभावापन्नचिदचिद्वस्तुभूतशरीररूपेणेति संदेहः। पूर्वपक्षन्याये तु मृत्पिंडस्य घटशरावादिपरिणामवत्तस्य जगदाकारेण परिणामो युज्यते। कथमिति चेत्तत्रोच्यते--वाचारंभणं[1] विकारो नामधेयं मृत्तिकेत्येव सत्यमि'ति श्रुत्या प्रतिपाद्यते, विकारो नामधेयं च वाचारंभणं अभिलापार्थक्रियारूपव्यवहारस्य निष्पादकं भवति मृद्द्रव्यस्यैव घटाद्यवस्था, घटादिनामधेयं च अर्थक्रियाभिलापरूपव्यवहारनिष्पत्तये भवतीति यावत्। वस्तुतो घटादिकमपि मृत्तिकेत्येव सत्यं प्रामाणिकं मृद्व्यतिरेकेण घटभावादर्शनात्; अथवा वाचारंभणं विकारः घटो वाचारंभणं घटोऽयमिति वाचारंभविषयमात्रं मृद्द्रव्यमेव व्यवहारसिद्ध्यर्थं जायमानं अवस्थांतरं नतु मृदो द्रव्यांतरं किंतु मृत्तिकेत्येव नामधेयं सत्यमस्ति, घटादिकं[2] मृत्तिकेति कृत्वैव तत्रै सर्वे मृत्पिंडादिनामधेयं सत्यं सति प्रामाणिकेऽर्थे साधु सत्यं नतु द्रव्यांतरमिति सत्यशब्दार्थेन कृत्वा यतो घटो मृदेवेति तदर्थः[3]। अतो मृद्रूपात्कारणाद्यथा घटादिकार्यमनन्यदेव तथा मूर्तिमतः कारणात् ब्रह्मणश्चेतनाचेतनात्मकं जगदनन्यत्। दृष्टांतांतरं च क्षीरस्य दधिरूपेणेव[4] ब्रह्मणो जगद्रूपेण परिणाम इति वाच्ये सति जगद्रूपेण परिणतस्य कृत्स्नस्यापि ब्रह्मणः कार्यभावप्रसक्तिः कार्यत्वप्रसंग इत्यर्थः। अस्मिन्पक्षे न कारणं ब्रह्मावशिष्टं भवेत् अथवा प्रपंचाकारेणपत्परिणतात्तस्मादवशिष्टस्य मूर्तिमतः कारणस्य ब्रह्मण एवं परिणामे वाच्ये सति अवशिष्टस्य तस्य निरवयवत्वशब्दकोपो वा 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' 'सदेव सौम्येदमग्र आसीत्, इदं वा अग्रे नैव किंचनासीत्, 'आत्मा वा इदमेवाग्र आसीदि'त्यादीनां निराकारत्वबोधकानां शब्दानां कोपो वा बाधश्च भवेत् इति महाकलहे प्राप्ते सूत्रांतरेण सूक्ष्मचिदचिद्वस्तुशरीरिणोऽन्तर्यामिशक्तिरूपस्य ब्रह्मणः स्थूलचेतनाचेतनभूतशरीररूपेण परिणामो युज्यते इति सिद्धांतं ब्रूमः।

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्दः पक्षांतरव्यावर्त्तकः। सूक्ष्मचिदचिद्वस्तुशरीरिणो निमित्तकारणनारायणसंकुचितांतर्यामिरूपस्य ब्रह्मणः स्वशरीरभूतेन विकसितांतर्यामिविशिष्टस्य स्थूल-

---

१ वाचारंभणमिति श्रुत्यर्थस्याद्यपक्षे घटाद्यवस्थारूपो विकारो घटादिनामधेयं च वाचारंभणं मृत्तिकेत्येव सत्यम्; अथवेति द्वितीयपक्षे विकारो वाचारंभणं मृत्तिकेत्येव नामधेयं सत्यमिति विशेषः। २ घटादिके। ३ वाचारंभणमिति श्रुत्यर्थः। ४ क्षीरस्य दधिरूपेणेव।

चिदचिद्वस्तुरूपप्रपंचाकारेण परिणामो युक्त एव; तच्छ्रुतेः 'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नं अन्नात्पुरुषः स वा एष पुरुषोऽन्नरसमय' इति, सोऽकामयत बहु स्यां तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते 'इति, यस्यात्मा शरीरं यस्य प्रकृतिः शरीरं यस्य पृथिवी शरीरमि'त्यादिषु सूक्ष्मचिदचिद्वस्तुशरीरकस्य कारणस्य नारायणांतर्यामिरूपस्य ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरभूतेन प्रपंचाकारेण परिणाम-श्रवणात् मृदो घटरूपेणेव तस्य परिणामे 'अजामेकां लोहितशुक्लकृष्णां' अजो ह्येको जुषमाणोऽनुशेते' 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' 'तमात्मस्थं' 'न घटत उद्भवः प्रकृतिपुरुषयोरजयोः' 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी'त्यादिश्रुतिस्मृत्युक्ताजत्वानादित्वादितत्त्वत्रय-धर्मस्य विरोधापत्तेः विशिष्टेपरिणाम एव समुचितः। एवं कृत्स्नप्रसक्त्यभावरूपं परिणामविवेकमुक्त्वा ब्रह्मणो निरवयवत्वशङ्कोपनिवारणे हेतुमाह-शब्दमूलत्वात् 'स इमांल्लोकानसृजत्' 'एको ह वै नारायण आसीत्' 'आत्मैवेदमग्र आसीत्पुरुषविधः' 'तमाहुरग्र्यं पुरुषं पुराणम्' पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' 'चरणं पवित्रं विततं पुराणम्' 'हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण' इति, 'नमाम ते देव पदारविंदं मागीति यत्ते मुखपद्मनीडैः' 'स वै किलायं पुरुषः पुरातनो य एक आसीदि'त्यादिश्रुतिस्मृतिशब्दा एव मूलं प्रमाणं यस्य ब्रह्मनिरवयवत्वनिषे-धस्य तस्य भावस्तत्त्वं तस्मात् शङ्कोपो न भवति। उभयपक्षेऽप्ययमभिप्रायः-प्रपंचा-द्व्यतिरिक्तस्य निमित्तभूतस्य दिव्यमनोहरमूर्तेर्नारायणस्य संकुचितांतर्यामिशक्ति-विशिष्टं यत् सूक्ष्मचेतनाचेतनवृंदं सूक्ष्मत्वाददृश्यमंतर्यामिशक्तिविशिष्टत्वात्तच्छरीर-भूतं च भवतिः तस्य विकसितांतर्यामिशक्तिविशिष्टस्थूलचिदचिद्वस्तुरूपेण परिणामे वाच्ये सति ब्रह्मणः कृत्स्नप्रसक्त्यभावः 'आत्मैवेदमग्र आसीत्पुरुषविध' इत्यादि-श्रुतिसमानार्थवाचिकानां 'सदेव सौम्येदमग्र आसीदि'त्यादिकारणवादिनीनां श्रुतीनां पुरुषाकारब्रह्मप्रतिपादकत्वात् कोपाभावश्च। ब्रह्मणोऽद्वितीयत्वोक्तिस्तु सूक्ष्मभावाप-न्नयोश्चेतनाचेतनयोरदर्शनपरा, अपाणिपादादिश्रुत्युक्तिरप्यप्राकृतदिव्यावयवत्वबोध-नपरा प्राकृतावयवत्वनिषेधपरा च। एवं ब्रह्मणः कारणत्वं कार्यत्वं निःशंकतया बोध्यमिति। एवंभूतस्य परब्रह्मणो दृष्टांतेन सर्वविलक्षणत्वमाह—

१ सूक्ष्मचिदचिच्छरीरविशिष्टस्यांतर्यामिणो ब्रह्मणः स्थूलचिदचिच्छरीरभूतप्रपंचाकारेण परिणामः।

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

यथा जीवात्मन्यचिद्धर्मविरोधिधर्मयोगोऽप्यचिद्विजातीयत्वादेव भवति; यथा च विचित्रा अग्निजलादयोऽप्यचिद्विशेषा अन्योन्यविलक्षणशक्तयो दृश्यंते एव तथा सर्वविलक्षणं ब्रह्मापि शब्दैकप्रमाणकं विचित्रानंतशक्तिकमप्राकृतदिव्यावयवकं च दृश्यते इति सर्वमविरुद्धम् ।

## स्वपक्षदोषाच्च ॥ २९ ॥

कृत्स्नप्रसक्त्यादिदोषो निरवयवे अचित्सजातीये प्रधानादावेव वाच्यः न ब्रह्मणि शास्त्रप्रमाणके; अन्यथा स्वपक्षे ब्रह्मणो निर्विकारित्वादिधर्मपक्षे दोषात् बाधापत्तेः। कृत्स्नप्रसक्त्यादिदोषस्तु प्रधानादावेव निर्णीयते । सर्वशक्तिमत्वेन सर्वोपपत्तिमाह—

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादौ तस्य सर्वशक्तिमत्त्वदर्शनात् सर्वापि शक्तिरुपेता ब्रह्माश्रितेति विज्ञायते; अतः सर्वशक्तिमतस्तस्य किं न संभवति ?

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

यद्यप्येकमेव ब्रह्म समस्तेतरविलक्षणं सर्वशक्तिमत् तथापि 'न तस्य कार्यंकरणं च विद्यते' इतिश्रुतौ विकरणत्वात्तस्य ब्रह्मणः करणरहितत्वात् न कार्यारंभः संभवतीति चेत् तदुक्तं–तस्योत्तरं श्रुतेस्तु शब्दमूलत्वात् विचित्राश्च हीत्यत्रोक्तम् । पुनराशंक्य समाधातुमधिकरणांतमाह—

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

यद्यपि शास्त्रावगतसर्वशक्तेर्मूर्तिमतो ब्रह्मणः सर्वेषु कार्येषु कारणसामर्थ्यमस्ति इति निर्णीतं तथापि सर्वप्रवृत्तेः प्रयोजनवत्त्वात् प्रयोजनसहितत्वादवाप्तसकलकामस्य नारायणस्य जगत्सृष्ट्यादिव्यापारः संभवति नवेति संदेहः । कथं संदिह्यते तत्राह संभवतीति पक्षे 'आनंदो ब्रह्म' 'अन्योंऽतर आत्मानंदमयः' 'नित्यतृप्तो निराख्यात' इत्यादिभिः निरतिशयानंदस्वरूपो नित्यतृप्तो हि नारायणः श्रूयते । कथमसौ सृष्ट्यादिव्यापारेषु प्रयोजननिरपेक्षः प्रवर्त्तेत ? यदि सप्रयोजनास्ये[1] प्रवृत्तिः तदा तस्य नित्यतृप्तताहानिः स्यात्, अन्यथा जनादिवदनुचितकारिता स्यादतो न संभवतीति पूर्वपक्षे प्राप्ते ब्रूमः—

---

१ नारायणस्य ।

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

लीलाकैवल्यं नित्यतृप्तस्य नारायणस्य दयालुत्वान्निष्प्रयोजनापि जगत्सृष्ट्यादिप्रवृत्तिः स्वप्रसन्नतार्थं सत्कर्मकर्तॄणां ब्रह्मादिक्षेत्रज्ञानां चतुर्वर्गप्राप्तये लीलया लीलामात्रेणैव केवलं संभवति तत्र निदर्शनं लोकवत्; यथा लोके निःस्पृहप्रियव्रतादेः सामंतस्य राज्ञः प्रयोजनमंतरेणापि स्वसेवकसुखार्थं केवललीलया कंदुकताडनादिषु प्रवृत्तिः तथा नारायणस्यावाप्तसकलकामस्यापि लीलया सृष्ट्यादिप्रवृत्तेरविरोधः। नन्वेवं लीलार्थमपि जगत्सर्गे सति तत्स्थजीवदुःसहक्लेशगर्भत्वेन निर्दयत्वप्रसक्तेः परमदयालोर्नारायणस्य जगत्सर्गो न संभवतीति चेत्तत्राह—

## वैषम्यनैर्घृण्येन सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥

नारायणकृतायां सृष्टौ क्षेत्रज्ञानां कमनीयाकमनीयदेहभोगस्थानादिप्रदाने वैषम्यं न्यूनाधिकत्वं जीवदुःखप्रदप्रपंचकृतौ नैर्घृण्यं निर्दयत्वं च तस्य ते उभे न स्तः, कुतः, विषमसृष्टौ जीवपुण्यपापरूपकर्मणां सापेक्षत्वात् जीवानां प्राचीनकर्मालोच्य हरिः तत्तत्कर्मानुगुणं न्यूनाधिकं जगत्सर्गं करोति। एवं तत्तत्कर्मैव वैषम्यादिहेतुरित्यर्थः। तथाहि दर्शयति श्रुतिः 'साधुकारी साधुर्भवति पापकारी पापो भवति, पुण्यः पुण्येन कर्मणा भवति पापः पापेन कर्मणा भवती'ति।

## न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥ ३५ ॥

'सदेव सौम्येदमग्र आसीत्' 'एकमेवाद्वितीयमि'त्यादिश्रुत्युक्ते सृष्टेः पूर्वकाले अवधारणार्थैवशब्दावगतादविभागात् क्षेत्रज्ञाविभागश्रवणात् क्षेत्रज्ञास्तत्तत्कर्माणि च न भवेयुरिति चेन्न, कुतः, क्षेत्रज्ञानां तत्तत्कर्मप्रवाहाणां चानादित्वादनादिकालसिद्धत्वात् उपपद्यते च अतिसूक्ष्मभावापन्नेषु नित्यत्वाजत्वादिधर्मविशिष्टेषु क्षेत्रज्ञेषु परस्परसूक्ष्मविभागश्च विद्यते एवेत्यर्थः। तर्हि कथमविभागोक्तिस्तत्राह-तदानीं नामरूपविभागाभावाच्छुतावविभाग उक्तः, इतरथा प्रलयानंतरसृष्टिकाले त्वकृतानां शुभाशुभकर्मणामभ्यागमस्य प्रलयात्पूर्वसृष्टिकाले कृतानां तेषां विप्रनाशस्य च प्राप्तिः स्यात्, अतः श्रुतिस्मृतिषु क्षेत्रज्ञानामनादित्वं नित्याजादिविशेषणविशिष्टत्वं च उपलभ्यते। चोऽवधारणे। तथाहि 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते' 'न जायते म्रियते वा विपश्चित्' 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'सूर्याचंद्रमसौ धाता

यथापूर्वमकल्पयत्' 'नित्यो नित्यानां' 'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः' 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इत्यादिषु दृश्यते क्षेत्रज्ञानामनादित्वाजत्वप्रभृतिधर्मकलापस्तस्मात्पूर्वोक्तेऽप्यविभागे विभागो निर्णीत एव।

## सर्वधर्मोपपत्तेश्च ॥ ३६ ॥

किं बहुना, प्रधानपरमाणुकर्मकालादीनां ये कारणत्वोपपादका धर्मास्तेष्वनुपपन्नास्ते सर्वे सर्वप्रकाशके सर्वैश्वर्यसंपन्ने दिव्याकारे परब्रह्मण्येवोपपद्यंते, अतः सर्वशक्तिमत्सकलेतरविसजातीयत्वेनाचिंत्यशक्तिमत्परं ब्रह्मैव जगत्सृष्ट्यादिकारणं श्रुतिशतवचनैः सिद्धम्[3]।

इति श्रीशुद्धैकान्तधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने द्वितीयाध्यायस्य प्रथमपादः ॥ १ ॥

---

# द्वितीयाध्याये द्वितीयपादः ।

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥ प्रवृत्तेश्च ॥ २ ॥

आद्यपादे सांख्यप्रभृतितर्कविरोधं संदिह्य स्वसिद्धांतप्रतिपादनं कृतम्; पुनरस्मिन् द्वितीये पादे वैदिकतर्कावलंबनेन सांख्यप्रभृतिपक्षांतरेषु दूषणं ददाति। तत्र तावत् सांख्यशास्त्रनिष्ठानां प्रधानकारणवाद उचितो नवेति संशयः। संशयबीजं सर्वत्र प्रसिद्धमूहनीयम्। प्रधानकारणवाद एवोचित इति पूर्वपक्षी मन्यते। प्रधानं हि रजःसत्वतमोरूपं तदेव जगतः कारणं भवितुमर्हति, सर्वत्र तत्कार्येषु सुखदुःखमोहान्वयदर्शनात्। तथाहि तत्कार्यभूताः पटादयोऽप्युपलब्धाः प्रावरणादिप्रयोजनतया नरस्य सुखप्रदा भवंति त एवेतरजनापहृता दुःखप्रदा भवंति स्वप्रयोजनसंपादकत्वाभावात्; ते वांछिता अनुपलब्धाश्च संतो मोहप्रदा भवंति तदेवं सुखाद्यन्वयात् त्रिगुणमेव प्रधानं जगत्कारणमिति प्राप्ते सिद्धांतं ब्रूमः—न प्रधानं जगत्कारणमचेतनत्वात्। तथाहि दार्वादेरचेतनस्य रथप्रासादादिनिर्माणज्ञानशून्यस्य रथप्रासादादिरचनानुपपत्तिर्दृश्यते; तद्रचनाप्रकारज्ञानाश्रितस्य जनस्य रथादिरचनाप्रवृत्तिर्दृश्यते, अतश्चेतनानधिष्ठितं प्रधानं जगत्कारणं भवितुं नार्हति। ततो न प्रधानकारणवादो युक्तः। सूत्रार्थविवेचनम्-अनुमीयते

---

१ प्रधानादिषु। २ अप्राप्ताः। ३ अधिकरणानि ६ सूत्राणि ३६। ४ तेषु सांख्यादिपक्षेषु। ५ तत्पूर्वोक्तं एवममुना प्रकारेण निष्पन्नम्।

इत्यनुमानं प्रधानं जगत्कारणं न, कुतः, जगद्रचनाज्ञानशून्यस्याचेतनस्य तस्य रचनानुपपत्तेः—प्रपंचविचित्ररचनाया अनुपपत्तेः, जगद्रचनाज्ञानकुशलस्य परमचेतनस्य नारायणस्य विचित्रजगद्रचनाप्रवृत्तिर्दृश्यते, अतो नारायण एव जगत्कारणं न प्रधानमिति। पुनः संदिह्य परिहारं करोति—

## पयोऽम्बुवच्चेत्तत्रापि ॥३॥

यथा पयो दध्यादिभावे यथांबु च हिमशकलनालिकेररसादिविचित्रभावे चेतनाश्रयानपेक्षं तद्वत्प्रधानमपीति चेत्तत्रापि तस्मिन् संदेहेऽप्युत्तरमेवमाम्नायते—'योऽप्सु तिष्ठन्नद्भ्योंऽतर' इत्यादिश्रुतेः चेतनेन परब्रह्मणांतर्यामिणाधिष्ठितयोः पयोंऽबुनोः स्वस्वकार्ये प्रवृत्तिरनुमीयते नतु तद्व्यतिरेकेण केवलं तयोस्तत्र प्रवृत्तिसामर्थ्यम्; अतश्चेतनानाधिष्ठिते प्रधाने जगत्कारणवादोऽनुपपन्नः। किंच—

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

यद्यचेतनस्य कार्यरचनाप्रवृत्तौ सर्वज्ञचेतनाधिष्ठानानपेक्षत्वं तर्हि तस्य कार्याकार्यकर्मसमयज्ञानशून्यत्वात् सर्वदा प्राप्तसृष्टिप्रसंगेन तद्व्यतिरेकस्य प्रलयस्यानवस्थितिः प्रसज्येत ततो नाचेतनं जगत्कारणम्।

## अन्यत्राभावाच्च न तृणादिवत्[5] ॥ ५ ॥

क्षीरायमाणधेनूपयुक्ततृणादिवदचेतनमपि प्रधानं कारणमिति वक्तुं न युक्तम्; अन्यत्र बलीवर्दाद्युपभुक्ते केनाप्यभुक्ते च तृणादौ क्षीररूपपरिणामाभावात् तत् क्षीरत्वमपि धेनुरूपचेतनाश्रितमेव।

## पुरुषाश्मवदिति चेत्तथापि ॥ ६ ॥

अत्र नेत्यनुवर्त्तते। अचेतनमपि प्रधानं पुरुषः जगत्सर्गे स्वसन्निधानात्प्रवर्त्तयति; यथा पंगुरंधं यथा वाऽयस्कांतमणिरयस्तथेति संबंधः। ततो न सर्वज्ञापेक्षेति चेत्तथापि न प्रधानस्य जगद्रचनाप्रवृत्तिः संभवति; सांख्यपक्षे पुरुषस्याविकृतत्वात्; अंधस्य मार्गे प्रवृत्तिहेतुभूतोपदेशात् पंगोः अयःसन्निहितदेशांतरसंयोगाच्चाश्मनोऽपि कश्चिद्विकारो भवत्येव तस्मादविकृतपुरुषसंनिधिः क्षीवप्रसंगः क्षीरसंतानोत्पत्तौ यथा तथा प्रधान-

---

१ दधिहिमशकलादिभावरूपे। २ अंतर्यामिपरब्रह्मव्यतिरेकेण। ३ पयोंऽबुनोः। ४ स्वस्वकार्ये। ५ यथा तृणादिकं धेन्वादिभुक्तं सत् स्वयमेव क्षीररूपेण परिणमते तथा प्रकृतिरप्यचेतनानन्यापेक्षा सती स्वयमेव जगदाकारेणेति चेन्नैवं शंक्यं कुतः। ६ धेनोः सकाशात्।

नप्रवृत्ता न हेतुः, अथवाऽयस्कांतलोहयोरचेतनयोः पंग्वंधयोश्चेतनयोश्चोभयेषां ताभ्यां चेतनाभ्यां सह दृष्टांतत्वासंभवात् प्रधानकारणवादो न घटते ।

## अंगित्वानुपपत्तेश्च ॥ ७ ॥

त्रिगुणानामुत्कर्षापकर्षकभावोंऽगांगिभावस्ततः प्रतिसर्गावस्थायां प्रपंचप्रवृत्तिः सांख्यैरुच्यते । तत्र साम्यावस्थापन्नानां त्रिगुणानां वैषम्याभावादचेतनप्रधानात्मकसाम्यावस्थाकृतांगांगिभावानुपपत्तिः, अतश्च जगदारंभो न युज्यते प्रधानकारणवादे ।

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ८ ॥

उक्तप्रकारादन्यप्रकारेण प्रधाने कारणतया अनुमीयमानेऽपि ज्ञातृत्वशक्तिवियोगात् रचनानुपपत्तिस्तदवस्थैव ।

## अभ्युपगमेऽप्यर्थाभावात् ॥ ९ ॥

प्रधानस्याभ्युपगमे अनुमानेन कारणत्वांगीकारेऽपि तेन सहार्थाभावात् ; यतो निरीश्वरसांख्यपक्षे उदासिनः पुरुषस्य निर्विकारत्वात् प्रधानदर्शनादिरूपविकारासंभवः। अत एव मुक्तस्य तस्य प्रकृतिधर्माध्यासनिमित्तो भोगः पुंप्रकृत्योर्विवेकानुसंधानकृतं कैवल्यं च; एतद्रूपयोरर्थयोः प्रयोजनयोरभावात्प्रधानं न स्वीकार्यम् ।

## विप्रतिषेधाच्चासमंजसम् ॥ १० ॥

विप्रतिषेधाच्च पुरुषस्य प्रकृतिसंबंधेन द्रष्टृत्वभोक्तृत्वकर्तृत्वादिकमस्ति; वस्तुतस्तु तस्य द्रष्टृत्वभोक्तृत्वादि नास्ति; जीवो हि निर्विकारोऽकर्त्ता निर्बंधनः कैवल्यः स एव परमात्मा पंचविंशकः प्रकृतिश्च जगत्कर्त्री ताभ्यां च परं किमपि नास्तीत्यादिकं सांख्या वदंति; तस्य वेदे निषेधादप्यसमंजसमेव कापिलं मतम्; एवं प्रधानकारणवादो निःप्रमाणक इति निरूपितम् ; अतः परं परमाणुकारणवादनिरसनायाधिकरणमारभ्यते–

## महद्दीर्घवद्वा ह्रस्वपरिमंडलाभ्याम् ॥ ११ ॥

अत्र वैशेषिकमतसिद्धः परमाणुकारणवादो युक्तो नवेति संदेहः। प्रधानकारणमते

---

१ परस्पराधिक्यन्यूनताभावः। २ सांख्यमते । ३ गुणमयकार्यदर्शनाद्गुणात्मिकायाः प्रकृतेर्जगत्कारणत्वसंभवोस्तीत्यनुमाने । ४ विविधविचित्रजगद्रचनासंपादिका ज्ञानरूपा या शक्तिस्तस्याः। ५ प्रधानस्थितैव । ६ यत्तु ह्रस्वपरिमंडलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घाणुवच्चेतनाद्ब्रह्मणोऽचेतनं जगद्भवतीति परैर्ब्रह्मकारणवाददूषणपरिहारपरमिदं सूत्रं व्याख्यातं तदसंगतम्; ब्रह्मकारणवादे परोक्तान् दोषान् पूर्वस्मिन् पादे परिहृत्य परपक्षप्रतिक्षेपो ह्यस्मिन्पादे क्रियते ।

अधिष्ठात् नारायणानंगीकारात्तत्कारणवादे विरुद्धेऽपि परमाणुकारणवादो युज्यते । तथाहि प्रलीने जगति नारायणस्य सिसृक्षायां सत्यां प्राणिनां कर्मवशान्निश्चलेषु परमाणुषु आद्यं कर्मोत्पद्यते; तस्मात्कर्मण एकः परमाणुः परमाण्वंतरेण संयुज्यते; तस्माच्च संयोगाद्द्व्यणुकमारभ्यते; तेभ्यस्त्रिभ्यो द्व्यणुकेभ्यस्त्र्यणुकमित्यादिक्रमेण सर्वं जगदुत्पद्यते; अतो न परमाणुकारणवादे विरोध इति पूर्वपक्षे सिद्धांत उच्यते-ह्रस्वपरिमंडलाभ्यां महत्त्वदीर्घत्वयुक्तत्र्यणुकाणुत्वह्रस्वत्वयुक्तद्व्यणुकोत्पत्तिरुच्यते काणादमते; कथमेतत्संभवति? तथाहि परमाणवः पारिमांडल्यपरिमाणयुक्ताः नत्वणुपरिमाणयुक्ताः। द्वाभ्यां परमाणुभ्यां अणुपरिमाणरहिताभ्यां अणुपरिमाणोपेतं ह्रस्वपरिमाणोपेतं च द्व्यणुकमुत्पद्यत इत्यभ्युपगम्यते; तथा ह्रस्वपरिमाणोपेतत्वाद्दीर्घपरिमाणरहितं द्व्यणुकमस्ति; तादृशेभ्यस्त्रिभ्यो द्व्यणुकेभ्यो दीर्घपरिमाणोपेतमणुपरिमाणरहितं त्र्यणुकमुत्पद्यत इत्यभ्युपगम्यते। इदं सर्वमसमंजसमेव।'कारणद्रव्यसमवायिनो गुणाः कार्यद्रव्ये स्वसमानजातीयगुणांतरानारभंत' इति तदभिमतन्यायेन पारिमांडल्याणुत्वादिकारणगुणगणप्रकरणेन सह महत्त्वदीर्घत्वादिकार्यगुणगणानां विरोधात्; तथा तन्मते दोषांतरमपि यथा त्र्यणुकादयो ह्यवयवाः स्वीयैः षड्भिः पार्श्वैः सह संयुज्यातिमहतश्चतुरणुकादीनवयवेन उत्पादयंति तथैव परमाणूनामप्युत्पादकत्वं स्वीकार्यम्; एवं च सति तेऽपि सावयवाः स्वीयैः षड्भिः पार्श्वैः सह संयुज्यैव द्व्यणुकादीनुत्पादयेयुः। परमाणूनामवयवभेदाभावांगीकारे यथैकस्य परमाणोः पारिमांडल्यपरिमाणत्वं तथा सहस्रपरमाणुसंयोगेऽपि स्वाभिमतन्यायानुरोधात्तत्तुल्यपरिमाणत्वम्;एवं च सति अणुत्वह्रस्वत्वमहत्वदीर्घत्वादीनां कार्यगुणानामसिद्धिःस्यात्;पुनस्तत्सिद्धये तेषामवयवभेदांगीकारे तेऽपि सावयवाः स्वीयैः स्वीयैः षड्भिः षड्भिः पार्श्वैः सह संयुज्य महांतं महांतमवयविनमुत्पादयेयुः, ते चापि सावयवाः संतः स्वीयैः स्वीयैः षड्भिः षड्भिः पार्श्वैः सह संयुज्य महांतं महान्तमवयविनमुत्पादयेयुरिति पूर्वपूर्वत्रावयवभेदांगीकारे कुत्रापि कारणानवस्थितिः स्यात्; अतः परमाणुकारणवादो न युक्तः। इदानीं सूत्रार्थो विविच्यते–महद्दीर्घवत् वा ह्रस्वपरिमंडलाभ्यामसमंजसमित्यनुवर्त्तते । चकारार्थबोधको वाशब्दः। ह्रस्वपरिमंडलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवत्–महद्दीर्घह्रस्वाणुवत् महत्वदीर्घत्वह्रस्वत्वाणुत्वादिगुणोपेतत्र्यणुकद्व्यणुकोत्पत्तिवत्। अन्यच्च तदभ्युपगतं सर्वम-

१ आश्रितात् । २ ह्रस्वत्वादिगुणोपेतद्व्यणुकेन महत्त्वदीर्घत्वयुक्तत्र्यणुकोत्पत्तिः पारिमांडल्यपरिमाणोपेतपरमाणुना ह्रस्वत्वाणुत्वगुणयुक्तद्व्यणुकोत्पत्तिस्तद्वदिति विवेकः । ३ परमाणुभ्यो द्व्यणुकादिक्रमेण जगदुत्पत्तिवादासामंजस्यातिरिक्तं काणादमतगतम् ।

समंजसम्। द्व्यणुकादिक्रमेण जगदारंभकत्वमसमीचीनं कारणानवस्थितेरिति पुनरनुपपत्तिमाह—

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

परमाणुकारणवादे हि परमाणुगतकर्मजनिततत्संयोगपूर्वकद्व्यणुकादिक्रमेण जगदुत्पत्तिरिष्यते। तंत्र तस्य कर्मणः किंचिन्निमित्तं मन्यते नवा? प्रथमपक्षे कर्मनिमित्ततया प्रसिद्धं क्षेत्रज्ञप्रयासादिकं स्वीकार्यम्; नहि तत्संभवति, तस्य सृष्ट्युत्तरकालभावित्वात्; द्वितीयपक्षे कर्मानुद्भवः। एवं उभयथापि न कर्म संभवति; अतः कर्मासंभवात् तदभावः उक्तक्रमेण जगदुत्पत्त्यभावः। यद्वा निखिलजगदुत्पत्तिकारणभूतपरमाणुगतमाद्यं कर्मादृष्टकारितमित्यभ्युपगम्यते; अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमित्यादीन्यदृष्टकारितानीति तदिदं परमाणुगतं कर्म स्वगतादृष्टकारितमागतादृष्टकारितं वा? उभयथापि न संभवति; क्षेत्रज्ञपुण्यपापानुसंधानजनितस्यादृष्टस्य परमाणुगतत्वासंभवात् तस्य परमाणुगतत्वसंभवे च सदोत्पादकत्वप्रसंगात्। नन्वदृष्टं हि विपाकापेक्षम्; विपाको ह्यदृष्टगतः कश्चिद्धर्मो नास्ति। किंतु कर्मविधिना कालविशेषनियतफलदातृत्वं यस्य कर्मण उदितं तस्य तत्कालागमनमेव विपाकः, अनियतकालविशेषाणां कर्मणां प्रबलकर्मांतरप्रतिबंधाभावो वा विपाकः। अदृष्टानि तत्तत्कर्मानुगुणफलदानस्वभावानि; अतोऽदृष्टस्य विपाकापेक्षत्वान्न सर्वदोत्पादकत्वप्रसंग इति चेन्नैतदुचितम्; असंख्यैरात्मभिरसंकेतपूर्वकं विविधकालफलदायित्वेनानुष्ठितानेकनानाकर्मजनितानामदृष्टानामेकदैकरूपविपाकस्य प्रामाणिकत्वाभावात्; अतोऽदृष्टमेकदा सृष्टिनिमित्तकमेकदा प्रलयनिमित्तकं च न संभवति; अतस्तदभावः–उभयथापि कर्मासंभवात् तयोः सृष्टिप्रलयोरभावः, अतः परमाणुकारणवादो न युक्तः। इयं चात्रानुपपत्तिरित्याह—

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

काणादमते समवायाभ्युपगमात् समवायः परमाणुद्व्यणुकयोराधाराधेयभावोपपादकतया तयोरपृथक्सिद्धस्थितित्वहेतुः यः परस्परसंबंधः तस्याभ्युपगमादंगीकारात् असमंजसमेतन्मतम्; कुतः, साम्यादनवस्थितेः। यथा आधेयतासिद्ध्ये आश्रयभिन्नत्वेनांगीकृतानामवयविजातिगुणानामाधारभूतेष्ववयवव्यक्तिगुणिषु ततोऽपृथक्सि-

---

१ परमाणुकारणवादे। २ क्षेत्रज्ञप्रयासादिकस्य। ३ निमित्ताभावरूपे। ४ परमाणुगता। ५ विशेषकालागमनमेव। ६ आकस्मिकप्राणान्ययायापद्गतभगवद्भक्तरक्षणादिरूपाणाम्। ७ परमाणुकारणवादे।

द्धतयावस्थाने समवायापेक्षा तथैव समवायस्यापि समवायिषु ततोऽपृथक्सिद्धतयाऽवस्थाने समवायांतरापेक्षा आश्रयभिन्नत्वसाम्यात्; एवं द्वितीयसमवायस्यापि तत्साम्यात्समवायिषु ततोऽपृथक्सिद्धतयाऽवस्थाने समवायांतरापेक्षा तथैव तृतीयसमवायस्यापि तत्साम्यात्समवायिषु ततोऽपृथक्सिद्धतयाऽवस्थाने समवायांतरापेक्षा स्यादित्येवमनंतसमवायपरंपरा प्रसज्यते इत्यनवस्थितेरित्यर्थः। एवमनवस्थायां प्रसज्यमानायामेकासिद्धौ सर्वासिद्धेः द्वाभ्यां परमाणुभ्यां द्व्यणुकं नैवोत्पद्येत तदुत्पत्त्यभावे च द्व्यणुकाद्युत्पत्तिक्रमेण जगत्सृष्टिं वक्तुं न शक्येतेति भावः।

## नित्यमेव च भावात् ॥ १४ ॥

परमाणूनां प्रवृत्तिस्वभाववत्त्वांगीकारे तेषु प्रवृत्तेर्नित्यमेव भावात् प्रलयाभावप्रसक्तिः तेषां निवृत्तिस्वभाववत्त्वांगीकारे तेषु निवृत्तेर्नित्यमेव भावात् सर्गाभावप्रसक्तिश्च; अतो हेतोः समवायसंबंधस्य नित्यत्वमंगीक्रियते चेत्तत्रे संबंधिनित्यत्वमंतरेण तदनुपपत्तेश्च एतत्काणादमतमसमंजसमेव।

## रूपादिमत्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

परमाणूनामत्र काणादमते रूपादिमत्त्वमंगीकृतं तस्मात्तत्रोक्तानां तेषु नित्यत्वाणुत्वनिरवयवत्वादीनां विपर्ययः-अनित्यत्वं स्थूलत्वं सावयवत्वं च स्यात्; कुतः, लोके रूपादिमत्सु घटादिषु तथा दर्शनात्; अतोऽप्यसमंजसमेतत्। ननूक्तदोषपरिजिहीर्षया परमाणूनां रूपादिमत्त्वं नांगीक्रियते चेत्तत्राह—

## उभयथा च दोषात् ॥ १६ ॥

अनित्यत्वादिपरिहाराय परमाणूनां रूपादिशून्यत्वांगीकारे रूपादेः कार्यगुणस्य कारणगुणपूर्वकत्वासिद्धिः, तत्सिद्धये पुनरपि रूपादिमत्त्वांगीकारे त्वनित्यत्वाद्यनर्थापत्तिरित्युभयथापि दोषादेवंप्रकारेणापि कणादमतमसमंजसमेव।

## अपरिग्रहाच्चात्यंतमनपेक्षा ॥ १७ ॥

सांख्यपक्षस्य श्रुतिन्यायविरुद्धस्यापि सत्कार्यवादादौ क्वचिदंशे वैदिकैः परिग्रहः कृतोऽस्ति कणादपक्षस्य तु केनाप्यंशेनापरिग्रहादत्यंतमनपेक्षैव निःश्रेयसार्थिभिःकार्या।

---

१ नित्यत्वांगीकारपक्षे। २ समवायस्य नित्यत्वांगीकारपक्षानुपपत्तेः। ३ पार्थिवाप्यतैजसवायवीयाश्चतुर्विधाः परमाणवो रूपस्पर्शादिमंतो नित्या अणवश्चेति वैशेषिकसिद्धांतः। ४ काणादमते। ५ काणादमतम्। ६ तस्य कारणगुणपूर्वकत्वस्य सिद्धये।

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

एवं वैदिकैकदेशिनां मतं निराकृतम्; इदानीं वेदबाह्यानां मतं निरस्यते-प्रथममिह बौद्धसिद्धांतसिद्धो वादश्चतुर्विधः—वैभाषिकसौत्रांतिकविज्ञानवादिसर्वशून्यवादिसंज्ञचतुर्विधबुद्धमुनिशिष्यमतवैचित्र्यात्। तेत्र वैभाषिकसौत्रांतिकयोर्ज्ञानं तद्व्यतिरिक्तपदार्थाश्च सर्वेक्षणकारणिकाः सत्याः संति; तयोः परस्परमियान् भेदः—वैभाषिकस्य घटादिपदार्थाः प्रत्यक्षाः, सौत्रांतिकस्य तु ज्ञाने घटाद्याकारे उत्पन्ने तेनाकारेण प्रत्यक्षेणाप्रत्यक्षाः घटादयोऽनुमीयंते इति; ते च सर्वे पूर्णवैनाशिकाः। तत्रादौ वैभाषिकसौत्रांतिकयोर्बाह्यार्थास्तित्वाऽविशेषात्तयोर्मतमेकीकृत्याह-तयोः स वादो युक्तो नवेति संदेहः। युक्त इति पूर्वः पक्षः। तथा ह्यामनंति द्विविधबौद्धाः—द्वौ समुदायौ बाह्याभ्यंतरावितिः बाह्यः पृथिव्यादिः आंतरश्चित्तचैत्यात्मकश्च। समुदायद्वयमेव सर्वं जगत्। तथाहि बाह्यसमुदायस्य परमाणवः कारणम्; ते च चतुर्विधाः पार्थिवाप्यतैजसवायवीयाः। तेभ्यो युगपत्पुंजीभूतेभ्यः समुदायो बाह्यो जायते। आंतरस्य समुदायस्य स्कंधपंचकं कारणम्; रूपवेदनाविज्ञानसंज्ञासंस्काररूपाः पंच स्कंधाः। चित्तेन रूप्यमाणाः सेंद्रियाः शब्दस्पर्शरूपादयो रूपस्कंधाः। तदभिव्यक्तिर्विज्ञानस्कंधः। तज्जन्यदुःखं वेदनास्कंधः। देवदत्तादिनाम संज्ञास्कंधाः। तेषां वासना संस्कारस्कंधः। तेभ्यः पुञ्जीभूतेभ्य आंतरः समुदायो जायते; अतः समुदायकारणवादे को विरोध इत्येवं प्राप्ते निरूप्यते—न युक्तः समुदायकारणवाद इति। ते हि क्षणिकत्ववादिनो बौद्धाः, कथमेतेषां समुदायः संभवति? कारणानां क्षणिकत्वेन तदानीमेव नष्टत्वात् कार्योत्पादनासमर्थत्वात्। इदानीं सूत्रार्थविवेचनं विधीयते-उभये हेतुकेऽपि समुदाये तदप्राप्तिः—समुदायाप्राप्तिः। परमाणुहेतुकः पृथिव्यादिसमुदायः स्कंधहेतुकः इंद्रियसमुदायश्चेत्युभयहेतुकोऽपि समुदायः। स्थिरस्य समुदायकर्तुश्चेतनस्य तन्मतानभ्युपगमेन अचेतनानां परमाणूनां स्कंधानां च स्वतः समुदायासंभवात क्षणिकत्वाभ्युपगमाच्च न सिद्ध्यतीत्यर्थः।

## इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् ॥१९॥

कार्यं प्रत्ययते जनकत्वेन प्राप्नोतीति व्युत्पत्त्या प्रत्ययशब्दः कारणवाची। ननु

---

१ तेषु चतुर्विधशिष्येषु मध्ये। २ विज्ञानस्कंधश्चित्तमित्यात्मेति च गीयते; इतरे स्कंधाश्चैत्या एतेषां चित्तचैत्यानां स्कंधानां समुदायः सर्वव्यवहारास्पदम्। ३ तदेंद्रियग्राह्यशब्दादिविषयस्याभिव्यक्तिः। ४ तस्मादिंद्रियग्राह्यशब्दादिविषयात् जन्यमुत्पाद्यं यद्दुःखम्।

समुदायकर्तुश्चेतनस्याभावेऽपि क्षणिकत्वादस्थिरेषु स्थिरत्वबुद्धिरूपाया अविद्याया रागादीनां चेतरेतरकारणत्वात् संघातभावादिकमुपपन्नमिति चेन्नैतदुचितम्; अविद्यायाः संघातभावं प्रत्यनिमित्तत्वात्। शुक्तिकादिषु या रजतादिबुद्धिरूपा अविद्या सा शुक्तिकादिवस्तुतो रजतादिकार्यं न करोति; विदुषस्तदानीमेव तत्र रजतादिबुद्धेर्नष्टत्वात् तन्निमित्तरागादयोऽपि न संभवंति; तस्मादयुक्तः समुदायकारणवादः। युक्त्यंतरमाह—

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

अत्र क्षणिकत्वपक्षे च जगदुत्पत्तिर्नोपपद्यते; उत्तरक्षणोत्पत्तिवेलायां पूर्वक्षणस्य विनष्टत्वात् तस्योत्तरं क्षणं प्रति हेतुत्वानुपपत्तेः। अभावस्य हेतुत्वे सर्वं सर्वत्र सर्वदोत्पद्येत। सूत्रार्थो वर्ण्यते-उत्तरोत्पादे-उत्तरघटादिक्षणोत्पत्तौ पूर्वनिरोधात्—पूर्वस्य घटादिवस्तुक्षणस्य नष्टत्वात्तस्योत्तरं घटक्षणं प्रति कारणत्वासंभवे सति पूर्वघटादिक्षणाभावस्यैवोत्पादकत्वेऽविशेषात् सर्वदा सर्वेषामप्युत्पत्तिः स्यात्।

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

असति हेतौ ततः कार्योत्पत्त्यंगीकारेऽपि विषयाणां पूर्वज्ञानमिंद्रियं च वीक्षणादितद्व्यापारश्च विषयाश्चेत्येतेषां चतुर्णां कार्यभूतनीलादिज्ञानहेतुत्वप्रतिज्ञा भवति, तस्याः विरोधः स्यात्; अन्यथा तस्य पूर्वघटक्षणस्यापि स्थित्यभ्युपगमे सति युगपत् घटक्षणद्वयोपलब्धिप्रसक्तिः, तस्य स्थिताविंद्रियसंप्रयोगज्ञानयोर्यौगपद्यं प्रसज्यते; तथा सति क्षणिकत्वप्रतिज्ञानाशः। एवं तावदसत उत्पत्तिर्निरस्ता। सतो निरन्वयो विनाशोऽपि नोपलभ्यते इति वक्ति—

## प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

प्रतिसंख्याप्रतिसंख्यानिरोधयोः विद्यमानं घटं भिनद्मीत्येवंरूपा प्रतिकूला संख्याबुद्धिः प्रतिसंख्या, तत्पूर्वको निरोधो मुद्गराद्यभिघातजन्यः स्थूलनाशः प्रतिसंख्यानिरोधः अतत्पूर्वकः प्रतिक्षणसूक्ष्मनाशोऽप्रतिसंख्यानिरोधस्तयोः स्थूलसूक्ष्मनिरन्वय-

---

१ शुक्तिकादिवस्तुनि। २ तादृगविद्यानिमित्त। ३ कार्यम्। ४ देशे। ५ कालत्रये इत्यर्थः। ६ ननु निःकारणिकैव कार्योत्पत्तिरस्तु तथा च नोक्तदोष इति चेत्तत्राह। ७ स्थितावंगीकृतायां सत्याम्। ८ स्थूलभावापन्नपदार्थस्य। ९ कारणसंपर्कव्यतिरिक्तः। १० स्थूलनाशप्रतिकूलः।

विनाशयोःअप्राप्तिरित्यर्थःअविच्छेदात् सतो द्रव्यस्यान्वयविच्छेदासंभवादिति सूत्रार्थः। अत्रायमभिप्रायः-निरोधो घटादेर्निरन्वयविनाशः सः स्थूलः सूक्ष्मश्च न संभवति; कपालादिभावरूपावस्थाप्राप्तेरेव विनाशशब्दवाच्यत्वात् सतो द्रव्यस्यान्वयाविच्छेदात् तस्य पिंडत्वादिरूपा अवस्थाविशेषाः नतु नाशशब्दवाच्याः, ततो न क्षणिकत्वसिद्धिः।

## [1]उभयथा च दोषात् ॥ २३ ॥

उभयथा च उत्पन्नस्य तुच्छतापत्तिस्तुच्छादुत्पत्तिश्चेत्युभयप्रकारेणाभावेनोत्पत्त्यसंभवात् अभावात्मककार्योत्पत्तिरूपाद्दोषादसमंजसमिदं दर्शनम्। भावानां बुद्धिपूर्वकनाशाबुद्धिपूर्वकनाशौ आकाशं चेति त्रयमप्यवस्तुसन्निरूपाख्यं निर्हेतुकं तुच्छसंज्ञं चेति वैनाशिका ब्रुवंति। तत्र बुद्धिपूर्वकनाशाबुद्धिपूर्वकनाशौ निराकृतौ; इदानीमाकाशस्यावस्त्वादिकं निराक्रियते।

## आकाशे चाविशेषात् ॥ २४ ॥

आकाशे च नत्ववस्तुत्वादिकमुपपद्यते;'आत्मन आकाशः संभूत' इतिश्रुत्या शब्दगुणकत्वेन श्यामत्वेन चाकाशेऽपि भूम्यादिवद्वस्तुत्वादिप्रतिपत्तेरविशेषात्। अथात्मनः क्षणिकत्वं निषेधति—

## अनुस्मृतेश्च ॥ २५ ॥

अनुस्मृतिरनुस्मरणं पूर्वानुभूतवस्तुविषयज्ञानमित्यर्थः। ततो हेतोः पूर्वानुभूतं यद्वस्तु तदेवेदमित्यैकार्थ्येनानुस्मर्तुरात्मनो न क्षणिकत्वसिद्धिः, आत्मांतरानुभूते पदार्थे इतरात्मनः स्मरणायोगाचेत्यभिप्रायः। बाह्यार्थास्तित्ववादिषु वैभाषिकसौत्रांतिकेषु गोघटादीनां प्रत्यक्षत्ववादिनो वैभाषिका बौद्धा निरस्ताः। ज्ञानानुमेयत्ववादिनः सौत्रांतिका निरस्यंते—

---

१ क्षणिकत्ववादिभिरभ्युपेता तुच्छादुत्पत्तिरुत्पन्नस्य तुच्छतापत्तिश्च न संभवतीत्युक्तम्; तदुभयप्रकाराभ्युपगतौ दोषश्च भवति, तुच्छादुत्पत्तौ तुच्छात्मकमेव कार्यं स्यात्; यद्धि यस्मादुत्पद्यते तत्तदात्मकं दृष्टं यथा मृत्सुवर्णादिरुत्पन्नं मणिकमुकुटादिमृत्सुवर्णाद्यात्मकं दृष्टम्; न च जगत्तुच्छात्मकं भवद्भिरभ्युपगम्यते; न च प्रतीयते सतो निरन्वयविनाशे सति एकक्षणादूर्ध्वं कृत्स्नस्य जगतस्तुच्छतापत्तिरेव स्यात्; पश्चात्तुच्छाज्जगदुत्पत्तावनंतरोक्तं तुच्छात्मकत्वमेव, स्यात् अत उभयथापि दोषान्न भवदुक्तप्रकारादुत्पत्तिनिरोधौ। २ आवरणाभावमात्रमित्यर्थः। ३ तादृशे वैभाषिकमते।

## [1]नासतोऽदृष्टत्वात् ॥ २६ ॥

इह बौद्धैकदेशिनां ज्ञानानुमेयत्ववादो युक्तो नवेति संशये पूर्वः पक्षः–ज्ञाने घटादीनां नीलपीतादिविचित्राकारं समर्प्य विनष्टमर्थं ज्ञानाकारवैचित्र्येणानुमिनोति ज्ञाता, अतो ज्ञानवैचित्र्येण बाह्यार्थवैचित्र्यमनुमीयते इति प्राप्ते सिद्धांतः–एतन्न संभवति; अर्थस्य क्षणिकत्वात् असतो विनष्टस्य नीलत्वपीतत्वादिधर्मिणो धर्मसंक्रमणस्यान्यत्रादृष्टत्वात् ।

## उदासीनानामपि चैवंसिद्धिः ॥ २७ ॥

एवं सर्वभावानां क्षणिकत्वाभ्युपगमादन्य एवानुष्ठाता अन्य एव फलस्वामी । अत उदासीनानामन्नादिसंपादने निष्प्रयत्नानामपि सर्वार्थसिद्धिः स्यादिति दूषणं वैभाषिकसौत्रांतिकयोर्द्वयोरपि समानं तस्मादसमंजसेन बाह्यार्थास्तित्ववादिनोर्वैभाषिकसौत्रांतिकयोर्मतेन वैदिकसमन्वयस्य न बाध इति सिद्धम् ।

## नाभाव उपलब्धेः ॥ २८ ॥

इह बौद्धानां विज्ञानवादिनां केवलविज्ञानवादो युक्तो नवेति संशये युक्त इति पूर्वः पक्षः। तथाहि साकारं विज्ञानमेव तत्त्वमांतरं न बाह्याः पदार्थाः। स्वप्ने बाह्यपदार्थाननपेक्ष्य केवलया बुद्ध्या व्यवहारदर्शनात् तद्वज्जाग्रद्व्यवहारस्यापि व्यवस्था युज्यते; ततो विज्ञानमात्रं तत्त्वमित्येवं प्राप्ते अभिधीयते-घटं जानामीति कर्तुः कर्मतया अर्थस्योपलब्धेर्घटादिबाह्यपदार्थाभावो न शक्यते वक्तुम्। पुरुषस्यार्थविशेषाणां नामरूपादिपृथक्पृथग्व्यवहारानुगुण्यवेदनमेव हि ज्ञानस्याकारः ननु घटपटादिवत्साकारत्वम्। यदुक्तं स्वप्नदृष्टांतेन जाग्रद्व्यवहारस्यापि शून्यत्वं तत्राह—

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

स्वाप्नज्ञानस्य जाग्रद्दृष्टपदार्थस्मृतिमात्रालंबनेन जाग्रज्ज्ञानस्य सत्यपदार्थालंबनेन

---

१ क्षणिकात्कार्योत्पत्तिमिच्छताऽर्थादभावान्निरुपाख्यादेव कार्योत्पत्तिरंगीकृतेति प्रतिभाति पूर्वक्षणनाशं विना कार्यक्षणोत्पत्त्ययोगात्साक्षादभावाद्भावोत्पत्तिः स्वग्रंथे दर्शिता च तथा चासतोऽभावान्निःस्वरूपात्कार्योत्पत्तिर्न युक्ता; कुतः; अदृष्टत्वात् निरुपाख्यात् नरविषाणादेः कार्योत्पत्तेरदृष्टत्वादित्यर्थः। २ योऽयं ज्ञाने नीलादिराकार उपलभ्यते स विनष्टस्यासतोऽर्थस्याकारो भवितुं नार्हति; कुतः, अदृष्टत्वात् न खलु धर्मिणि विनष्टे तद्धर्मस्यार्थांतरे संश्रयणं दृष्टम्; प्रतिबिंबादिकमपि स्थिरस्यैव भवति तत्रापि न धर्ममात्रस्य । ३ ज्ञानाकारवैचित्र्येण विनष्टबाह्यार्थवैचित्र्यानुमननम् । ४ अर्थांतरे । ५ विज्ञानेतरस्य ।

च परस्परं वैधर्म्याद्वैषम्याच्च न [1]स्वप्नादिवज्जागरितज्ञानस्य निरालंबनत्वम्। किंच बाह्यपदार्थाभावे तज्ज्ञानमेव न स्यात् अतो न विज्ञानमात्रं तत्त्वम्।

**न भावोऽनुपलब्धेः ॥ ३० ॥**

[2]अर्थशून्यस्य ज्ञानस्य सद्भावो न संभवति, तस्य कुत्राप्यनुपलंभात्; स्वप्नज्ञानस्यापि जाग्रद्दृष्टार्थवत्ता संभवत्येव, ततो विज्ञानमात्रवादोऽनुपपन्नः।

**सर्वथानुपपत्तेश्च ॥ ३१ ॥**

इह सर्वशून्यवादिनां बौद्धानां सर्वशून्यवादो युक्तो नवेति संदेहः। युक्त इति पूर्वः पक्षः। तथाहि सर्वं जगन्न सत् बाधितत्वात्; नासत् प्रतीयमानत्वात्; नोभयात्मकं परस्परविरोधात्; किंतु त्रिकोटिविनिर्मुक्तं सर्वशून्यमेव। प्रत्यक्षावभासस्तु संवृत्तिमूलः तस्मात् शून्यवादः समीचीन इत्येवं प्राप्ते सिद्धांत उच्यते-न संभवति सर्वशून्यवादः जगतः कोटित्रयसहितत्वात्; तथाहि न सदिति यदुक्तं तन्न युक्तम्; तत्रस्थचेतनानामविनाशित्वेनाबाधितत्वात्; नासदिति यदुक्तं तदपि न युक्तम्; देहादीनां नश्वरत्वात्; नोभयात्मकमिति यत्तदपि न युक्तम्; चेतनाचेतनानामन्योन्याश्रयत्वेनोभयात्मकत्वे विरोधाभावात्। प्रत्यक्षावभासस्तु भ्रांतिमूल इति यदुक्तं तदपि न युक्तम्; कथं यथा वस्तुतया सत्यजलस्य पारमार्थिकसूर्यकिरणयोगेनोपरिप्रदेशेऽवभासः प्रतीयते यथा च पारमार्थिकसर्पादेः सत्यरज्ज्वादौ भ्रांत्या तत्तुल्योऽवभासः प्रतीयते तथा द्रष्टृपुरुषाः दृश्यवस्तूनि तत्कर्त्ता चैतेषां सर्वेषां शून्यत्वे कस्य पारमार्थिकपदार्थस्य भ्रांतिमूला जगद्रूप :प्रत्यक्षावभासः प्रतीयते? न कस्यापि; सः कैर्दृश्यते? किंच मनुष्यपश्वादेर्यथोचितः शतसंवत्सराद्यायुःकालनियमः ओषधिप्रभृतेः पाके वृष्ट्यादित्रयप्रवृत्तौ च कालनियमो दृश्यते; एतत्सर्वं सर्वशून्यत्वे परमार्थिककर्त्तारमृते कथं सिद्ध्येत्? एवं सर्वप्रकारैः सर्वशून्यत्वानुपपत्तेः सर्वशून्यवादः सर्वविरुद्ध एव।

**नैकस्मिन्नसंभवात् ॥ ३२ ॥**

गता बौद्धाः। इदानीं जैनमतं निरस्यते—जैना हि सप्तभंगीन्याये नैकस्मिन्नपि वस्तुनि नानाभावमापादयंति। तेषां मतं युक्तं नवेति संदेहः। तत्र तेषां प्रक्रिया उच्यते-जीवः अजीवश्चेति द्वौ पदार्थौ। जीवश्चेतनः शरीरपरिमाणः सावयवः। अजीवः षड्विधः। वनमहीधरादिरेकः आस्रवसंवरनिर्जरबंधमोक्षाख्याः पंच। आस्रवत्यनेन जीवो विषयेषु इत्यास्रव इंद्रियसंघातः। संवृणोति विवेकमिति अविवेकादिः

१ स्वप्नज्ञानवत्। २ पदार्थालंबनरहितस्य।

संवरः। निःशेषं जीर्यत्यनेन कामक्रोधादिरिति केशोल्लुंचनतप्तशिलारोहणादितपो निर्जरः। कर्माष्टकेनापादिता जन्मपरंपरा बंधः। चत्वारि घातिकर्माणि पापरूपाणि चत्वार्यघातिकर्माणि पुण्यरूपाणि तेभ्यो मुक्तस्य जीवस्य ततोर्ध्वगमनं मोक्षः। एते सप्त पदार्थाः सप्तभंगीन्यायेन व्यवस्थाप्याः-स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यं स्यादस्ति चावक्तव्यं स्यान्नास्ति चावक्तव्यं स्यादस्ति नास्ति चावक्तव्यं चेति सप्तभंगीन्यायः। स्याच्छब्द ईपदर्थः। अतः सप्तभंगीन्यायात्सप्तपदार्थसिद्धिरिति एतदयुक्तं कुतः, एकस्मिन्वस्तुनि सत्वासत्वनित्यत्वानित्यत्वभेदाभेदादीनामसंभवात्। पर्यायभाविनश्च द्रव्यस्यास्तित्वनास्तित्वादिशब्दाः बुद्धिविषयाः परस्परविरुद्धाः पिंडत्वघटत्वकपालत्वाद्यवस्थावत् युगपन्न संभवंति। किंच स्वशास्त्रीयतपोदयादिकर्मरूपसाधनैर्बद्धाल्पज्ञक्षेत्रज्ञानां सर्वज्ञतासंपन्नमोक्षो भवेत्; यस्य च मुक्तत्वं जातं स एव स्वनिर्मितग्रंथे जीवमोक्षहेतुकतपोदयादिसाधनानि तथा तत्साधनोक्तियुक्तशास्त्रकर्ताऽन्यः कश्चिदनादिसिद्धपरमेश्वरो नास्तीति च मुक्तमोक्तसाधनैरेव मोक्षोक्तिश्चेति वदतीत्यपि जैनमतोक्तिः। तत्रेयं महादोषापत्तिरवभासत एव। तथाहि अनादिसिद्धसर्वज्ञनारायणनिर्मितशास्त्रं विना प्रथममनाद्यविद्याऽनादिबद्धाल्पज्ञक्षेत्रज्ञानां मोक्षसाधनज्ञानं कथं भवेत्? तज्ज्ञानं विना च सर्वज्ञतासंपन्नमुक्तत्वं कथं भवेत्? तदभावे च सति सर्वज्ञतायुतमोक्षोपायबोधकशास्त्रकर्तृत्वशक्तिः कथं संभवेदित्यन्योऽन्याश्रयदोपापत्तिः। अतो वेदविरुद्ध एव जैनवादः।

## एवं चात्माऽकार्त्स्न्यम् ॥ ३३ ॥

जैनमते प्राप्तमात्माऽकार्त्स्न्यमपि एवं पूर्ववद्विरुद्धमेव। कथमिति चेत्तत्राह—आत्मनः शरीरपरिमाणत्वे सावयवत्वे च सति सावयवाद्धस्त्यादिबृहच्छरीरादल्पीयसि सावयवे पिपीलिकादिशरीरे प्रविशतस्तस्य अकार्त्स्न्यं समग्रत्वेन प्रवेशानर्हत्वं समानावयवतत्संख्यानर्हत्वं च प्रसज्यते; अतो जीवात्मनः शरीरपरिमाणत्वं सावयवत्वं च न संभवत्येव। अथ संकोचविकाशधर्मत्वेन जीवात्मनः पर्यायशब्दवाच्यावस्थांतरापत्तौ तत्तच्छरीरप्रवेशसंभवशंकां परिहर्तुमिदं सूत्रमाह—

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३४ ॥

पर्यायादपि [4]तथाविधाल्पत्वावस्थांतरयोगादप्यविरोधो न संभवति; कुतः, विका-

---

१ अवस्थाविशेषभाविनः। २ हस्तिपिपीलिकादिशरीर। ३ प्रवेशः संभवतीतीमां शंकाम्।
४ हस्त्यादिस्थूलदेहस्थस्यात्मनः पिपीलिकादिसूक्ष्मदेहयोगात्।

रादिभ्यो दोषेभ्यः मृदो विकारघटादिवदात्मनः तत्तच्छरीरप्रवेशेन वृद्धिह्रासवत्त्वे घटादिवद्विकारादिदोषप्रसक्तेरित्यर्थः ।

## अंत्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३५ ॥

जीवात्मनो यदंत्यं मोक्षदशासंभूतं ज्ञानघनसत्तारूपं परिमाणं तस्यैकरूपावस्थितेः मोक्षदशावस्थितस्य पश्चात्प्राकृतदेहान्तरपरिग्रहाभावाच्च मोक्षदशारूपतत्परिणामस्य जीवात्मनश्चोभयोरपि नित्यत्वाच्च तदेव तस्य स्वाभाविकं परिमाणम्; अतः पूर्वावस्थायामप्यविशेषः साम्यम्; अतस्तस्य पूर्वमपि न शरीररूपेण परिमाणत्वसिद्धिः स्यादेव; अत एकस्मिन् सत्त्वासत्त्वादिवादादात्मनः मुक्तिसाधनबोधकानादिसिद्धेश्वराभाववादाच्च सावयवशरीरपरिमाणवादाच्च जैनमतमपि वेदविरुद्धमेव ।

## पत्युरसामंजस्यात् ॥ ३६ ॥

अत्र नैकस्मिन्नसंभवादित्यतो नस्यानुवृत्तिः । पत्युः पशुपतेः अनुसृतानां कापालादीनां तत्तंत्रोक्तं मतं नादरणीयं कुतः, असामंजस्यात्; असामंजस्यं हि निमित्तोपादानकारणभेदत्वं तामसस्य रुद्रस्य गुणातीतत्वकथनं च मुद्रिकापट्कधारणभगासनस्त्रात्मध्यानसुराकुंभस्थापनतत्स्थदेवतार्चनगूढाचारश्मशानभस्मस्नानप्रणवपूर्वाभिध्यानाद्यन्योन्यविरुद्धानि तेषां परिकल्पनं चोपासनमाचारश्चेदं सर्वं वेदविरुद्धमेव; अतस्तन्मतस्यानादरः ।

## अधिष्ठानानुपपत्तेश्च ॥ ३७ ॥

अशरीरस्येश्वरस्य प्रधानरूपजगदुपादानकारणाधिष्ठानानुपपत्तिः कथमिति चेत्तत्राह-लोके शरीरिण एव कुलालादेर्मृत्पिंडाद्युपादानाधिष्ठानं दृष्टम्; अतस्तन्मते कुलालादिदृष्टांतो विरुद्धः। अशरीरस्येश्वरस्य प्रधानानधिष्ठानत्वे सति तस्य प्रधानानांगीकारात्सांख्यमतमेवोपपन्नं निरवयवपुरुषरूपेणेश्वरेण सह प्रधानस्य प्रपंचसर्गे प्रयोजनाभावात्; अतोऽप्येतन्मतासामंजस्यं सिद्धम्। पुनराशंक्य परिहरति—

---

१ अंतिममोक्षदशासंभूतज्ञानघनसत्तारूपमेव । २ पशुपतिमतानुसारिणश्चतुर्विधाः—कापालाः कालामुखाः पाशुपताः शैवाश्चेति । ३ पशुपतिमतागमोक्तम् । ५ कंठिका रुचकं चैव कुंडलं च शिखामणिः। भस्म यज्ञोपवीतं च मुद्रापट्कं प्रचक्षते ॥ ६ तदाधार।७ मुद्रिकापट्कधारणादीनाम्। ८ पशुपतिमतस्य । ९ पशुपतिमते ।

## करणवच्चेन्न भोगादिभ्यः ॥ ३८ ॥

नन्वशरीरस्येश्वरस्य प्रधानाधिष्ठाने शरीरापेक्षा नास्ति। यथा जीवः करणमिंद्रियं शरीरमप्यशरीरः सन्नधितिष्ठति तद्वत्प्रधानमीश्वर इति चेन्न; तत्कृतानर्थभोगादिभ्यः। यथा जीवस्याशरीरस्य शरीराधिष्ठाने शरीरगतसुखदुःखादिसंबंधस्तथा पशुपतेरपि प्रधानाधिष्ठाने तद्गतभोगादिप्रसंगः, ततोऽप्येतन्मतमसमंजसमेव।

## अंतवत्त्वमसर्वज्ञता वा ॥ ३९ ॥

वाशब्दश्चकारबोधकः। तथा भोगादिप्रसंगेनेश्वरस्य पुण्यपापरूपादृष्टवत्त्वे अंतवत्त्वं नाशवत्त्वं नित्याजादिविशेषणविशिष्टस्य तस्य करणकलेवरस्थानभोगादिभ्यस्तज्ज्ञानाच्च क्षरणस्वभाववत्त्वमित्यर्थः। अतएवासर्वज्ञता च भवेत्, अतो नैतन्मतमादरणीयम्। एतेषां वेदविरुद्धानां सांख्यादिमतानां निराकरणविस्तारस्तु लक्ष्मणाचार्यकृतभाष्यादवगंतव्यः।

## उत्पत्त्यसंभवात् ॥ ४० ॥

सांख्यादितंत्रप्रणीतमतवत्पंचरात्रतंत्रमपि प्रमाणतया ग्राह्यं नवेति संदेहः। न ग्राह्यमिति पूर्वपक्षी मन्यते। कथमिति चेत्तत्राह वासुदेवात्संकर्षणाभिधो जीवः प्रादुर्भूयते, संकर्षणाच्च प्रद्युम्नाख्यं मन आविर्भूयते, तस्मादनिरुद्धनामाहंकारश्चेति 'द्वावजावीशानीशावि'त्यादिश्रुतिविरुद्धजीवोत्पत्यादिप्रतिपादनेन तस्यानादरश्रवणात् इति प्राप्ते सिद्धांतं ब्रूमः—संकर्षणप्रद्युम्नानिरुद्धानां 'अजायमानो बहुधा व्यजायते'ति श्रुतावभिहितानां पुरुषोत्तमाविर्भावानां स्वेच्छाविग्रहप्रतिपादनात् श्रुतिविरोधाभावः। जीवमनोऽहंकाराणामधिष्ठातृत्वात्तेषां संकर्षणादीनां जीवादिशब्दैरभिधानमविरुद्धम्; यथाकाशप्राणादिशब्दैः परब्रह्मणोऽभिधानं तद्वत्; अतो भगवता वासुदेवेन परमनिःश्रेयससाधनाववोधितया प्रोक्तं वासुदेवादिचतुर्व्यूहस्य तदवताराणां चोपासनबोधकं वेदार्थानां परमोपबृंहकं पंचरात्रतंत्रं परब्रह्मोपासकैः परमप्रमाणतया ग्राह्यम्; तच्छास्त्रं ये जना युक्त्या दूषयंति ते मंदभाग्याः देवानां प्रियाश्च भवंति। सूत्रार्थवर्णनं—'न जायते म्रियते वा विपश्चिदिति' 'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः, अजो नित्यः शाश्वतोऽयं पुराण' इत्यादिश्रुतिस्मृतिषु जीवकलापस्योत्पत्त्यसंभवात् न प्रमाणं जीवोत्पत्तिवाक्यमिति। पुनरग्राह्यत्वमाह—

१ प्रधानकृत। २ पशुपतिमतम्। ३ सशरीरजीववत्। ४ करणादिज्ञानात्। ५ पंचरात्रतंत्रस्य।

## न च कर्तुः करणम् ॥ ४१ ॥

संकर्षणात्प्रद्युम्नाख्यं मनो जायते इति कर्मकर्तुर्जीवात्करणभूतस्य मनस उत्पत्तिर्न संभवति; 'एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि चे'त्युपादानकारणभूतादंतर्यामिशक्तिरूपात्प्रकृतिशरीरिणः परब्रह्मणो मनस उत्पत्तिश्रवणात् श्रुतिविरुद्धार्थप्रतिपादनेन पंचरात्रतंत्रस्याप्रामाण्यमिति प्राप्ते वक्ष्यमाणेन सूत्रेण सिद्धांतं ब्रूमः—

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४२ ॥

वाशब्दः पूर्वपक्षं व्यावर्त्तयति। विज्ञानादिभावे-विज्ञानं संकर्षणसंज्ञो जीवः आदिशब्दग्राह्यौ प्रद्युम्नानिरुद्धौ च तेषां भावे वासुदेवावतारत्वेन प्रादुर्भावे सति तत्प्रतिपादनपरपंचरात्रतंत्रस्य प्रामाण्यप्रतिषेधो माभूदित्यर्थः। अत्रायमाशयः-भागवतप्रक्रियानभिज्ञानां जनानां जीवपरमनिःश्रेयसप्रापणाय स्वेच्छया प्रादुर्भूतेषु संकर्षणादिपुरुषोत्तमावतारेषु जीवभावाप्तिः प्रतीयते; किंच संकर्षणादीनां जीवादिसंज्ञास्तु जीवमनोऽहंकाराणामधिष्ठातृत्वपरा बोध्याः। [1]तद्विदस्तु परब्रह्मैव मुमुक्षुसमाश्रयणाय स्वेच्छया चतुर्धावतिष्ठते वाराहाद्यवतारैरनेकधा चेति वदंति। तथा श्रूयते 'अजायमानो बहुधा व्यजायते'ति। तथा मार्कंडेये स्मर्यते—' स देवो भगवान् सर्वं व्याप्य नारायणो विभुः। चतुर्धा संस्थितो ब्रह्मन् सगुणो निर्गुणस्तथा ॥ एका मूर्त्तिरनिर्देश्या शुक्लां पश्यंति तां बुधाः। ज्वालामालोपरुद्धांगी निष्ठा सा योगिनां परा ॥ दूरस्था चांतिकस्था च विज्ञेया सा गुणातिगा। वासुदेवाभिधानासौ निर्ममत्वेन दृश्यते ॥ द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारयत्यधः। संकर्षणेति विज्ञेया बलमुत्तममास्थिता ॥ तामसी सा समाख्याता तिर्यक्त्वं समुपाश्रिता। तृतीया कर्म कुरुते प्रजापालनतत्परा ॥ सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ॥ चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा। अनिरुद्धेति सा ज्ञेया जगदुत्पत्तिकारिणी ॥ व्यूह्यात्मानं चतुर्धा च वासुदेवादिमूर्त्तिभिः। सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दनः'। इतिः

व्यासवचनं यथा पौष्करसंहितायाम्—

"[2]कर्त्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते।

---

१भागवतप्रक्रियाविदस्तु।२यत्र यस्मिन्संदर्भे ब्राह्मणैः कर्तृभिः क्रमागतैःजगत्सृष्ट्यादिक्रियानुक्रमोपलब्धाभिरित्यर्थः स्वस्य परब्रह्मणः संज्ञाभिर्वासुदेवसंकर्षणप्रद्युम्नानिरुद्धनामभिः सर्वावस्थावस्थितसकलचिदचिदंतर्यामितया तत्तत्कर्मानुगुणफलदानक्रियया वासुदेव इति नाम्ना, प्रलये स्वशिरसि धृतभूपन्नगावस्थित्या जगत्सर्गे स्वलोकस्थितिपूर्वकतदुत्पत्तिक्रियया च अनिरुद्ध इति नाम्ना,

क्रमागतैः स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तत्' ॥

इत्यादि । तच्च चातुरात्म्योपासनं वासुदेवाख्यपरब्रह्मोपासनमिति, तथा सात्त्वतसंहितायामुक्तम्–

'ब्राह्मणानां हि सद्धर्म्यं वासुदेवाख्ययाजिनाम् ।
विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महत्' ॥

इति । तथा श्रीमद्भागवते स्मर्यते—'अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसामिति' 'मत्स्याश्वकच्छपवराहनृसिंहहंसराजन्यविप्रविबुधेषु कृतावतारः, त्वं पासि न' इत्यादिवचनैः पंचरात्रतंत्रोक्तं संकर्षणादिपुरुषोत्तमावतारोपासनं सिद्धम् ।

## विप्रतिषेधाच्च ॥ ४३ ॥

अस्मिन्पंचरात्रतंत्रे जीवोत्पत्तेर्विप्रतिषेधात् नैतद्वेदविरुद्धम् । तथाहि 'अचेतना परार्था च नित्या तत्रास्ति विक्रिया, त्रिगुणा कर्मिणां क्षेत्रं प्रकृतिरूपमुच्यते । व्याप्तिरूपेण संबंधस्तस्याश्च पुरुषस्य च । स ह्यनादिरनंतश्च परमार्थेन निश्चित' इति, 'अनादिकालतो जीवो मायया परिवेष्टितः । अनुग्रहाद्धरेरेव मुच्यते नात्र संशयः' इति जीवस्योत्पत्तिस्तत्रैव विप्रतिषिध्यते ।

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने द्वितीयाध्यायस्य द्वितीयःपादः ॥ २ ॥



## द्वितीयाध्याये तृतीयपादः ।

समग्रः श्रुतिविरुद्धशास्त्रमतसिद्धांतो द्वितीयाध्यायद्वितीयपादे निराकृतः, इदानीं पादद्वयेन पुनः श्रुतिप्वर्थांतरविरोधं परिहरति–

---

प्रजापालनधर्मसंस्थापनक्रियया प्रद्युम्न इति नाम्ना, च जगत्संहरणक्रियया संकर्षण इति नाम्ना च विदितं चातुरात्म्यं वासुदेवादिमूर्तिभिर्विख्यातं चतुर्व्यूहं कर्त्तव्यत्वेनावश्यकानुष्ठेयत्वेन करणेन उपास्यते सेव्यते वै निश्चितम् । १ तत्तु तदेव आगमं पंचरात्रतंत्रं प्रोक्तमिति शेषः । २ सद्धर्म । ३ परमसंहितायाम् । ४ पंचरात्र एव । ५ अधिकरणानि ६ सूत्राणि ४३

## न वियदश्रुतेः ॥ १ ॥

निरवयवत्वेनाकार्यत्वभ्रमादाकाशस्योत्पत्तिः संभवति नवेति संदिह्यते। वियन्नोत्पद्यत इति प्राप्तं कुतः, अश्रुतेः, तथाहि छांदोग्ये 'सदेव सौम्येदमग्र आसीदि'त्यारभ्य' 'तत्तेजोऽसृजते'ति तेजःप्रभृतिभूतसृष्टिरभिधीयते। तत्र नाकाशस्योत्पत्तिः श्रूयते। या त्वात्मन आकाशः संभूत इतिश्रुतिस्तैत्तिरीये सा गौणी भवितुमर्हति आकाशोत्पादककारणनिरूपणासंभवात्; अतः सर्वगतस्याकाशस्याजजीववन्नोत्पत्तिरिति प्राप्ते सिद्धांतं प्रवच्मः—

## अस्ति तु ॥ २ ॥

. वियत उत्पत्तिरस्त्येव 'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इत्यादिश्रुतेः। आत्मनस्तु 'न जायते म्रियते वा विपश्चिदि'ति प्रतिषेधादनुत्पत्तिः। वियदुत्पत्तिप्रतिषेधश्रुतिर्नास्ति, अतो वियदुत्पद्यत एव। यदुक्तमुत्पत्तिश्रुतिर्गौणीति तत् संदिह्य निर्णयमाह—

## गौण्यसंभवाच्छब्दाच्च ॥ ३ ॥

'तत्तेजोऽसृजते'ति तेजसः प्रथमं सृष्टिवचनादाकाशः संभूत इतिश्रुतिर्गौणी, तस्य निरवयवस्योत्पत्त्यसंभवात् वायुश्चांतरिक्षं चैतदमृतमिति नित्यत्वशब्दाच्च।

## स्याच्चैकस्य[3] ब्रह्मशब्दवत् ॥ ४ ॥

'आत्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरि'त्यादिष्वनुगतस्यैकस्य संभूतशब्दस्याकाशे गौणत्वमन्यत्र मुख्यत्वं च स्यात् ब्रह्मशब्दवत्; यथैकस्य ब्रह्मशब्दस्यैकप्रकरणगतस्य 'तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते' इति प्रकृतौ गौणत्वं 'तपसा चीयते ब्रह्मे'ति ब्रह्मणि मुख्यत्वं च भवति तद्वदत्रापि[4]। यथैकप्रकरणे उभयत्र प्रयुक्तब्रह्मशब्दे गौणमुख्यभावोऽभिहितस्तथैवानुषंगेऽपि तदुभयत्वं संभवत्येवेत्यर्थः, अत आकाशोत्पत्तिरयुक्तेति। अस्य संदेहस्य परिहार उच्यते—

---

१ भूतसृष्टौ। २ छांदोग्ये। ३ नन्वात्मन आकाशः संभूत इत्यादिवाक्ये संभूतशब्दस्याकाशे गौणत्वं तेजआदौ तु मुख्यत्वमित्येतद्विरुद्धम्; एकस्मिन्वाक्ये एकस्य शब्दस्य गौणमुख्यत्वादर्शनादिति चेत्तत्राह 'स्याच्चैकस्य ब्रह्मशब्दवत्, यथा एतस्मिन्नेव प्रकरणे अन्नं ब्रह्मेति व्यजानादित्यादावन्नादिषु ब्रह्मशब्दो गौण आनंदो ब्रह्मेत्यत्र मुख्यः विषयभेदात् एवं प्रकृतेऽपि विषयभेदादेकस्य संभूतशब्दस्य गौणत्वं मुख्यत्वं च स्यादित्यर्थः। ४ संभूतशब्देऽपि।

## प्रतिज्ञाहानिरव्यतिरेकात् ॥ ५ ॥

'येनाश्रुतं श्रुतं भवती'त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया हानिर्न भवति, कुतः, वियदादीनां ब्रह्मकार्यत्वेन ब्रह्माव्यतिरेकात्; अतो न संभूतशब्दस्याकाशे गौणत्वम्; गौणत्वे च सति सदा सतो वियतोऽतर्यामिशक्त्यनुसंकोचविकाशाभावे-नैकवस्तुविज्ञानसंभूतसर्वविज्ञानप्रतिज्ञाया हान्यानुपपत्तेः। यथा प्रतिज्ञाया अहा-निस्तथा योजनीयम्।

## शब्देभ्यः ॥ ६ ॥

'आत्मन आकाशः संभूतः' 'तामसादपि भूतादेर्विकुर्वाणादभून्नभ 'इत्यादिबहु-श्रुतिस्मृतिशब्देभ्योऽवगतां वियदुत्पत्तिं 'तत्तेजोऽसृजते'त्यत्राकाशोत्पत्त्यवचनावगतं तेजःप्राथम्यं न निवारयितुं क्षमते।

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

यद्यपि छांदोग्ये 'तत्तेजोऽसृजते'त्यत्राकाशोत्पत्तिर्नोक्ता तथापि तस्मिन्नेव 'ऐतदात्म्यमिदं सर्वमि'त्याकाशादेः सर्ववस्तुनोऽपि ब्रह्मकार्यावगमात्तेजःप्रभृतिकार्य-वचनं तु यावद्विकारं यत्परिमितप्रकृत्यादिकार्यं तस्य सर्वस्यापि वस्तुनो विभाग उत्पत्तिस्तद्दर्शनार्थमिति विज्ञायते लोकवत्। यथा लोके दश मे पुत्रा इत्युक्त्वा तेषु केषांचिदुत्पत्तिवचनं सर्वपुत्रोत्पत्तिकथनपरं तद्वत् 'तस्मादाकाशः संभूत' इति वचनं युक्तमेव।

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

तेजोऽ त इति वक्ष्यति तदर्थमेवात्र वायोः[1] पृथगुपादानम्। आकाशवद्वायोरुत्पत्तिरस्ति नवेति संशये वायुर्नोत्पद्यते इति पूर्वः पक्षः। छांदोग्ये वायोरुत्पत्तेरश्रुतेः, बृहदा-रण्यके 'सैषाऽनस्तमिता देवता यद्वायुरि'ति तज्जन्मनिषेधाच्च वायुर्नोत्पद्यत इति प्राप्ते सिद्धांतः—छांदोग्ये वायोर्जन्माश्रवणेऽपि गुणोपसंहारन्यायेन 'आका-शाद्वायुरि'ति तैत्तिरीयवाक्योपसंहारे सति श्रुतमेव छांदोग्येऽपि वायोर्जन्म। 'सैषाऽनस्तमिते'ति श्रुतिः स्तुतिपरा उपासनप्रकरणात्; तस्मादेतेनोक्तन्यायेन वायुरप्युत्पत्तिप्रकरणे व्याख्यात एव।

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

'सदेव सौम्येदमग्र आसीदि'ति सद्रूपात् ब्रह्मण आकाशादीनामुत्पत्तिरिति

१ अन्यथा वियन्मातरिश्वनोः पृथग्योगकरणं न संभवेदिति भावः।

निरूपितं तद्वदिह सर्वकारणस्य सतोऽपि ब्रह्मणः कुतश्चित्कारणादुत्पत्तिरस्ति नवेति संदेहे सति ब्रह्मणोऽप्युत्पत्तिरस्तीत्युच्यते; कथमिति चेत्तत्रोच्यते–यथाकाशस्य वायोः कारणत्वेऽपि 'आकाशः संभूत' इति [1]तदुत्पत्तिः श्रूयते तथा सर्वकार्येभ्यः पूर्वमस्य सतो ब्रह्मणः कारणस्यापि 'असद्वा इदमग्र आसीत्ततो वै सज्जायते'-त्युत्पत्तिश्रवणात् । अत्राडागमाभावश्छांदसः ततोऽसतः सद्रूपं ब्रह्माप्यजायतेति पूर्वपक्षे प्राप्ते सिद्धांतं–ब्रूमः 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्;' 'एको ह वै नारायण आसीत्' 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः, 'आत्मैवेदमग्र आसीत्पुरुषविधः, तर्हि न सन्न चासदुभयं नच कालजवः किमपि न तत्र शास्त्रमवकृप्य शयीत यदा' 'पृथिव्यप्सु लीयते' इत्यारभ्य तमः परे देवे'इत्यादि-श्रुत्यभिहितस्य 'आत्माधारोखिलाश्रय' इति स्मृत्युक्तस्य च सर्वकारणस्य सदेवेत्यव-धारणार्थगतस्य सद्रूपस्य परब्रह्मसंज्ञस्य नारायणस्यैकस्य असंभवोऽनुत्पत्तिः, तदित-रस्य पुरुषप्रकृत्यादिसर्वस्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाद्यनुपपत्तेः संभवोऽभिहितः असद्वा इदमग्र इतिश्रुतौ; ततोऽसच्छब्दवाच्यात्कारणाद्ब्रह्मणः सच्छब्दवाच्यं स्थूलं विश्वरूपं कार्यमजायतेति तात्पर्यार्थात्; ततोऽसतः सद्रूपं ब्रह्मापि जायत इति यदुक्तं तदनर्थमूलमेवेति ।

## तेजोऽतस्तथा ह्याह ॥ १० ॥

अत्र वाय्वादिकार्यं साक्षात् ब्रह्मण उत्पद्यते स्वस्वपूर्वकारणाद्वेति संदेहे सति स्वस्वपूर्वकारणादिति पूर्वः पक्षः। तथाहि आकाशाद्वायुरितिश्रुतेर्वायुराकाशादेवोत्पद्यते न साक्षाद्ब्रह्मणः तथा तेजोऽपि अतो वायोरेव वायोरग्निरित्याह श्रुतिः ।

## आपः ॥ ११ ॥

'अग्नेराप' इतिश्रुतेरापोऽप्यग्नेरेव ।

## पृथिवी ॥ १२ ॥

अद्भ्यः पृथिवीतिश्रुतेरद्भ्य एव पृथिवी, अतो ब्रह्मण एव साक्षान्नोत्पद्यंते भूतानि । ननु 'ता अन्नमसृजंते'ति श्रुत्यंतरेऽन्नशब्दस्य कथं पृथिवीवाचकत्वमिति चेत्तत्राह ।

## अधिकाररूपशब्दांतरेभ्यः ॥ १३ ॥

छांदोग्येऽपि 'ता अन्नमसृजंते'त्यन्नशब्देन पृथिव्येवोच्यते, सर्वमहाभूतसृष्ट्यधि-

---

१ आकाशोत्पत्तिः ।

कारात्। पश्चादपि वाक्यशेषे महाभूतरूपकीर्त्तने 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये'ति रूपकीर्त्तनाच्च समानप्रकरणे 'अग्नेरापः अद्भ्यः पृथिवी'-तिशब्दांतराच्चेति हेतुत्रयात्पृथिव्येवाद्भ्य उत्पद्यते। तदेवंन्यायेन ब्रह्म न सर्वेषां कारणं किंतु परंपरयेति प्राप्ते सिद्धांत उच्यते–

## तदभिध्यानादेव तु तल्लिंगात्सः ॥ १४ ॥

'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इत्यारभ्य वाय्वादीनां पृथिव्यंतानां पूर्वपूर्वकारणादुत्पत्तिर्नोच्यते; 'पृथिव्यप्सु लीयते' इत्यारभ्य 'तमः परे देवे' इति पृथिव्यादितमःपर्यंतानां पूर्वपूर्वकारणे लयोऽपि नोच्यते; किंतु पूर्वपूर्वकारणतमःप्रभृतिविशिष्टाद् ब्रह्मण एवोत्तरोत्तरपुरुषाव्यक्तमहदादिकार्योत्पत्तिरुच्यते, तथा पृथिव्यादिपूर्वपूर्वसर्वविशिष्टे कारणे ब्रह्मण्येव सूक्ष्मरूपेण स्थितिलक्षणो लय उच्यते इति सः परमात्मा नारायण एव सर्वेषामुत्पादको विलापकश्च भवति; कुतः, तल्लिंगात्-तस्य परमात्मन एव लिंगात् सृष्ट्यादिज्ञापनात् तदभिध्यानाच्च। तुशब्दश्चार्थे। तस्य परमात्मनस्तथाविधाभिध्यानाच्चिंतनात्; तथाहि 'तदैक्षत बहु स्यां प्रजायेये'ति 'तत्तेजोऽसृजते'ति तथा 'तत्तेज ऐक्षत बहु स्यां प्रजायेये'ति, 'ता आप ऐक्षंत बह्व्यः स्याम प्रजायेमही'ति 'सोऽकामयत बहु स्यां प्रजायेये'त्यादिषु बहुभवनसंकल्परूपाभिध्यानं तस्यैव श्रूयते; तथाविधमभिध्यानमितरस्यं तु न संभवति; तथाविधं जगत्सर्गादिसामर्थ्यं यत्र कुत्रापि दृश्यते तत्तस्यैवेति निश्चीयते।

## विपर्येण तु क्रमोऽत उपपद्यते च ॥ १५ ॥

तुशब्दोऽवधारणार्थः। इह पूर्वसूत्रे पुरुषाव्यक्तमहदहंकारादीनां निरूपितसृष्टिक्रम उपपद्यते नवेति संदेहः। नोपपद्यते इति पूर्वः पक्षः। तथाहि मुंडकोपनिषदि 'एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च, खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी' इति प्राणादीनां वियदादिभ्यः पूर्वमुत्पत्तिः श्रूयते; अतः 'आत्मन आकाशः संभूत आकाशाद्वायुरि'त्यादिनाऽऽकाशादेः पूर्वोक्तः सृष्टिक्रमो नोपपद्यते; कुतः, तस्य 'एतस्माज्जायते प्राण' इत्यत्र विपर्ययेण प्रतीयमानत्वात् इति प्राप्ते सिद्धांतं ब्रूमः-पूर्वपक्षनिषिद्धः सृष्टिक्रमो युक्त एव, कथमिति चेत्तत्र सूत्रार्थेनोच्यते, विपर्येणोक्तावपि

---

१ एवं न्यायेनोक्तप्रकारेण तद्ब्रह्मेत्यन्वयः। २ चिदचिद्वस्तुनस्तु। ३ चिदचिद्वस्तुन्यपि। ४ चिदचिदंतर्यामिशक्तिमतः परमात्मन एवास्तीति। ५ आकाशादिसृष्टिक्रमस्य। ६ प्रकृतिपुरुषप्रधानमहदहंकारादीनां पारंपर्यसृष्टिक्रमाद्वैपरीत्येन सृष्टिकथनेऽपि।

क्रमो न भ्रश्यते एव;कुतः,'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागि'ति प्राणादीनां भौतिकत्वश्रवणात्, अतो भूतेष्वंतर्भावान्न पृथक् क्रमापेक्षोपपद्यते, तथा ऐकत्र यथोक्तस्यान्यत्रान्यथोक्तस्यापि पुरुषाव्यक्तमहदहंकारादेः सृष्टिक्रमे विरोधाभावश्चाप्युपपद्यते ततः पूर्वोक्तक्रमे न विरोधः। पुनराशंक्य परिहरति—

## अंतरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात् ॥१६॥

विज्ञानसाधनत्वेन इंद्रियाणि विज्ञानमित्युच्यते। 'एतस्माज्जायते प्राण' इति वाक्यमाकाशतन्मात्रपंचकयोरंतराले विज्ञानमनसी क्रमेणोत्पद्येते इत्येतद्बोधकं 'ततो विज्ञानमनसी' इत्यत्र विज्ञानशब्दः प्राणस्यापि प्रदर्शनार्थः,'पृथिव्यप्सु लीयते'इत्यारभ्य 'वायुराकाशे लीयते आकाश इंद्रियेषु इंद्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ भूतादिर्महति महानव्यक्ते अव्यक्तमक्षराख्ये पुरुषे अक्षरं तमसि तमः परे' इति प्रलयक्रमप्रत्यभिज्ञानरूपात्तल्लिंगात् उत्पत्तिज्ञापनात् 'एतस्माज्जायते प्राण' इत्येतदपि वाक्यं न श्रुत्यंतरविरुद्धम्; किंतु पारंपर्यक्रमपरमिति चेन्न;कुतः, अविशेषात्'एतस्माज्जायते प्राण' इत्यत्र श्रूयमाणस्यैतच्छब्दवाच्यस्य नारायणस्य प्राणादिपृथिव्यंतेषु सर्वेषु प्रत्येकमंतर्यामित्वेनान्वयस्य विशेषाभावात्, अतः पुरुषप्रकृतिप्रभृतीनामाकाशप्रभृतीनां च प्राणप्रभृतीनां च तेजःप्रभृतीनां च सर्वेषां नारायण एव कारणम्; तत्र तत्रांतर्यामित्तया तस्य प्रवेशात्, तत्तद्वाचका ये शब्दास्ते सर्वे सकलशरीरिणो नारायणस्यैव वाचका इति निर्णीयते।

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥ १७ ॥

पूर्वसूत्रे पुरुषप्रकृत्याकाशादिशब्दवाच्यत्वं ब्रह्मणः प्रतिपादितम्; तत्र गौणत्वं मुख्यत्वं वेति शंकानिरासार्थस्तुशब्दः। चेतनाचेतनात्मकचराचरवस्तूनां व्यपाश्रयःसंबंधो विद्यते यस्य चराचरसंबंधी तद्व्यपदेशः स्थावरजंगमवाचिशब्दः चेतनाचेतनांतर्यामिणि ब्रह्मण्यभाक्तः स्यात् गौणो नास्ति किंतु मुख्य एव; कुतः, तद्भावभावित्वात् पुरुषप्रकृतिवियत्प्राणतेजःप्रभृतिष्वंतर्यामितया ब्रह्मभावभावित्वात् सर्वेषां चराचरवस्तूनां ब्रह्मशरीरतया ब्रह्मप्रकारत्वात् चराचरवाचिशब्दानां सर्वात्मनि ब्रह्मण्येव पर्यवसाना-

---

१ तस्माद्वा एतस्मादित्यादितैत्तिरीयश्रुतौ। २ एतस्माज्जायते इत्यादिमुंडकश्रुतौ। ३ श्रुत्यंतराविरुद्धतयेति शेषः। ४ आकाशतन्मात्रपंचकांतराले विज्ञानमनसोरुत्पत्तावपि तत्तच्छरीरकपरब्रह्माभिधायित्वादाकाशेंद्रियमनःप्राणानां सर्वेषां साक्षादुत्पत्तिपरत्वाविशेषादित्यर्थः।

दभाक्तत्वं यथा देवमनुष्यादिशरीरवाचिशब्दानां शरीरिणि क्षेत्रज्ञसमुदाये पर्यवसायित्वेन मुख्यत्वं तथेति संबंधः।

## नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

पूर्वसूत्रे प्रकृतिवियत्तेजःप्रभृतीनां स्थूलतया ब्रह्मण उत्पत्तिरुक्ता तथा जीवकलापोऽपि ब्रह्मणः समुत्पद्यते नवेति संदेहः। समुत्पद्यते इति पूर्वः पक्षः। 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं, तर्हि न सन्न चासदुभयं नच कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदे'त्यादिश्रुतिषु प्राक्सृष्टेर्ब्रह्मैकत्वावधारणात् सदसतोर्निषेधाच्च; अतः सृष्टिकाले ब्रह्मण उत्पद्यत एव जीवकलापः। विस्फुलिंगदृष्टांतोऽपि जीवोत्पत्त्यनुगुणः; श्रूयते 'यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति एवमेवैतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानो व्युचरंती'ति। तस्माद्यथाग्नेर्विस्फुलिंगा जायंते तथा ब्रह्मण आत्मानोऽपि जायंते इत्येवं प्राप्ते ब्रूमः-आत्मकलापो नोत्पद्यते 'न जायते म्रियते वा विपश्चिदि'तिश्रुतेः, ताभ्यः 'नित्यो नित्यानां चेतनश्चेतनानां,'ज्ञाज्ञौ द्वावजावीशानीशौ,'अजो ह्येको जुषमाणोऽनुशेते,' इत्यादिश्रुतिभ्यः,'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' इति,'अंतवंत इमे देहा नित्यस्योक्ताः शरीरिण' इति, अपरिमिता ध्रुवास्तनुभृत' इत्यादिस्मृतिभ्यश्च नित्यत्वानित्यत्वाजत्वावगतेश्च सृष्टेः प्राक् ब्रह्मण एकत्वावधारणं तच्छरीरभूतस्य क्षेत्रज्ञसमुदायस्याचिद्वस्तुनश्च नामरूपविभागाभावात् न जीवादिस्वरूपासद्भावेन। विस्फुलिंगश्रुतिश्च तेषां नामरूपसमुत्पत्तिबोधनपरा नतु जन्मपरा, अन्यथा त्वकृताभ्यागमकृतविनाशादिदोषप्रसंगः। तस्मात् ब्रह्मणो न जायत एव जीवसमुदायः।

## ज्ञोऽत एव ॥१९॥

पूर्वत्र नित्यतया जीवः सिद्धः। पुनरस्य स्वाभाविकं ज्ञानमस्ति नवेति संदिह्यते; एवं सति पूर्वः पक्षः-स्वाभाविकं ज्ञानधर्मित्वं नास्तीति; 'ज्ञाज्ञौ द्वावि'ति जीवकलापस्याज्ञत्वमेव हि श्रूयते; तस्मादसौ जीवकलापोऽज्ञ एव चैतन्यमात्रस्वरूपः अनादिप्रकृतिसंबंधात्। प्रतिसर्गं हरिणा यथाकर्मप्रापितकरणकलेवरादिरयं देवोऽहं मनुष्योऽहं देहोऽहमिति शरीरजन्याहंकारवद्धः ममायं पिता ममेयं माता ममेदं पुत्रधनकलत्रादीति ममत्वबद्धश्च सन् संसरति। संसारदशायां जीवकलापस्य कर्मजन्यज्ञानात् स्वतो ज्ञातृत्वं नास्त्येव; अन्यथा कुतोऽस्य मोक्षोपदेश इत्येवं प्राप्ते ब्रूमः–'ज्ञातैवाय-

मात्मा;'अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैतान् कामान्पश्यन् रमते न पश्यो मृत्युं पश्यति द्रष्टा श्रोता घ्राता रसयिते'ति,

'इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते। एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः'॥

इत्यादिश्रुतिस्मृतिभ्यो बद्धमुक्तोभयावस्थोऽस्ति। अस्य विज्ञानमात्रव्यपदेशस्तु स्वरूपानुबंधिज्ञानधर्मयुक्तत्वात्;अतः 'यो विज्ञाने तिष्ठन् मनोमयादन्योंऽतर आत्मा विज्ञानमय' इति ज्ञानधर्मयुक्तत्वश्रवणात् अयं ज्ञ एव ज्ञातैव। नन्वेवं च सति सुषुप्तिमूर्छाप्रलयेषु स्थावरभावे चास्य कथं ज्ञानाभाव इति चेत्तत्रोच्यते--कर्मणा कालेन चास्य ज्ञानं तदानीं संकुचितमनभिव्यक्तमपि सर्गजागरादौ विकसितमभिव्यज्यत इति न विरोधः। यदुक्तमनादिप्रकृतिसंबंधादित्यारभ्य संसारदशायामस्य जीवकलापस्य कर्मजन्यज्ञानात्स्वतो ज्ञातृत्वं नास्तीति तत्सत्यम्; अनादिप्रकृतिसंबंधेनानादिकवलीकृतस्वाभाविकस्वज्ञानधर्मोऽयं प्राकृतेंद्रियसंबंधाद्धोक्ता सुखदुःखयोर्ज्ञाता शरीराहंकारमात्रविश्रांतः संसरति जीवः। यदा चास्य ब्रह्मज्ञानोपासनाभ्यासान्मलत्रयसंबंधोऽपैति तदासौ ब्रह्मसदृशोऽभिव्यक्तनिरतिशयज्ञानधर्मो मुक्त इत्युच्यते। किंच 'निरंजनः परमं साम्यमुपैती'ति परमात्मनः पार्षदत्वरूपं सर्वोत्कृष्टं साम्यमस्य जीवकलापस्य श्रूयते। ज्ञाज्ञावित्यत्र हि संसारिणः जीवस्याज्ञत्वं किंचिद्ज्ञत्वमेव। अत्र नञोऽल्पार्थत्वात् नारायणस्य ज्ञत्वं सदा सर्वज्ञत्वमुच्यते; अतः संसारे किंचिज्ज्ञत्वं मुक्तौ सर्वज्ञत्वमिति ज्ञातैवात्मा।

## उत्क्रांतिगत्यागतीनाम् ॥ २० ॥

पूर्वत्र ज्ञातृत्वेन सिद्धस्यात्मन उत्क्रांत्यादिदर्शनादणुत्वमवगम्यते, तद्युज्यते नवेति संदेहः। नास्याणुत्वमुपपद्यते। 'स वा एष महानज आत्मे'ति जीवस्य व्यापकत्वपर्यायरूपविभुत्वावगमादयमात्मा विभुरिति प्राप्ते निरूप्यते-अणुरेवायमात्मा उत्क्रान्तिगत्यागतीनां श्रुतेः 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य इत्युत्क्रांतिः श्रूयते'ये वै के चास्माल्लोकात्प्रयंति चंद्रमसमेव ते सर्वे गच्छंतीति गतिः, तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण'इत्यागतिः। विभुत्वे जीवस्यैताः उत्क्रांतिगत्यागतयो नोपपद्येरन्। यद्यपि शरीरवियोगरूपोत्क्रांतिर्विभुत्वेऽप्यात्मनः स्यात् तथापि गत्यागती नैवमित्याह—

## स्वात्मना चोत्तरयोः ॥ २१ ॥

उत्तरयोर्गत्यागत्योः स्वात्मनैव संपाद्यत्वादणुरयमात्मा; यदुक्तं 'महानज आत्मे'ति

तन्नारायणप्रकरणान्नैतद्विषयमिति वक्ष्यति। तस्मादणुरेव जीवात्मा। संदिह्य परिहरति-

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥२२॥**

अतच्छ्रुतेरनल्पत्वश्रुतेः "'योऽयं विज्ञानमय' इति जीवात्मानं निरूप्य 'स वा एष महानज आत्मे'ति महत्त्वश्रवणान्नाणुर्जीवात्मेति चेन्न, इतराधिकारात् 'यस्यानुवित्तः प्रतिबुद्ध आत्मे'ति जीवात्मेतरपरमात्मन एवाधिकारात् प्रकरणात्।

**स्वशब्दोन्मानाभ्यां च ॥ २३ ॥**

स्वशब्दात् 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पंचधा संविवेशे'ति श्रुतावात्मवाचकाणुशब्दात् वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः संविज्ञेय इति 'आराग्रमात्रो ह्यवरो हि दृष्ट' इति उन्मानाच्च अणुरात्मा। अणुसदृशं वस्तूदाहृत्य तन्मानत्वप्रदर्शनमुन्मानम्। अणुत्वेऽस्य सकलदेहव्यापिवेदनानुभवः कुत इत्यत आह—

**अविरोधश्चंदनवत् ॥ २४ ॥**

यथा चंदनबिंदुरेकदेशस्थोऽपि सकलदेहव्यापिसुखं जनयति तद्वदात्मा च देहैकदेशस्थोऽपि सकलशरीरस्थे सुखदुःखे अनुभवतीत्यविरोधः। पुनराशंक्य परिहरति-

**अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥**

अवस्थितिवैशेष्यात् चंदनविन्दोर्देहैकदेशस्थितिविशेषत्वात्तथात्वं संभवति, जीवात्मनस्तु न तथात्वमिति चेन्न, आत्मनोऽपि तदभ्युपगमात् 'हृदि ह्ययमात्मास्ति योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिःपुरुष' इति श्रवणात् 'हृत्स्थोऽणुः सूक्ष्मचिद्रूपो ज्ञाता व्याप्याखिलां तनुं, ज्ञानशक्त्या स्थितो जीवो ज्ञेयोऽच्छेद्यादिलक्षण' इति नारायणमुनिस्मरणाच्च। जीवात्मनो देशविशेषस्थितिख्यापनाय चंदनदृष्टांतः प्रदर्शितः। पुनर्जीवात्मनः प्रकारान्तरेण शरीरे व्याप्तिमाह—

**गुणाद्वा लोकवत् ॥ २६ ॥**

वाशब्दो देहव्याप्तौ प्रकारान्तरं बोधयति। गुणात् जीवात्मा स्वज्ञानगुणेन सम-

---

१ जीवविषयम्। २ वाजसनेयके कतम आत्मेति प्रश्ने योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुष इति। ३ यद्यप्युपक्रमे जीवः प्रस्तुतस्तथापि यस्यानुवित्तः प्रतिबुद्ध आत्मेति मध्ये परः प्रतिपाद्यते इति तत्संबंधीदं महत्त्वं न जीवस्य। ४ सकलदेहव्यापिसुखजनकत्वम्। ५ देहैकदेशविशेषे स्थित्यभ्युपगमात्।

स्तत्स्वदेहं व्याप्यानुभवति आलोकवत्; आलोकः स्वप्रकाशस्तेन यथैकदेशस्था दीपरवि-मणिप्रभृतयो व्याप्य ब्रह्मांडं गेहं च प्रकाशयंति तद्वत्। तथाहि पंचरात्रे 'स्वरूपतोऽणु-भूतोऽपि प्रकाशेन शरीरगः। एकदेशस्थितो वेति हरिचंदनबिंदुवत् ॥ प्रभया भास्करो यद्वद्ब्रह्मांडं व्याप्य तिष्ठति। एकदेशस्थितो दीपः कृत्स्नं गेहं प्रकाशते' इति॥ तथा च स्मर्यते—

'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारते'ति ॥

## व्यतिरेको गंधवत्तथा च दर्शयति ॥ २७ ॥

पुष्पादिरूपेण परिणताया गंधवत्याः पृथिव्याः सकाशात् पृथक् स्थितेन पुंसा-ऽऽघ्रातप्रसृतगंधगुणवत् घटादिकं जानामीति जीवस्य स्वतो दूरे प्रसृतेन ज्ञानगुणेन घटाद्युपलब्धेः ज्ञानजीवात्मनोः पृथिवीगंधवद्गुणगुणिभावेन व्यतिरेकोऽस्तीति [1]दर्शयति' च श्रुतिः 'व्यतिरेकं जानात्येवायं पुरुष' इति।

## पृथगुपदेशात् ॥ २८ ॥

ज्ञानं जीवात्मनः पृथगुपदिश्यते, अतो नित्यज्ञानगुणक आत्मा सिद्धः। तथाहि श्रूयते 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति। ननु ज्ञानगुणकत्वे कथं [2]ज्ञान-मात्रत्वव्यपदेश इत्यत आह—

## [3]तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

ज्ञानगुणसारत्वादात्मनो ज्ञानव्यपदेशः, न ज्ञानमात्रत्वात् प्राज्ञवत्; यथा प्राज्ञस्य 'यः सर्वज्ञः सर्वविदि'ति श्रूयमाणस्य विपश्चितोऽपि ज्ञानगुणसारत्वात् 'सत्यं ज्ञानमनंतमि'ति [4]तद्व्यपदेशः। ततो जीवात्मनो ज्ञानमात्रत्वव्यपदेशो दोषो न भवतीति पुनरुपपत्तिमाह—

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

[5]यावदात्मभावित्वात्-ज्ञानस्य यावदात्मस्वरूपानुबंधित्वात् तेन ज्ञानेन तद्व्यपदेशो न दोषः कुतः बलीवर्दादिषु तद्दर्शनात्; यावत्स्वरूपानुबंधिधर्मत्वेन श्वेतपीतरक्तकर्बुरादि-

---

१ श्रुतिरेव तथा व्यतिरेकं दर्शयतीत्यर्थः। २ यो विज्ञाने तिष्ठन्विज्ञानं यज्ञं तनुते ज्ञा-नस्वरूपमत्यंतनिर्मलमित्यादिज्ञानमेवात्मेति व्यपदेशः। ३ स ज्ञानरूपो गुण एव सारः प्रधानं यस्य स तस्य भावस्तत्वं तस्मात्। ४ ज्ञानव्यपदेशः। ५ यावत्कालमारभ्येदमात्मनः स्वरूपं भवति तावत्कालमारभ्येदं ज्ञानमात्मस्वरूपानुयुक्तं तद्वत्त्वादित्यर्थः।

गुणयुक्तानां बलीवर्दानां श्वेतोऽयं पीतोऽयं रक्तोऽयं कर्बुरश्चायं बलीवर्द इति व्यपदेशो दृश्यते, अत आत्मनः स्वरूपानुबंधिज्ञानधर्मेण ज्ञानमात्रो जीव इति व्यपदेशः। सुषुप्त्यादिष्वसतो ज्ञानस्य यावदात्मभावित्वं कथमित्याशंक्याह—

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

सुषुप्त्यादिषु सतो ज्ञानस्यानभिव्यक्तस्यापि जागरितादावभिव्यक्तिसंभवात् तस्य स्वरूपानुबंध्येव ज्ञानम्; यथा पुरुषेष्वसाधारणसप्तमधातोर्बाल्येऽपि सतो युवत्वेऽभिव्यक्तिस्ततो न ज्ञानस्यात्मस्वरूपानुबंधित्वे दोषः। इत्थमात्मनोऽणुत्वं ज्ञातृत्वं चोक्त्वा सांप्रतं पक्षांतरे दूषणं पठति—

## नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥

अन्यथा ज्ञप्तिमात्रस्वरूपात्मवादे-हेत्वंतरायत्तज्ञानसर्वगतात्मवादे चैवं दोषः-ज्ञप्तिमात्रस्वरूपात्मवादे तावद्दोषं दर्शयति-आत्मनो ज्ञप्तिमात्रस्वरूपत्वे चिदचिदात्मके लोके वर्तमानस्य तस्य नित्यं सर्वदैवोपलब्धिप्रसंगः स्यात्-सर्वदैव ज्ञानसंभवो भवेत् संकोचाभावात्, तथापि सर्वदानुभूतत्वाद्विद्यमानस्य ज्ञानानुपलब्धिप्रसंगस्यापि सा ज्ञप्तिरेव स्वयं नित्यं हेतुर्भवेत्, ज्ञाने विद्यमाने सति हेत्वंतरेण ज्ञप्तेर्निवारणसंभवात्। एवं च सति ज्ञप्तेरेव ज्ञप्त्यनुपलब्धिहेतुत्वमभिमतं वाऽथवा युगपद्विरुद्धकार्योत्पादनायोगात् सदैव ज्ञानोपलब्ध्यनुपलब्धी विरुध्येते। तस्मादुपलब्धेरनुपलब्धेर्वा कश्चिदन्योऽदृष्टरूपो हेतुः कल्प्यते चेत्तदा तयोर्मध्येऽन्यतरनियमः स्यात्। तथाहि-अदृष्टं ज्ञप्तिमात्रत्वस्य नित्योपलब्धेरेव हेतुः स्यात्, नित्यानुपलब्धेरेव वा हेतुः स्यात् नतूभयोः, कुतः, उभयधर्मयोर्युगपदेकत्र विरोधित्वात्; एवमन्यतरनियमे सत्यपि दूषणं तद्यथा-अदृष्टस्य ज्ञप्तिमात्रस्वरूपात्मनित्योपलब्धिहेतुत्वांगीकारेऽपि तस्य पुण्यपापानुसंधानजनितत्वाद्विरोधापत्तिः। कथं यद्यदृष्टं नित्यं केवलपुण्यानुसंधानजनितं तदा तु तस्य ज्ञप्तिमात्रस्वरूपात्मनित्योपलब्धिहेतुत्वप्रसंगः स्यात्, परंतु तन्न संभवति; देशकालादिवैषम्येण सततं तादृक्कर्मानुष्ठानायोगात्। यदि त्वदृष्टं केवलपापानुसंधानजनितं तदाऽदृष्टस्य ज्ञप्तिमात्रस्वरूपात्मनित्योपलब्धिहेतुत्वांगीकारपक्षेऽपि तस्य ज्ञप्तिमात्रस्वरूपात्मनित्या-

---

१ चकारादज्ञानवदात्मनोऽपि स्वप्रकाशत्वेन ज्ञानमिति व्यपदेशे न दोष इति समुच्चिनोति।

२ पुंस्त्वादिवत् यथा पुंस्त्वाद्यसाधारणस्य धातोर्बाल्याद्यवस्थायां सतोऽप्यनभिव्यक्तस्य युवत्वेऽभिव्यक्तौ पुंसस्तद्वत्ता न कादाचित्का भवति; सप्तधातुमयत्वं हि शरीरस्य स्वरूपानुबंधितःसप्तधा-तु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरमिति शरीरस्वरूपव्यपदेशात्।

नुपलब्धिहेतुत्वप्रसंग एव स्यान्नतु ज्ञप्तिमात्रस्वरूपात्मनित्योपलब्धिप्रसक्तिः। एवमेवादृष्टस्य ज्ञप्तिमात्रस्वरूपात्मनित्यानुपलब्धिहेतुत्वांगीकारेऽपि तस्य पुण्यपापानुसंधानजनितत्वाद्विरोधापत्तिः। कथं यद्यदृष्टं नित्यं केवलपापानुसंधानजनितं तदा तु तस्य ज्ञप्तिमात्रस्वरूपात्मनित्यानुपलब्धिहेतुत्वप्रसंगः स्यात् परंतु तन्न संभवति, असद्देशकालादिवैषम्येण निरंतरं पापकर्मानुष्ठानायोगात्। यदि त्वदृष्टं केवलपुण्यानुसंधानजनितं तदा अदृष्टस्य ज्ञप्तिमात्रस्वरूपात्मनित्यानुपलब्धिहेतुत्वांगीकारपक्षेऽपि तस्य ज्ञप्तिमात्रस्वरूपात्मोपलब्धिहेतुत्वप्रसंग एव स्यान्नतु ज्ञप्तिमात्रस्वरूपात्मनित्यानुपलब्धिहेतुत्वप्रसक्तिः। एवमन्यतरनियमे दूषणत्वात् सर्वदा ज्ञप्तिमात्रस्वरूपात्मनो नियमाभाव एवोपपन्नः। हेत्वंतरायत्तज्ञानसर्वगतात्मवादेऽपि स एव दोषः। तथाहि सर्वेषामात्मनां सर्वगतत्वे सति ज्ञानहेतूनां मनःप्रभृतीनामदृष्टहेतूनां च कर्मणामपि सर्वसाधारणतया संयोगेन संकोचाभावाद्धेतोः आत्मनि नित्यं सर्वगतत्वोपलब्धिप्रसंगः स्यात्; तथात्वेऽपि सर्वदानुभूतत्वाद्विद्यमानायाः सर्वगतत्वानुपलब्धेरपि सर्वगतत्वमेव स्वयं नित्यं हेतुः स्यात्, तस्मिन्नित्यं विद्यमाने सति हेत्वंतरेणापि तन्निवारणासंभवात्। एवं च सति सर्वगतत्वस्यैव सर्वगतत्वानुपलब्धिहेतुत्वमभिमतम्; अथवा युगपद्विरुद्धकार्योत्पादनायोगात् सदैव सर्वगतत्वोपलब्ध्यनुपलब्धी विरुद्ध्येते। तत उपलब्धेरनुपलब्धेर्वा किंचिन्मनःसंयोगादिरूपमदृष्टरूपं च हेत्वंतरं कल्प्यते चेत्तदा तयोर्मध्येऽन्यतरनियमः स्यात्। तथाहि-सर्वात्मनां सर्वगतत्वेन स्वस्वधारणादृष्टानां सर्वसाधारणत्वाददृष्टं सर्वात्मनि सर्वगतत्वस्योपलब्धेरेव नित्यं हेतुः स्यात्, अनुपलब्धेरेव वा नित्यं हेतुः स्यात् नतूभयोः, कुतः, उभयधर्मयोर्युगपदेकत्र विरोधित्वात्; एवमन्यतरनियमेन सर्वदा सर्वगतत्वस्यानियम एव दोष इति अत्र दूषणांतरं चोपपद्यते। किं तत्-आत्मनः सर्वगतत्वे अदृष्टहेतूनां शुभाशुभकर्मणामपि सर्वसाधारणत्वापत्त्या सर्वात्मनां स्वस्वासाधारणादृष्टेनोच्चावचशरीरोपलब्धिव्यवस्थापि समूलमुत्पाटिता। किंच यस्याशुभादृष्टापत्तौ शुभादृष्टवति प्रविश्य स शुभादृष्टमेवानुभविष्यति नाशुभादृष्टम्; अतः पूर्वोक्तमात्मनोऽणुत्वं ज्ञातृत्वमेव समंजसम्।

## कर्त्ता शास्त्रार्थवत्त्वात् ॥३३॥

ज्ञातृत्वमणुत्वं च निरूपितमात्मनः कर्तृत्वमस्ति नवेति संदेहः। अकर्तुरात्मनः कर्तृत्वं न संभवति 'अहंकारविमूढात्मा कर्ताहमिति मन्यते' 'नान्यं गुणेभ्यः कर्तारमि'त्यादिषु प्रकृतिगुणानामेव कर्तृत्वस्मरणात्। गुणात्मिकायाः प्रकृतेस्तदुत्पन्नबुद्धेश्च

वा कर्तृत्वमुचितमकर्तुरात्मनस्तु तन्नोपपन्नमिति पूर्वः पक्षः। सिद्धांतस्तु आत्माकर्तैव; कुतः, शास्त्रार्थवत्त्वात् ज्ञातुस्तस्य स्वर्गमोक्षोपायविधिबोधकशास्त्राणामर्थवत्त्वात्प्रयोजनवत्त्वात्;नत्वचेतनानां बुद्धिविशिष्टगुणानां तथाभूतायाःप्रकृतेश्च कर्तृत्वमुचितम्।'यजेत स्वर्गकामः''मुमुक्षुर्ब्रह्मोपासीते'ति शास्त्रशिक्षा चैतन्यस्य ज्ञातुरेव संभवति नत्वचेतनस्य। अन्यथा शास्त्रस्य वैयर्थ्यापत्तिः स्यात्। 'नान्यं गुणेभ्यः कर्तारमि'त्यादिवचनवृंदं कर्तुर्जीवात्मन उदासित्वजनकत्वेन गुणविमुक्तिबोधनपरं नतु तस्याकर्तृत्वबोधनपरम्।

## उपादानाद्विहारोपदेशाच्च ॥ ३४ ॥

'एवमेवैष एतान्प्राणान् गृहीत्वा स्वशरीरे यथाकामं परिवर्त्तत' इति उपादानविहारोपदेशाभ्यां चायं कर्तैव। यदुक्तं बुद्धिप्रकृत्योरेव कर्तृत्वमिति तत्र बुद्धेः कर्तृत्वपक्षं दूषयति—

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥

'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे'त्यादिना यज्ञादिक्रियायां कर्तृत्वव्यपदेशाच्चात्मैव कर्ता। विज्ञानशब्देन बुद्धेर्व्यपदेशो नात्मन इति चेन्न; तथा सति 'विज्ञानेन यज्ञं तनुत' इति निर्देशविपर्ययः स्यात्। अन्यत्र हि बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते। तथाहि-'तदेषां प्राणानां विज्ञानेन विज्ञानमादाये'ति। अतो बुद्धेः करणत्वात्कर्तृत्वं नास्तीति। प्रकृतेः कर्तृत्वपक्षं दूषयति–

## उपलब्धिवदनियमः ॥ ३६ ॥

प्रकृतेः कर्तृत्वे त्वात्मनो न भोक्तृत्वं, तस्याः सर्वजीवसाधारणत्वेन पूर्वोक्तोपलब्ध्यनियमवत्फलानियमः स्यात्।

## शक्तिविपर्ययात् ॥ ३७ ॥

प्रकृतेः कर्तृत्वे कर्तुरेव भोक्तृत्वमिति सैव भोक्त्री स्यात्, ततश्चात्मनो भोक्तृत्वशक्तेर्विपर्ययो हानिः स्यात्; अतो न प्रकृतेः कर्तृत्वमुचितम्।

---

१ कर्तृत्वम्। २ आत्मनः। ३ अचेतनायाः। ४ अचेतनस्यापि कर्तृत्वांगीकारे। ५ चेतनार्हकर्तृत्वबोधकतया विहितस्य 'यजेतोपासीते'त्यादिरूपस्य। ६ श्रुत्यंतरे। ७ तस्याः सर्वपुरुषसाधारणत्वात्सर्वाणि कर्माणि सर्वेषां भोगाय स्युरित्यर्थः। ८ भोक्तृत्वरूपायाः।

## समाध्यभावाच्च ॥ ३८ ॥

किंच प्रकृतेरेव कर्तृत्वे 'प्रकृतेरन्योऽस्मी'ति' जीवस्य मोक्षसाधनभूतज्ञानजन्यसमाध्यभावप्रसंगाच्चाकर्तृत्वं नास्ति; ततो जीवात्मैव कर्ता। समाधिप्रसंगे त्वकर्तृत्वं संभवेदेव।

## यथा च तक्षोभयथा ॥ ३९ ॥

जीवात्मनः कर्तृत्वे भोगवांछया कर्म करोति जीवोऽन्यथा[२] न करोतीत्युभयव्यवस्था। यथा च तक्षा शिल्पी स्वेच्छया कार्यं करोति न करोति च तथेति। बुद्धेरपि इच्छासंभवान्न पूर्वोक्त[३]व्यवस्थेति चेन्नैवं वाच्यम्; इच्छायाश्चेतनधर्मत्वात्। तस्मादात्मनः कर्तृत्वं न बुद्धेः, नापि प्रकृतेरिति निर्णयः।

## परात्तु तच्छ्रुतेः ॥ ४० ॥

ज्ञातृत्वं कर्तृत्वं च प्रतिपादितमात्मनः। तत्कर्तृत्वं स्वायत्तं[४] नारायणायत्तं वेति संदेहः। स्वायत्तमिति प्राप्तम्। अन्यथा[५] कर्मस्विष्टानिष्टरूपेषु व्यापारयन् जीवं नारायणो वैषम्यादिदोषभाजनं स्यात्। किंच जीवप्रवृत्तेर्नारायणायत्तत्वे तस्य[६] कर्तृत्वाभावाद्विहितप्रतिषिद्धकर्मवैयर्थ्यं च स्यात्। तस्माज्जीवस्य स्वायत्ता प्रवृत्तिरिति प्राप्ते ब्रूमः—नारायणायत्तमेव जीवस्य कर्तृत्वं न स्वायत्तम्; तज्जीवात्मनः कर्तृत्वं तु परात् क्षराक्षरपरतयाभिहितात्परमात्मन एव सिद्ध्यति। कुतः, 'अंतःप्रविष्टः शास्ता जनानाम्' 'यो भूतान्यंतरो यमयति य आत्मानमंतरो यमयती'त्यादिश्रुतेः। यदुक्तं नारायणस्य जीवं प्रवर्तयतो वैषम्यादिकमस्य जीवस्य च विधिप्रतिषेधवैयर्थ्यमिति तत्राह—

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४१ ॥

जीवः स्वेच्छया प्रवृत्तिनिवृत्तिहेतुं यत्नं करोति। स्वकर्मपाकवशेन[७] जीवकृतप्रयत्नं प्रवृत्तिनिवृत्तिहेतुमपेक्ष्य तदनुमतिदानेन[८] परः प्रवर्तयतीति विधिनिषेधावैयर्थ्यं निग्रहानुग्रहादिभ्योऽवगम्यते। यथा स्वमस्तकाद्यारोपितगुरुतरदार्वादिहरणं बालः

---

१ अन्यसितुरात्मनो ज्ञानाभ्यासकर्तृत्वाभावान्मुक्त्युपायभूतज्ञानोत्पन्नस्य समाधेर्ध्येयस्वरूपे चित्तैकाग्र्यस्य। २ भोगवांछाभावे। ३ शिल्पिदृष्टांतेन जीवात्मन एव कर्तृत्वाकर्तृत्वव्यवस्था। ४ जीवाधीनम्। ५ स्वाधीनाभावे। ६ जीवस्य। ७ स्वस्य जीवात्मनो यानि कर्माणि शुभाशुभानि तेभ्यो जनितानि यान्यदृष्टानि तेषां पाकवशेन विशेषकालागमनवशेन। ८ विधेयाविधेयकर्मसु प्रवृत्तिनिवृत्तिहेतुजीवकृतप्रयत्नानुकूल्येन यन्मतिदानं बुद्धिप्रेरणं तेनेत्यर्थः।

स्वमस्तकाद्यारोपकमबलसहायः कुर्वन्नपि निर्बाधसवाधतया तद्भारवहनरूपे स्वप्रयत्ने विधिनिषेधयोग्यो भवति एवं जीवः स्वेंद्रियांतःकरणादिप्रकाशकांतर्यामिसहायः प्रवर्त्तमानोऽपि स्वयं विधिनिषेधयोग्यो भवति। अतो जीवकृतप्रयत्नापेक्षत्वात्कर्मसु जीवस्य करणप्रकाशकत्वेन प्रवर्त्तकः परो न वैषम्यभाक्। जीवस्यापि स्वाधीनप्रवृत्तिसद्भावात् विधिनिषेधादिवैयर्थ्यं च न संभवतीति सिद्धमिति सूत्राशयः। अथ सूत्रपदार्थो वर्ण्यते—जीवात्मना कृतो यः प्रयत्न उद्योगस्तमपेक्षते इति कृतप्रयत्नापेक्षः परस्तु जीवप्रयत्नानुगुणबुद्धिप्रदाने वैषम्यभाग् न भवति। कुतः, विहितप्रतिषिद्धावैयर्थ्यादिभ्यः—तथा सति वेदविहितप्रतिषिद्धानां जीवकर्मणां वैयर्थ्यं न स्यात्, आदिशब्दग्राह्याणां तत्कर्मफलभूतानामनुग्रहनिग्रहादीनां चापि वैयर्थ्यं न स्यात्। अतः 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते य एष वासाधु कर्म कारयति तं यमधो निनीषते' इति श्रुत्यभिहिता जीवानामुन्निनीषा अधोनिनीषा च परस्य नोपपद्यते; अतोऽस्याः श्रुतेरर्थस्तूक्तसूत्रव्याख्यानुसारेण विधीयते—यो नारायणः यं साधु कर्म कर्तुमिच्छंतं जनं एभ्यो निकृष्टेभ्यो लोकेभ्यः ऊर्ध्वं नेतुमिच्छति स एष जनेंद्रियांतःकरणप्रकाशकांतर्यामी तं यदा साधु कर्म कर्तुमुद्यंतं तदैव साधु कर्म कारयति, तत्प्रकाशितेंद्रियांतःकरणो जनः साधु कर्म तु स्वयमेव करोति तत्प्रकाशितत्वादेष कारयतीत्युक्तम्; यमसाधु कर्म कर्तुमिच्छंतं जनं उत्कृष्टलोकेभ्योऽधो निनीषते अधो नेतुमिच्छति एष च तमसाधु कर्म कर्तुमुद्यंतं जनं यदा तदैवासाधुकर्म कारयति पूर्ववत्कारयतीत्यस्यार्थानुसंगतिः। अन्यथाव्याख्याने कृते सति अस्याः 'साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा पापः पापेन कर्मणे' त्यादिश्रुत्यंतरस्य च परस्परव्याघातप्रसंगापत्तिः।

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४२ ॥

नित्यो ज्ञाताऽणुः कर्त्ता नारायणसहायापेक्षप्रवृत्तिर्जीव इति पूर्वत्र निरूपितम्; स इह नारायण[1] एव किंवा तदंशभूत इति संशये नारायण इति पूर्वः पक्षः। नारायण एव बहुविधोपाधिवशात् जीवभावमुपगतो दृश्यते; यथैक आकाशो घटाद्युपाधिवशा-

१ एष ह्येव साधुकर्मेत्यादिकायाः श्रुतेः। २ ननु तदनन्यत्वमारंभणशब्दादिभ्यः अधिकं तु भेदनिर्देशादित्यत्रैवायमर्थो निर्णीतः, सत्यं स एव नानात्वैकत्वश्रुतिप्रतिपत्त्याक्षिप्य जीवस्य ब्रह्मांशत्वोपपादनेन विशेषतो निर्णीयते।

न्नानाकारो दृश्यते परिच्छिन्नश्च। तथाहि श्रुतिरयमात्मा ब्रह्मेति वदति, तस्मान्नारायण एवाज्ञानाज्जीवभावमुपगत इति प्राप्ते सिद्धांतं ब्रूमः—जीवात्मा नारायणस्यांशः, कुतः, तच्छरीरत्वतद्व्याप्यत्वनित्यत्वाजत्वाच्छेद्यत्वादितद्धर्मवत्त्वतन्नियाम्यत्वतत्पाल्यत्वतदधीनत्वादिनानाव्यपदेशात्। ननु खंडत्वेन तदंशो जीवः[1]। तथाहि 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमंतरो यमयति स त आत्मांतर्याम्यमृत' इति, 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, 'तमात्मस्थं येऽनुपश्यंति धीरा' इति, 'द्वावजावीशानीशावि'ति, 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य' इति, 'अंतः प्रविष्टः शास्ता जनानामि'ति, 'पृथगात्मानं प्रेरितारं च मत्वे'ति, 'सर्वस्य वशी सर्वस्येशान' इत्यादिश्रुतिषु तच्छरीरत्वादिश्रवणात्। यदुक्तमयमात्मा ब्रह्मेत्यादिना ब्रह्मण एव जीवत्वमिति तत्राह—अन्यथा 'तत्त्वमसि' 'अयमात्मा ब्रह्मे'त्यादिकाद्व्यपदेशात्तयोर्जीवब्रह्मणोर्व्याप्यव्यापकभावेनानन्यत्वम्; अपि च तथैवानन्यत्वेन दाशकितवादित्वमधीयत एके आथर्वणिकाः 'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा' इति; एवं ब्रह्मणोंऽशत्वेऽपि तेन व्याप्तस्य जीवस्य तद्व्यपदेशो युक्तः[2]। अच्युताक्षराच्छेद्यादिविशेषणविशिष्टस्य ब्रह्मणो विभागासंभवात्। यथा वह्निना व्याप्तस्य काष्ठादेर्वह्निव्यपदेशः तथापि तयोर्वह्निकाष्ठयोर्नाभेदः, एवं ब्रह्मणो भिन्नोऽपि जीवस्तद्व्याप्यत्वाद्ब्रह्मणोंऽशभूत एव तत्स्वरूपः प्रतिपाद्यते। ब्रह्मण एवाज्ञानाज्जीवभावकल्पने अज्ञत्वसर्वज्ञत्वादिधर्मबोधकानेकश्रुतिविरोधादिबहुदोषप्रसक्तिर्दुर्वारा।

## मंत्रवर्णात् ॥ ४३ ॥

'पादोऽस्य विश्वाभूतानी'ति मंत्रवर्णाच्च ब्रह्मांशो जीव उक्तरीत्या पादशब्दोंऽशवाची।

## अपि स्मर्यते ॥ ४४ ॥

'ममैवांशो जीवलोके जीवभूतः सनातन' इति, जीवस्य परमात्मांशत्वं स्मर्यते च नित्यत्वाजत्वाच्छेद्यत्वादिधर्मैर्जीवस्य परमात्मसमानत्वात् परमात्मांशत्वं वदंति श्रुतिस्मृतयः। तस्य ब्रह्मस्वरूपांशत्वे तु तद्गतदोषा ब्रह्मण्येव प्रसज्येयुरित्याशंक्याह—

## प्रकाशादिवत्तु नैवं परः ॥ ४५ ॥

तुशब्दो ब्रह्मैकदेशांशशंकानिवृत्त्यर्थः। प्रकाशस्तेज आदिर्मुख्यो येषां ते प्रकाशादयो

---

१ खंडनानर्हत्वाद् ब्रह्मण इति शेषः। २ तच्छरीरत्वतद्व्याप्यत्वादिनानाव्यपदेशेन तत्त्वमस्ययमात्मा ब्रह्मेत्यादिना वह्निकाष्ठवदनन्यत्वव्यपदेशेन च।

मणितारकादयस्तद्वत्तत्तुल्यं जीवात्मवस्तु यथाऽल्पप्रकाशवत्त्वाल्पज्ञत्वानाद्यविद्यावद्धत्वकर्माधीनत्वेंद्रियारामत्वादिदोपबहुलं भवति एवं तथा न परः-अनवधिकातिशयप्रकाशवत्त्वसर्वज्ञत्वसत्यसंकल्पत्वास्पृष्टसकलदोपत्वाद्यसंख्यगुणगणनिधिः परमात्मा पुरुपोत्तमो भवतीत्यर्थः ।

## स्मरंति च ॥ ४६ ॥

'अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिभ्रमातुरा' इति, 'अनाद्यविद्यायुक्तस्य पुरुपस्ये'ति 'वंधोऽस्याविद्ययानादिरि'ति 'तयोरेकः पिप्पलं स्वाद्वत्ती'त्यादिपु जीवात्मदोपान् स्मरंति मुनयः ।

'सर्वज्ञता तृप्तिरनादिबोधः स्वतंत्रता नित्यमलुप्तदृष्टिः ।
अनंतशक्तिश्च विभोर्विभुज्ञाः पडाहुरंगानि महेश्वरस्ये'ति ॥

'सत्यव्रतं सत्यपरमि'ति 'सत्यं शौचं दया क्षांतिः त्यागः संतोप आर्जवमि'त्यारभ्य-

'एते चान्ये च भगवन्नित्या यत्र महागुणाः ।
प्रार्थ्या महत्वमिच्छद्भिर्न वियंति स्म कर्हिचित्' ॥

इत्यादिपु च परमात्मगुणगणान् स्मरंति । अतः शरीरभूतस्य जीवस्य दोपाः शरीरिणं परमात्मानं न स्पृशंति । एवं जीवपरयोरंशांशिभावेऽपि स्वरूपस्वभावादिभिरनादिरत्यंतश्च भेदः सिद्धः ।

## अनुज्ञापरिहारौ देहसंवंधाज्ज्योतिरादिवत् ॥ ४७ ॥

सर्वेपां जीवानां ब्रह्मशरीरत्वेन सामान्येऽपि तेपां मध्ये केपांचिज्जीवानां स्पर्शाध्ययनादेरनुज्ञा-आज्ञा केपांचित्स्पर्शादेः परिहारो-निपेधः कथमिति चेत्तत्रोच्यते-ब्राह्मणादिदेहसंवंधात्तदुपपत्तिः[1] यथाग्न्यादेः श्रोत्रियागारश्मशानादिसंवंधात्तद्वत्[2] ।

## असंततेश्चाव्यतिकरः ॥ ४८ ॥

अव्यतिरेक इति पाठांतरम् । जीवानां प्रतिशरीरं भिन्नत्वात्तत्र तत्राणुत्वेन युक्तत्वाच असंततेः-देहांतरेष्वव्याप्तेर्हेतोः स्थूलोऽहं कृशोऽहं सुख्यहं दुःख्यहं ब्राह्मणोऽहं क्षत्रियोऽहमिति देहाभिमानिनां सांसारिकज्ञानसुखादेः अव्यतिकरोऽव्यतिरेकोऽभिन्नत्वं भवति। अत्रायमाशयो भवति-सर्वेपां देहाभिमानिनामक्षरब्रह्मात्मभावप्राप्त्यभावस्य समानत्वात् सांसारिकं ज्ञानसुखादिकं परिमितं भवति; ततः परब्रह्मोपासनज्ञानाधिक्येन

---

१ अनुज्ञापरिहारोपपत्तिः । २ अनुज्ञापरिहाराविति शेपः ।

विगलितदेहाभिमानानामुपगताक्षरब्रह्मात्मभावानां मुक्तात्मनां निरतिशयनित्यज्ञान-सुखादिप्राप्त्या सांसारिकज्ञानसुखादिभ्यो व्यतिरेक इति सिद्धम्। अज्ञानोपाधिभ्यां ब्रह्मैव संबद्धमिति चेत्तत्र न व्यवस्थेत्याह—

## आभासा एव च ॥ ४९ ॥

सत्यमिथ्योपाधिभ्यां बद्धस्य ब्रह्मण एव जीवभाव इति पक्षद्वयेऽपि युक्तय आभासा एव–मरीचिकाजलतुल्या एव संति। तथाहि—

## अदृष्टानियमात् ॥ ५० ॥

सत्यमिथ्योपाधिभ्यां ब्रह्मणः सकाशात् जीवात्मनां कृतत्वे हि ब्रह्मण एवाज्ञा-नमुपाधिश्च। तत्राज्ञानकृतेनादृष्टेनात्रानियमः–अज्ञानेन ब्रह्मणो जीवत्वं ज्ञानेन पुनर्ब्र-ह्मत्वं पुनरेवं तस्य जीवत्वं पुनरेवं तस्य ब्रह्मत्वमित्थं नियमाभावः। अतस्ता युक्तय आभासमात्रा एव संति। 'यद्गत्वा न निवर्तते तद्धाम परमं मम' इति स्मृतिविरोधाच्च अज्ञानकृतभेदवादो मिथ्या। किंच–

## अभिसंध्यादिष्वपि चैवम् ॥ ५१ ॥

अभिसंध्यादिषु ब्रह्मणो जीवभावमापन्नस्यादृष्टहेतोरुपाधिरभिसंधानादिषु एवमेव नियमाभावश्च। एकस्य ब्रह्मणो हि द्वितीयाभावपक्षे वस्त्वंतराभावादुपाधिरपि वक्तु-मशक्यः। अत उपाधिकृतभेदवादपक्षोऽपि मिथ्या। पुनराशंक्य परिहरति—

## प्रदेशादिति चेन्नांतर्भावात् ॥ ५२ ॥

प्रदेशात्-उपाधिसंबंधिब्रह्मप्रदेशभेदात् उपाधिकृतजीवव्यवस्था सत्येति चेन्न, कुतः, अंतर्भावात्-उपाधिषु नष्टेषु सत्सु सर्वप्रदेशानां ब्रह्मांतर्भावात्; तथा सति सत्यमिथ्योपाधिभ्यां परिच्छिन्नस्य ब्रह्मणो जीवत्वं तन्नाशे पुनर्ब्रह्मत्वं तत्संबंधे पुन-र्जीवत्वमिति पक्षद्वयेऽपि न व्यवस्था संभवति। ततो जीवब्रह्मणोरनादित्वमनादिभेदश्च ब्रह्मणः शरीरतया व्याप्यतया च नित्यत्वाजत्वाच्छेद्यत्वादितद्धर्मतया च जीवोंऽश-भूतो नतु शकलत्वेनेति सिद्धम्।

---

१ पूर्वत्र नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वान्यथा उपलब्धिवदनियम इति द्वाभ्यां सूत्राभ्यां वेदबाह्यानां सर्वगतजीववादिनां दोष उक्तः। अत्र त्वाभास एव चेत्यादिभिः सूत्रैर्वेदावलंबिनामात्मैकत्ववादिनां दोष उच्यते।

इति श्रीशुद्धैकान्तधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

—≡—

## द्वितीयाध्याये चतुर्थपादः ।

### तथा प्राणाः ॥ १ ॥

पूर्वत्राकाशादीनि भूतानि समुत्पद्यंते इति निरूपितम्; जीवो नित्योऽजोऽणुर्ज्ञाताऽनाद्यज्ञानेनानादिबद्ध इति च । इह भूतानामिवेंद्रियाणां ब्रह्मण उत्पत्तिः उत जीववन्नित्यत्वमिति विचार्यते । यथा नित्यत्वान्न जीवः समुत्पद्यते तथेंद्रियाण्यपि । जीववद्मीषामपि नित्यत्वे श्रुतिसंभवात् । तथाहि 'असद्वा इदमग्र आसीत् ऋषयो वा व ते' अग्रेऽसदासीत् तदाहुः, के ते ऋषय' इति, प्राणा वा ऋषय' इति प्रलयकाले प्राणानामिंद्रियाणां स्थितिराम्नायते । प्राणास्ततो ब्रह्मणो नोत्पद्यंत इति प्राप्ते ब्रूमः सिद्धांतम्-

### गौण्यसंभवात्तत्प्राक् श्रुतेश्च ॥ २ ॥

अत्र नकारोऽध्याहार्यः। तत्प्राक्–तेषां प्राणानां सृष्टेः प्राक् नावस्थितिः, किंतु नारायणस्यैव 'सदेव सौम्येदमग्र आसीदि'ति श्रुतेः । अतः ऋषिशब्दः प्राणशब्दश्च नारायण एव वर्त्तते, तस्य बहुत्वासंभवात्; बहुवचनश्रुतिस्तत्र गौणी; ततो ब्रह्मण एव प्रागवस्थितिश्रुतिर्नेंद्रियाणाम् । युक्त्यंतरमाह—

### तत्पूर्वकत्वाद्वाचः ॥ ३ ॥

वाचः-नामरूपविभागसृष्टिबोधकवाण्याः सकाशात् तत्पूर्वकत्वात् 'एको ह वै नारायण आसीदि'ति नारायणबोधकवाण्या तस्यैव पूर्वकत्वात्प्राथम्यात् प्राणशब्दो नेंद्रियविषयः, किंतु परमात्मविषय एव ।

### सप्तगतेर्विशेषितत्वाच्च ॥ ४ ॥

पूर्वत्र सूक्ष्मावस्थावस्थिता । चिदंतर्यामिब्रह्मकार्यतया सिद्धानींद्रियाणि कियत्संख्यानीति संदेहे सति सप्तेति पूर्वः पक्षः। कुतः 'यदा पंचावतिष्ठंते ज्ञानानि मनसा सह, बुद्धिश्च न विचेष्टेत तामाहुः परमां गति'मिति सप्तानामेवावगतेः। 'सप्त प्राणाः प्रभवंती'त्यादिश्रुतौ सप्तेति विशेषितत्वाच्चेत्येवं प्राप्ते ब्रूमः—

---

१ अधिकरणानि ८ सूत्राणि ५२। २ ऋषयः प्राणा इति। ३ नारायणे। ४ नारायणस्यैव। ५ श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणबुद्धिमनांसीति सप्त ।

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ५ ॥

नैवं-सप्तैवेंद्रियाणीति न मंतव्यम्; हस्तादयोऽपींद्रियाण्येव; देहांतःस्थिते जीवे तेषामुपकरणत्वाविशेषात्; अत इंद्रियाण्येकादशैव 'दशेमे पुरुषे प्राणा आत्मैकादशेति' 'इंद्रियाणि दशैकं चे'ति श्रुतिस्मृतिभ्यां ज्ञायंते। आत्मशब्दोंऽतःकरणवाची। आत्मा मन इति पक्षे बुद्ध्यादयस्तद्वृत्तयः।

## अणवश्च ॥ ६ ॥

एकादशेंद्रियाणि सर्वगतानि किंवाणूनीति संदेहे चक्षुरादीनां दूरगतवस्तुग्रहणसामर्थ्यात्सर्वगतानीति प्राप्ते अणूनीत्युच्यंते; कथमिति चेत्तत्राह-'तमुत्क्रामंतं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंती'ति श्रवणात् न सर्वगतानींद्रियाणि। सर्वगतत्वे हि न तेषां गतिःसंभवति--चक्षुरादेर्दूरगतवस्तुग्रहणसामर्थ्यं सर्वगतत्वेन न भवति, किंतु तेजोरूपत्वादणुत्वाच्च भवति। शीघ्रगतिमत्त्वादिंद्रियाण्यणून्येव।

## श्रेष्ठश्च ॥ ७ ॥

'प्राणमनूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंती'ति सर्वप्राणश्रेष्ठतया श्रूयमाणः पंचवृत्त्यात्मा प्राणवायुर्ब्रह्मण उत्पद्यते नवेति संशये न जायते प्राणवायुः। 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः, आनीदवातं स्वधया तदेकं तस्माद्धान्यं न परः किंच नासे'त्यत्र आनीच्छब्देन सृष्टेः प्रागपि प्राणचेष्टायाः श्रवणादिति प्राप्ते वदामः-प्राणवायुरपि जायते एव; आनीच्छब्दो न प्राणस्य व्यापारं वक्ति; अवातमिति तन्निषेधात्; किंतु दिव्यमूर्तेर्ब्रह्मणः सत्त्वमेव ब्रूते; अतो न प्राणानादित्वं संभवति। अयं प्राणवायुरुत्पत्तिमान् भवतु, स तु सामान्यकरणवृत्तिः प्राणाद्यावयवःपंचेति

---

१ वाक्पाणिपादपायूपस्थाहंकारचित्ताख्यानि। २ श्रोत्रादीनां हस्तादीनां चोभयेषाम्। ३ भोगोपकरणत्वे साधारण्यात्। ४ अध्यवसायाभिमानचिंतावृत्तिभेदान्मन एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यत इत्येकादशेंद्रियाणि। ५ त एते सर्व एव समाः सर्वेऽनंता इत्यानंत्यश्रवणेन। ६ तर्हि तस्मिन्महालये मृत्युर्मृत्युवद्धा नासीत्, अमृतं देवभोग्यं च नासीत्, तथा रात्रेरह्नश्च प्रकेतश्चिह्नभूतश्चंद्रः सविता च नास्तां, स्वधया सहेति संबंधः, स्वधाशब्देन पितृभ्यो दीयमानमन्नं तदर्चनं चोच्यते; तर्हि शून्यवादः स्यादित्यत आह--आनीति; तदेवैकं मूलकारणं परब्रह्म अवातं वाय्वादिप्रपंचरहितं आनीदासीदित्यर्थः, तस्मादात्मनोऽन्य त्किंचिदपि नास ह न बभूव किलेति हकारस्यान्वय इति श्रुत्यर्थः। ७ प्राणनिषेधात्। ८ पंचवृत्त्यात्मा। ९ प्राणोऽपानो व्यान उदानः समान इति पंच।

तंत्रांतरोक्तरीत्या समस्तेंद्रियवृत्तिरूपोऽवगम्यते; अतस्तद्वृत्तिभ्यो वा यः प्राणः स वायुरितिश्रुत्या भूतवायोर्वा न पृथग्भूत इत्यत आह—

**न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥**

प्राणोऽयं न वायुः, नचेंद्रियवृत्तिरूपक्रियाभूतः, 'एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च, खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'तिश्रुत्या पृथगुपदेशात्। ततो वायोरिंद्रियवृत्तिभ्यश्चान्य एव प्राणः। वायोरन्यत्वेऽपि न तस्य भूतांतरत्वमित्याह—

**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥**

तुशब्दो भूतांतरशंकानिवर्त्तकः। नायं भूतांतररूपः, किंतु वायुरेवावस्थांतरं प्राप्तः। किंच अयं चक्षुरादिवत् जीवात्मोपकरणम्; तच्चोपकरणत्वं उपकरणरूपैरिंद्रियैः सह शिष्ट्यादिभ्यः-शासनादिभ्यो विज्ञायते; शिष्टिः शासनमुपदेश इति यावत्। प्राणसंवादादिषु चक्षुरादिकरणैः सहायं प्राण उपदिश्यते इति सूत्रमपि व्याख्यातम्।

**अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ १० ॥**

अकरणत्वमक्रियत्वं प्राणस्य जीवोपकारक्रियारहितत्वादपि। अस्योपकारविशेषरूपया शरीरेंद्रियधारणादिरूपया च क्रियया जीवोपकरणोक्तौ न दोषः। तथाहि दर्शयति श्रुतिः प्राणसंवादे 'यस्मिन्नुत्क्रांते इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठ' इति। कुत एतत् प्रजापतिवचनानंतरं वागाद्युत्क्रमणेऽपि देहस्येंद्रियाणां च स्थितिं दर्शयित्वा प्राणोत्क्रमणे देहेंद्रियशैथिल्याभिधानात्।

**[3]पंचवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥**

प्राण एक एव स्ववृत्तिभिः प्राणापानादिपंचभिः संज्ञाभेदभाग्भवति। यथा मन एकमेव कामादिभिः स्ववृत्तिभिः संज्ञाभेदं भजति-कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति वचनात्, तथा स पंचवृत्तिभिः संज्ञाभेदं भजति, अतः प्राण एक एव पंचभूतांतर्वर्त्ती वातादींद्रियवृत्तिर्वायोश्च व्यतिरिक्तो जीवोपकारक इति व्यपदिश्यते।

**अणुश्च ॥ १२ ॥**

पंचवृत्तिरयं प्राणवायुरिंद्रियवदणुर्विभुर्वेति संदेहे सति नाणुरयं 'सम एभिस्त्रिभि-

---

१ वायोः पृथग्भूतोऽप्ययं नाग्न्यादिवद्भूतांतरमित्यर्थः। २ ननु चक्षुरादीनां यथा क्रियाजनकत्वं तथाऽस्य प्राणस्य तदभावान्न करणत्वं युक्तमिति चेत्तत्राह। ३ नन्वेवं नामभेदात्कार्यभेदाच्च प्राणापानादयस्तत्त्वांतराणि स्युरिति चेत्तत्राह पंचवृत्तिरिति।

लौकैः समोऽनेन सर्वेण प्राणे सर्वं प्रतिष्ठितं सर्वं हीदं प्राणेन वृतमि'तिश्रुतेः सर्वावधारकतया व्यापी प्राण इति प्राप्ते ब्रूमः-अणुरेव प्राणवायुः 'प्राणमनूत्क्रामंतमि'ति तस्य गतिश्रवणात्। आधिदैविकस्य हिरण्यगर्भप्राणस्य समष्टिरूपस्य विभुत्वं न व्यष्टिरूपस्येति न विरोधः। तस्मादणुरेव प्राणः पंचवृत्तिरिति।

## ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥ १३ ॥

'इहादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदि'त्यादिना चक्षुरादीनामादित्याद्यधिष्ठानं श्रूयते, जीवस्य च रूपादिग्रहणाय तदधिष्ठानमुपदिश्यते। एवमेष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्त्तते इति तदिदं जीवेन सहेंद्रियाधिष्ठानम् आदित्यादीनां नारायणायत्तं उत स्वतंत्रमिति संशये 'आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदि'त्यादिषु स्वातंत्र्यश्रवणादादित्याद्यधिष्ठानं न नारायणायत्तमिति पूर्वः पक्षः। सिद्धांतस्तु नारायणायत्तमिंद्रियाद्यधिष्ठानमादित्यादीनाम्; कुतः,'य आदित्यमंतरो यमयति आत्मानमंतरो यमयति' इत्यादिश्रवणान्नारायणसंकल्पपूर्वकत्वाच्च सर्वप्रवृत्तीनां तस्मादिंद्रियाद्यधिष्ठानं जीवस्यादित्यादीनां च नारायणायत्तमेव। अथ सूत्रशब्दार्थवर्णनम्-प्राणवता जीवेन सह ज्योतिराद्यधिष्ठानं तु ज्योतिरादीनामादित्यादीनां चक्षुराद्यधिष्ठानं तु तदामननात्—तस्य नारायणस्य आभिमुख्येन मननं संकल्पस्तस्मात् नारायणसंकल्पादेव भवतीत्यर्थः, 'आदित्यमंतरो यमयति आत्मानमंतरो यमयती'त्यादिशब्दात्।

## तस्य च नित्यत्वात् ॥ १४ ॥

तस्योक्तस्य सर्वस्य च नारायणनियम्यत्वं नित्यमेव। अतोऽपि नारायणसंकल्पायत्तमेवैषामधिष्ठातृत्वम्।

## त इंद्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १५ ॥

इह पूर्वोक्तानि वागादीनींद्रियाणि प्राणवृत्तिभ्यो भिन्नानि नवेति संशये मुख्यप्राणव्यवहारसामान्यात् प्राणशब्दनिर्दिष्टानि तानि; तस्मात्प्राणादनन्यानींद्रियाणीति पूर्वपक्षे प्राप्ते मुख्यप्राणादन्यान्येवेंद्रियाणीति सिद्धांतं ब्रूमः। श्रेष्ठात्प्राणात्ते प्राणाः अन्यत्रान्ये प्राणशब्दनिर्दिष्टानींद्रियाण्यन्यान्येव तद्व्यपदेशात् 'इंद्रियाणि दशैकं च पंच चेंद्रियगोचरा' इत्यादिवचने तेषामिंद्रियाणामेव पृथग्व्यपदेशात्।

---

१ तेषां चक्षुरादीनामधिष्ठानम्। २ जीवप्राणेंद्रियाधिष्ठातृसूर्यादेः। ३ जीवस्यादित्यादीनां चेत्यर्थः। ४ सर्वेषामविशेषेण प्राणशब्दनिर्देशात्करणत्वाच्चेत्यर्थः।

## भेदश्रुतेर्वैलक्षण्याच्च ॥ १६ ॥

'एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि चे'ति प्राणेंद्रियाणां भेदेनोत्पत्तिश्रवणात् इंद्रियाद्युपरमेऽपि प्राणवृत्त्यनुपरमरूपं वैलक्षण्यं च दृश्यते, अतोऽपि प्राणवृत्तिभ्यो भिन्नानींद्रियाणि ।

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥

पूर्वं भूतेंद्रियादीनां समष्टिव्यष्टिक्षेत्रज्ञशरीराणां च कर्तृत्वं परस्मान्नारायणादेवेत्युक्तं, तदनंतरं जीवात्मनां स्वेंद्रियाधिष्ठानं नारायणायत्तमिति च स्मारितम्; इदानीं स्थावरजंगमात्मकव्यष्टिसर्गः किं समस्तब्रह्मांडात्मकात्पुरुषाद्वा परब्रह्मसंज्ञाद्धरेरिति संदेहः। केवलात्समस्तब्रह्मांडात्मकात्पुरुषादिति पूर्वः पक्षः। 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'तिश्रुतेः[1] जीवस्य परमात्मांशत्वेनाहं व्याकरवाणीति उत्तमपुरुषनिर्देशोऽपि कथंचिदुपपद्यते[2]। सिद्धांतस्तु 'नामरूपे व्याकरवाणी'ति तासां त्रिवृत्तं त्रिवृत्तमेकैकां करवाणीति त्रिवृत्करणं कुर्वत एव नामरूपव्याक्रियोपदेशात् परमात्मन एव नामरूपव्याकरणरूपः स्थावरजंगमात्मकव्यष्टिसर्गो भवतीति युक्तम्; त्रिवृत्करणं तु ब्रह्मांडात्मकपुरुषेण न शक्यं, ब्रह्मांडात्मकपुरुषोत्पत्तेश्चतुर्विंशतितत्वात्मकसर्गोत्तरकालभावित्वात् त्रिवृत्कृतैरेव तेजोऽबन्नैरंडसर्गसंभवाच्च। तथाहि स्मर्यते-
' तदंडमभवद्धैमं सहस्रांशुसमप्रभम्, तस्मिन्जज्ञे स्वयं ब्रह्मे'ति;

' नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।<br>
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥<br>
समेत्यान्योन्यसंयोगं परस्य रसमाश्रयाः ।<br>
महदाद्या विशेषांता ह्यंडमुत्पादयंति ते ' ॥

इति । तस्माद्ब्रह्मांडात्मकपुरुषरूपशरीरकात् पुरुषोत्तमादेव व्यष्टिसर्गः। एवं च सति 'परब्रह्माहं व्याकरवाणी'त्युत्तमपुरुषनिर्देशः समीचीनः। अनेन जीवेनेति भिन्ननिर्देशोऽपि आत्मना स्वशरीरभूतेन पुरुषरूपजीवेनेत्यन्वयादुचितः। पुरुषवाचकजीवशब्दस्तेजःप्रभृतिशब्दवज्जीवशरीरकपरब्रह्मवाचीत्यभिहितम्। इत्थं जीवेनात्मनेत्येकत्वनिर्देशः। तथा अहं प्रविश्येति, अहं नामरूपे व्याकरवाणीति समानकर्तृकत्वव्यपदेशश्च तस्मिन्मुख्यः। अथ सूत्रार्थवर्णनम्—तुशब्दः पूर्वपक्षव्यावर्त-

---

१ जीवकर्तृत्वश्रवणात्। २ नहि परा देवता स्वेन रूपेण नामरूपे व्याकरवाणीत्यैक्षत, अपितु स्वांशभूतेन जीवरूपेण अनेन जीवेनात्मनेति वचनात्।

कः। संज्ञामूर्त्तिक्लृप्तिस्तु—नामरूपविभागकल्पनं तु परमात्मन एव कर्म, कुतः त्रिवृत्कुर्वतः त्रिवृत्क्रियां विदधतस्तस्यैव नामरूपव्याकरणोपदेशात्। यथा 'खलु सौम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन' इत्यादिना चतुर्मुखसृष्टपुरुषादीनां शरीरेषु त्रिवृत्प्रकारो ह्युपदिश्यते; तमेव दर्शयति—

## मांसादिभौमं यथाशब्दमितरयोश्च ॥ १८ ॥

'अन्नमशितं त्रेधा विधीयत' इत्यादौ प्राक् निरूपितात् त्रिवृत्करणादर्थांतरभूत एवांडांतर्वर्तिपुरुषोपभुक्तान्नादीनां परिणामप्रकार उच्यते नतु त्रिवृत्करणम्। अन्यथा हि मांसमनसोः पुरीषादणुत्वेनाणिष्ठत्वेन चाप्यत्वतैजसत्वप्रसंगः, तथा सत्यन्नमशितं त्रेधेति भूमेरेव त्रैविध्योपक्रमः 'अन्नमयं हि सौम्य मन' इति मनसो भौमत्वं च विरुध्येत, तथेतरयोरप्तेजसोस्त्रैविध्यं विरुध्येत। तमेव परिणामप्रकारमाह-मांसा-

१ सेयं देवतैक्षत हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति समानकर्तृकत्वोपदेशात् इमास्तेजोऽबन्नरूपास्तिस्रो देवताः अनेन जीवेन जीवसमष्टिविशिष्टेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि वियदादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि तदर्थमन्योन्यसंसर्गमप्राप्तानामेषां तेजोऽबन्नानां विशेषसृष्टचसमर्थानां तत्सामर्थ्यायैकैकां त्रिवृत्तं त्रिवृत्तं करवाणीति; अतः परस्यैव ब्रह्मणः कर्मेदं नामरूपव्याकरणमिति सेयं देवतेतिश्रुत्यर्थः। २ त्रिवृत्कृतमन्नं अशितं भुक्तं त्रेधा विधीयते—जाठराग्निना पच्यमानं त्रिधा विभज्यते इत्यर्थः। ३ आपः पीतास्त्रेधा विधीयंते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राण इति; तेजोऽशितं त्रेधा विधीयते; तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वागिति। ४ अंडोत्पत्तिहेतुभूतानां तेजोऽबन्नानां निरूपितात्। ५ सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति श्रूयमाणे त्रिवृत्करणप्रकारे प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानां अन्नमशितमित्यादिनैकैकस्य त्रेधा परिणाम उच्यते नत्वनेन वाक्येन तेजोऽबन्नानां त्रिवृत्करणं कुतः अंडसृष्टेः प्रागेव तेषां त्रिवृत्करणेन भवितव्यत्वात्। ६ अन्नमशितमित्यादौ तेजोऽबन्नानां त्रिवृत्करणांगीकारे। ७ पृथिवीविकारयोः। ८ मांसमनसोराप्यत्वतैजसत्वांगीकारे सति। ९ अन्नमशितमित्यादिश्रुत्युपदिष्टमेव।

दिभौमं यथाशब्दमितरयोश्चेति यथाशब्दमन्नमशितमिति श्रुतिशब्दमनतिक्रम्य मांसादिभौमं पुरीषवन्मांसमनसी अपि भौमे इष्येते इत्यर्थः। इतरयोरप्तेजसोरपि कार्यत्रयं [1]यथाशब्दं बोध्यम्; तथाहि मूत्रवल्लोहितप्राणावाप्यौ; तथास्थिवन्मज्जावाचौ तैजस्यौ; प्राणस्य जलायत्तस्थितित्वेन जलकार्यत्वोक्तिः, तथा मनसोऽप्यन्नभक्षणात्स्वास्थ्येन तत्कार्यत्वोक्तिस्तथा वाचोऽग्निदेवताप्रकाश्यत्वेन तेजःकार्यत्वोक्तिरिति ज्ञेयम्। नन्वन्नमशितमापः पीतास्तेजोऽशितमिति त्रिधा त्रिधा परिणतानामन्नादीनां मध्ये एकैकस्य पूर्वमेव तेजोऽबन्नात्मकत्वेन त्रिवृत्कृतस्य प्रत्येकमन्नमापस्तेज इति संज्ञा कथमुच्यते इत्यत आह—

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥

सत्यपि त्रिवृत्करणे मनुष्ययादोदेवादीनां व्यवहारसिद्ध्यर्थं प्रतिशरीरमन्नाद्यन्यतमभूयस्त्वेन वैशेष्यात् विशेषभावात्तु तद्वादोऽन्नादिवादः। द्विरुक्तिस्त्वध्यायसमाप्तिप्रकाशिका। तस्मात्त्रिवृत्कुर्वतः परस्माद्ब्रह्मणः 'हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति पुरुषरूपजीवेनात्मना चेतनाचेतनानां समस्तनामाकृतिसर्गोऽन्नादित्र्यात्मक इति समंजसम्।

इति श्रीशुद्धैकान्तधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥ समाप्तश्चायं द्वितीयाध्यायः ॥ २ ॥



## श्रीसहजानंदाय नमो नमः ॥

---

# तृतीयाध्याये प्रथमपादः ।

## [3]तदंतरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

द्वितीयेऽध्याये प्रथमाध्यायसिद्धस्य ब्रह्मकारणवादिसमन्वयस्य विरोधः परिहृतः। तथाहि द्वितीयस्य[5] प्रथमे पादे सांख्यादितर्कविरोधः, परिहृतः, तस्य द्वितीये[6] प्र-

---

१ आपः पीतास्त्रेधा विधीयंत इतिश्रुतिशब्दमनतिक्रम्य तेजोऽशितं त्रेधा विधीयत इतिश्रुतिशब्दमनतिक्रम्य चेत्यर्थः। २ अधिकरणानि ८ सूत्राणि १९। ३ तदंतरप्रतिपत्त्यधिकरणम्। ४ अध्यायस्येति शेषः। ५ द्वितीयाध्यायस्य। ६ पादे इति शेषः।

धानकारणवादादिषु तर्कविरोधः प्रदर्शितः, [1]तृतीये श्रुत्युक्तभूतसृष्टयवांतरविरोधपरिहारपूर्वकं जीवश्च नित्यत्वादिधर्मैर्निरूपितः, [2]चतुर्थे प्राणेंद्रियाणां स्वरूपं ब्रह्मणः सकाशात्तेषामुत्पत्तिमप्यभिधाय सर्वेषां नामरूपव्याकरणं च निरूपितम् । अस्य तृतीयाध्यायस्य प्रथमपादे नित्यत्वादियुक्तस्य जीवस्य गत्यागतिनिरूपणं क्रियते; [3]तस्य द्वितीये[4] [5]तदवस्थानिरूपणपूर्वकं नारायणस्य स्वरूपलक्षणमुच्यते; [6]तृतीये [7]तदुपासनाविशेषाणां गुणोपसंहारः, [8]चतुर्थे त्वाश्रमादिधर्म इति विवेकः। [9]अस्याध्यायस्य प्रथमाधिकरणे जीवो लोकांतरगमनागमनेषु देहान्तरप्राप्तये भूतसूक्ष्मैर्वेष्टितो याति उतावेष्टित इति संशयः । जीवो देहान्निर्गच्छन् भूतसूक्ष्मैर्भाविशरीरबीजैरपरिष्वक्त एव याति, भूतानां [10]सर्वत्र सुलभत्वेन भूतरक्षणायासस्यापार्थकत्वात् इति प्राप्तेऽधिकरणार्थेन सह सिद्धांतं ब्रूमः-संज्ञामूर्तिक्लृप्तिरित्यतो मूर्तिशब्दस्तच्छन्देनानुकृष्यते। स च देहवाची । तदंतरप्रतिपत्तौ जीवो देहांतरप्राप्तौ भूतसूक्ष्मैः परिष्वक्तो रंहति प्रयातीति पंचाग्निविद्यायां प्रश्ननिरूपणाभ्यां प्रश्नोत्तराभ्यामवगम्यते। [11]तथाहि 'वेत्थ यथा पंचम्यामाहुतावापः पुरुषवचसो भवंती'ति प्रश्नः। इतितु पंचम्या-

---

१ द्वितीयाध्यायतृतीयपादे । २ द्वितीयाध्यायचतुर्थपादे । ३ तृतीयाध्यायस्य । ४ पादे इति शेषः । ५ तस्य जीवस्यावस्थानिरूपणपूर्वकम् । ६ तृतीयाध्यायतृतीयपादे । ७ तस्य नारायणस्योपासनाविशेषाणाम् । ८ तृतीयाध्यायचतुर्थपादे । ९ तृतीयस्य । १० चतुर्विधयोनिषु । ११ द्युलोकपर्जन्यपृथिवीपुरुषयोषित्सु पंचस्वग्निदृष्टयोपासनाख्यपंचाग्निविद्याप्रस्तावे प्रवाहणाख्यस्य राज्ञः सभां प्रविष्टं श्वेतकेतुं राजा पप्रच्छ-वेत्थ यथा पंचम्यामाहुतावापः पुरुषवचसो भवंति—अयमर्थः—अस्मिन्लोके जलमयदधिपयःप्रभृतिकद्रव्यकहोमे श्रद्धापूर्वं कृते तद्धुतं जलं यजमानं प्राप्य तद्द्वारा द्युलोकाख्याग्निं गच्छच्छ्रद्धाख्याहुतित्वमापन्नं यजमानेंद्रियाधिष्ठातृदेवास्तस्मिन्नग्नौ जुह्वति, तच्च हुतं जलं सोमाख्यदेहात्मना परिणमते, सच जलमयो देहः पर्जन्येऽग्नौ वृष्टयभिमानिदेवविशेषे हुतः सन् वृष्टिर्भवति, तदेव जलं सोमाख्यदेहभावं वृष्टिभावं चापन्नं पृथिव्यामग्नौ हुतं सद्व्रीहियवाद्यन्नभावमाप्नोति, ताश्चात्रान्नभावमापन्ना आपः पुरुषाग्नौ हुताः सत्यो रेतोभावमाप्नुवंति, ताश्च रेतोभावमापन्नाः पंचमाहुतिरूपा आपो योषिदग्नौ हुता गर्भात्मना स्थिताः पुरुष इति संज्ञां लभंते, इति पुरुषवचस्त्वमपामिति वस्तुगतिः। तां वस्तुगतिं जानन्नेव राजा पंचम्यामाहुतौ हुतायां यथा पुरुषशब्दवाच्या आपः पुरुषाकारेण परिणमंते तथा किं त्वं वेत्थेति पप्रच्छ। एवं पृष्टः श्वेतकेतुः पितरं गौतममागत्योवाचैवं राज्ञाहं पृष्टोऽस्मि तस्योत्तरं न जानामीति। स च गौतमः स्वयमप्यज्ञः सन् राजसमीपं गत्वा तां विद्यां ब्रूहीत्युवाच। एवमुक्तस्य राज्ञो गौतमं प्रति निरूपणं पंचाग्निविद्योपदेशस्तत्र चापां पुरुषवचस्त्वप्रकारः स्फुटीकृतः।

माहुतावापः पुरुषवचसो भवंतीति स उल्वावृतो गर्भ इत्युत्तरं च। 'तत्र चायमर्थः-सपिंडितः ब्राह्मणादिदेहस्थो जीवः स्वाहादानादिकर्म कृत्वा तत्फलभोगायास्माद्देहादुत्थाय गच्छन्नेतद्देहस्थाभिरद्भिर्भूतांतरसंसृष्टाभिः सूक्ष्माभिः परिष्वक्तोऽग्नित्वेन रूपितं द्युलोकं प्राप्य ताभिरेवामृतमयदेहाकारेण परिणताभिरद्भिः परिष्वक्तो देवभावमुपगम्य देवैः सह भोगविशेषाननुभूय भुक्तावशिष्टेन ब्राह्मणादिदेहप्रापकेण कर्मणा सह पुनरिममागमिष्यन् कर्म कर्तुं ताभिरेव परिष्वक्तोऽग्नित्वेन रूपितं पर्जन्यं प्राप्य वर्षधाराभिः सहाग्नित्वेन रूपितां पृथिवीमुपगम्य व्रीह्यादिसस्येन भोजनीयान्नाकारपरिणतेन सहाग्नित्वेन रूपितं पुरुषं प्राप्य तत्र शुक्राकारपरिणताभिस्ताभिरद्भिः परिष्वक्तोऽग्नित्वेन रूपितां योषितं प्राप्य तत्र देहाकारपरिणताभिः पुरुषशब्दाभिलपनीयाभिस्ताभिः परिष्वक्तः कर्मानुरूपब्राह्मणादिदेहेन जायत' इति तदेतत्सर्वमुत्तरत्राभिव्यज्यते। तस्मात्पुरुषो भूतसूक्ष्मवेष्टित एव देहांतरं प्राप्नोतीति।

## [2]त्र्यात्मकत्वात्तु भूयस्त्वात्[3] ॥ २ ॥

सर्वस्य त्रिवृत्करणेन त्र्यात्मकत्वाद्भूतांतरसंसृष्टा एव आपस्तासां भूयस्त्वादप्शब्देनोच्यंते; अतः पंचम्यामाहुतावाप इत्यत्र केवलाप्शब्दग्रहणेऽपि न विरोधः।

## प्राणगतेश्च ॥ ३ ॥

'तमुत्क्रामंतं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंती'ति स प्राणेन जीवेन सहेंद्रियगतेरिंद्रियाश्रयत्वेन सूक्ष्मदेहगमनमपि प्रतीयते। तथाहि स्मर्यते—

'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।
गृहीत्वैतानि संयाति वायुर्गंधानिवाशयादि'ति ॥

अतोऽपि सूक्ष्मदेहवेष्टित एव जीवो यातीति आशंक्य परिहरति—

---

१ प्रश्नोत्तरे। २ नन्वापः पुरुषवचस इत्युक्ते अपां पुरुषाकारपरिणामप्रतीतेर्गच्छता जीवेन सह तासामेव परिष्वंगः प्रतीयते; अतः कथं सर्वेषां भूतसूक्ष्माणां परिष्वंग इत्यत आह-आत्मकत्वादिति। ३ त्र्यात्मिका ह्यापस्त्रिवृत्करणश्रुतेः तास्वारंभिकास्वभ्युपगतास्वितरदपि भूतद्वयमवश्यमभ्युपगंतव्यं भवति, त्र्यात्मकश्च देहः त्रयाणामपि तेजोऽबन्नानां तस्मिन्कार्येऽपि लब्धेः, यद्वा त्रिधातुत्वात् त्रिभिर्वातपित्तश्लेष्मभिर्वायुतेजोजलकार्यभूतैः स त्र्यात्मकः, न स भूतांतराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते; तस्माद्भूयस्त्वापेक्षयोऽयमापः पुरुषवचसो भवंतीति प्रश्नप्रतिवचनयोरप्शब्दो न कैवल्यापेक्षः। सर्वदेहेषु हि रसलोहितादिद्रवभूयस्त्वं दृश्यते। यद्यपि देहे पृथिवीभूयस्त्वमेव तथापि तेज आद्यपेक्षयाऽपां भूयस्त्वं बोध्यम्।

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमि'त्यादौ इन्द्रियाणामग्न्याद्यभिगमः श्रूयते; ततो न जीवेन सहेंद्रियाणां गमनं, येन सूक्ष्मदेहगमनप्रतीतिः स्यात्; अतः'प्राणमनूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंती'ति जीवेन सहेंद्रियगतिश्रुतिरन्यथा नेयेति चेन्न, वागाद्यभिमानिदेवतासु वागादिप्राप्तिवाक्यानां भाक्तत्वात्-गौणत्वात्। 'ओषधीर्लोमानि वनस्पतीन् केशा' इत्यनश्यद्भिर्लोमादिभिः सह पाठाद्गौणत्वम्, अतो जीवेन सहेंद्रियाणां गमनमेव भवतीति निश्चीयते।

## प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

प्रथमे द्युलोकाग्नौ अपामश्रवणात् भूतांतरसंसृष्टा आपो न गच्छंति तस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीति होम्या श्रद्धैव हि श्रूयत इति चेन्न, हि यतस्ता एव आप एव श्रद्धाशब्देन प्रतिवचनोपक्रमे तत्रोच्यंते; कुतः'वेत्थ यथा पंचम्यामाहुतावि'ति प्रश्नस्य 'यो देवाः श्रद्धां जुह्वती'ति प्रतिवचनोपक्रमस्तद्गतेन श्रद्धाशब्देन द्युलोकाग्नौ होम्यत्वेनाप्स्वस्यैवोपपत्तेः, अन्यथा प्रश्नप्रतिवचनयोरसंगत्यापत्तिः स्यात्; श्रद्धाशब्दश्चाप्सु युज्यते 'श्रद्धा वा आप' इतिश्रुतेः। पुनराशंक्य परिहरति—

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

'आपः पुरुषवचसो भवंती'ति 'देवाः श्रद्धां जुह्वती'त्यादिषु प्रश्नप्रतिवचनयोराप एव श्रूयंते; जीवस्याश्रुतत्वात् न तत्परिष्वक्तो जीव इति चेन्न; 'उत्तरत्र' 'अथ य इमे

---

१ वागाद्यधिष्ठात्रीणामग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाले उपकारनिवृत्तिमात्रमपेक्ष्य वागादयोऽग्न्यादीन् गच्छंतीत्युपचारादित्यर्थः। २ नहि मृतस्य लोमानि केशाश्च प्रत्यक्षेण दृश्यमाना ओषधिवनस्पतिषु लयं गच्छंतो दृश्यंते। अतस्तत्सहपातात् अग्न्यादिषु वागादिलय औपचारिक इत्यर्थः। ३ अपां होम्यत्वाश्रवणात्। ४ अपां हि होमद्रव्यत्वेनाहुतित्वं न संभवति; मनोवृत्तिविशेषद्रव्यरूपश्रद्धा तु मनसः सकाशात् पृथक्कृत्य होमायोपादातुं न शक्यंते; तदाहुतिजन्यसोमाख्यशरीरादेरब्बाहुल्यानुपपत्तिश्च; तस्मात् श्रद्धापूर्वमस्मिन्लोकेऽब्बहुलदधिपयःप्रभृतिद्रव्यस्य हुतस्य द्युलोकाग्नौ आहुतित्वेन पर्यवसानादप्सु श्रद्धाशब्दो लाक्षणिक इत्यर्थः। 'आपो हास्मै श्रद्धां संनमंते पुण्याय कर्मण' इति श्रुतावपां श्रद्धाजनकत्वश्रवणात् तेन संबंधेन वाप्सु श्रद्धाशब्दस्य लक्षणा। अस्मै पुंसे आपो दर्शनमात्रेण स्नानादिपुण्यकर्मसिद्ध्यर्थं श्रद्धां संनमंते जनयंतीतिश्रुत्यर्थः। ५ पंचाग्निविद्यानंतरमर्चिरादिमार्गादग्रिमे धूमादिमार्गबोधकसंदर्भे।

ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूमगभिसंभवंति धूमाद्रात्रिं रात्रेरपरपक्षं अपरपक्षाद्यान् पेड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवंति मासेभ्यः पितृलोकं पितृलोकादादित्यमादित्याचंद्रमसं एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयंति तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायंते अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिंचति तद्भूय एव भवती'ति वाक्ये द्युलोके सोमराजशब्दोक्तामृतमयदेहवैशिष्ट्येन पुण्यफलमनुभूय पुण्यकर्मावसाने पुनरिहागत्य गर्भं प्राप्नुवतामिष्टादिकारिणां प्रतीतेः पंचाग्निविद्यायामपि। इहापि 'तेषामेव तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवती'यत्र सोमराजशब्देन प्रत्यभिज्ञानात्। तस्मात्प्रश्नप्रतिवचनयोरप्यद्भिः परिष्वक्तस्तच्छरीरको जीव आप इति गम्यते।

## भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥

'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयंती'ति सोमराजभावापन्नस्य देहस्यैव देवैर्भक्ष्यमाणत्वश्रवणान्नासावप्संज्ञो जीव इति चेत्तत्राह-केवलेष्टयादिकारिणां अनात्मवित्त्वात् देहाभिमानित्वात् एतत् देवभक्ष्यत्ववचनं भाक्तं वा गौणमेव--अनात्मज्ञत्वेन देवोपकरणभावाभिप्रायपरमित्यर्थः। तथाहि 'पशुरेव स देवानामि'तिश्रुतिरनात्मविदां पशुवद्देवोपकरणत्वं दर्शयति। तस्मादात्मविदां नारायणोपकरणत्वं अनात्मविदां

---

१ षण्मासान्दक्षिणा दक्षिणां दिशं सविता प्रतिगच्छति तान् मासान्दक्षिणायनषण्मासाभिमानीर्देवता इत्यर्थः २ कथं पुनरावर्त्तते यथेतं तथा येन क्रमेणेतं गतं यथेतं तथा वर्तंत एवेत्येवमावर्त्तने एकनियमोऽभिप्रेतो नतु गतिक्रमेणैवागतिक्रमनियमोऽपि विवक्षितः पितृलोकावसंकीर्त्तनादभ्रादिसंकीर्त्तनाच्च। ३ अतोऽस्माद्व्रीह्यादिभावात् दुर्निष्प्रपतरं दुर्निर्गमतरम्; अत्रैकतकारो लुप्तो द्रष्टव्यः, दुःखेन निष्प्रपतो दुर्निष्प्रपत्तोऽतिशयेन दुर्निष्प्रपतो दुर्निष्प्रपतर इति विग्रहः। ४ पंचाग्निविद्यायामपि। ५ यजमानप्राणा आधिदैविकस्वरूपमापन्ना अग्न्यादयः। ६ सोमराजवर्षान्नरेतोगर्भरूपेणापां परिणामत्वेनैव इति तु पंचम्यामिति पुरुषवचस्त्वं गम्यते। ७ नतु मोदकादिवच्चर्वणनिगरणे कुतः तृप्तिरेव च देवानां भक्षणमिति श्रूयते। न ह वै देवा अश्नंति न पिबंत्येतदेवामृतं दृष्ट्वा तृप्यंतीत्यर्थः। ८ अनात्मवित्त्वात्पशुवद्देवानामुपकरोति हविरादानेनेति देवभोग्य इति श्रुतितात्पर्यम्।

देवोपकरणत्वमिति [1]मंतव्यम्। अतः सर्वथा जीवो भूतसूक्ष्मवेष्टित एव रंहतीति सिद्धम्।

## [2]कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८॥

सर्वत्र भूतसूक्ष्मशरीरयुक्त एव जीवः स्वर्गादिकमुपेत्य देवादिशरीरे निजकर्मानुगुणं भोगं प्राप्नोतीति सिद्धम्। इह त्विष्ट्यादिकर्मभोगानंतरं स जीवः पुनरिमं लोकं सकर्मशेषोऽवतरति निःशेषभुक्तकर्मा वेति संशयः। तथा सति पुरुषो निरनुशय एव स्वर्गादिमं लोकमवरोहतीति युक्तम्। अनुशयो नाम कर्मशेषः जीवमनुशेत इति व्युत्पत्तेः। न स्वर्गादवरोहतोऽनुशयः संभवति; अनुशयफलस्य तंत्र भुक्तत्वात् 'यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तंते यथेतमि'ति श्रुतिस्तद्विषया। अत्र संपातः कर्मसमूहः, संपातमनतिक्रम्येति यावत्संपातमित्युच्यते; अतो निःशेषं कर्मफलं भुक्त्वा कर्मरहित एव स्वर्गादवरोहति जीव इति पूर्वः पक्षः। सिद्धांतस्तु कृतात्यये इष्ट्यादिसुकृतक्षये स्वर्गात्पुनरिमं लोकमवरोहन् सकर्मशेष एवागच्छति। ननु यावत्संपातमुषित्वेति सकलकर्मफलभोगानंतरमवरोहः श्रूयत इति चेन्न, तंत्र यावत्पदस्य स्वर्गे भोक्तव्येष्ट्याद्यशेषकर्मपरत्वं ननु ततः पूर्वसंचितवासनावत्प्रारब्धभूतप्रबलकर्मांतरानुपमर्दितानारब्धफलककर्मपरत्वमन्यथा स्वर्गादिष्ट्यादिपुण्यकर्मशेषेणेहावरोहतां श्वशूकरादियोनिप्राप्तिश्रवणं सद्यः समुत्पन्नस्य बालस्य सुखदुःखभोगश्चापि न संभवेत्; कथमवगम्यते श्रुतिस्मृतिभ्याम्—'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चंडालयोनिं वे'ति श्रुतिः, 'जायंते पुण्यकर्माण' इत्यादिका स्मृतिः। तस्मादनुशयवानेवावतरति। नन्वसावारोहणे येन मार्गेण सोमराजपदं प्राप्तस्तेनैव मार्गेणावतरत्युत मार्गविशेषेण

---

१ 'देवान्देवयजो यांति मद्भक्ता यांति मामपीति स्मृतेः'। २ कृतात्ययाधिकरणम्। ३ उपभुक्तशिष्टं कर्मेत्यर्थः। ४ स्वर्गे। ५ यावदिति तस्मिंश्चंद्रलोके यावद्भोक्तव्यकर्मोषित्वा भोक्तव्यकर्मसमाप्त्यनंतरमेतमेव वक्ष्यमाणमध्वानमाकाशवायुधूमाभ्रादिरूपं प्रति पुनरागच्छंति। ६ अनुशयफलभोगविषया। ७ श्रुतौ। ८ तेषां कर्मणां मध्ये ये केचिदिह कर्मभूमौ स्वर्गे भोक्तव्यातिरिक्तं पुण्यं कृतवंतस्ते स्वर्गादवरोहंतो रमणीयां ब्राह्मणादियोनिमापद्येरन्निति यत्तदभ्याशो ह क्षिप्रं हि अवश्यमेवेत्यर्थः। ९ रमणीयचरणा रमणीयां योनिमापद्यंते, कपूयचरणाः कपूयां योनिमिति; रमणीयचरणाः पुण्यकर्माणो ब्राह्मणादिपुण्ययोनिं प्रविशंति, कपूयचरणाः कुत्सितकर्माणस्तिर्यगादियोनौ जायंते।

वेति चेत्तत्रोत्तरमाह—'यथेतमनेवं च'ेति आरोहणमार्गे श्रुतयोर्धूमाकाशयोरेवावरोहण-मार्गे श्रुतत्वाद्यथेतं यथागतमवतरतीति गम्यते । आरोहणमार्गे श्रुतानां रात्र्यादी-नामत्राश्रवणाद्वाय्वाद्यधिकश्रवणाच्चानेवं आरोहणमार्गाद्विपरीतमार्गेणैवावतरति नतु यथाश्रुतारोहणमार्गेणेत्यर्थः । पुनराशंक्य मतांतरेण परिहरति—

## चरणादिति चेन्न, तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

'रमणीयचरणाः कपूयचरणा' इति चरणशब्दान्नानुशयसिद्धेः चरणशब्दस्य स्मार्त्ताचारविषयस्य योन्यापत्तिहेतुभूतस्य चानुशयाद्भिन्नत्वादिति चेन्न, सः अनुशयपर्यायः कर्मशेष एवोपलक्षणेन अर्थो यस्याः सा तदुपलक्षणार्थेयं चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते; नहि केवलात्स्मार्ताचारादेव रमणीयारमणीययोन्यापत्त्या साक्षात्सुखदुःखप्राप्तिः संभवति; कुतस्तर्हीति चेत् पुण्यपापकर्मानुष्ठानादेव; अतश्चरणशब्दोपलक्षितोभयविधकर्मानुशयस्यैवेह सुखादिसाधकत्वमुचितमिति तदभिप्रायः ।

## आनर्थक्यमिति चेन्न, तदपेक्षत्वात् ॥ १० ॥

एवं च सति स्मार्त्ताचारस्यानुपयोगादानर्थक्यं स्यादिति चेन्न, तदपेक्षत्वात्—इष्टादिसुकृतकर्मणः स्मार्त्ताचारापेक्षत्वात् 'आचारहीनं न पुनंति वेदा' इति,

'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्' ॥

इत्यादिवचने स्मार्त्ताचारः प्रदर्शित इति कार्ष्णाजिनिमतम् ।

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्तु 'रमणीयचरणाः कपूयचरणा' इति चरणशब्देन सुकृतदुष्कृते एवोच्येते, 'पुण्यं कर्माचरति पापं कर्माचरती'ति प्रसिद्धेरिति मन्यते । एतदेव सूत्रकारस्य मतं यदाचारशब्दः सुकृतदुष्कृतयोर्वाचकः नतु लक्षक इति बादरेर्मतम् । अत्र स्मार्त्ताचारापेक्षं कर्मेति तु स्वीकृतमेव; अतः सुकृतदुष्कृतानुशयवानेव स्वर्गादवरोहति जीव इति सिद्धम् ।

## ७अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

इह यथेष्टापूर्त्तादिकारिणां चंद्रगमनं तथा अन्येषामप्यस्ति नवेति संशयः। इष्टा-

१ धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचंद्रक्रमेणारोहणम् । २ चंद्रमसः स्थानादाकाशवायुधूमाभ्रमेघक्रमेणावरोहणम् । ३ अवरोहणमार्गे । ४ अनुशयस्यैव सुखादिसाधकत्वांगीकारे सति। ५ यद् यस्माद्धेतोः। ६ बादरिमते। ७ अनिष्टादिकार्यधिकरणम्।

पूर्त्ताद्यकुर्वतामपि चंद्रगमनमस्त्येवेति पूर्वः पक्षः 'ये वैके[1] चास्माल्लोकात्प्रयंति चंद्रमसमेव ते सर्वे गच्छंती'त्यविशेपेण सर्वेपां चंद्रगमनश्रवणात्। यद्यपि तत्र[2] पापिनां भोगो नास्ति तथापि पुनरागत्य शरीरग्रहार्थं पंचमाहुतेर्लाभाय स्वर्गगतिरपेक्ष्या। तस्मादिष्टापूर्त्ताद्यकुर्वतामपि चंद्रगमनं युक्तमिति प्राप्ते सूत्रेण सिद्धांतं ब्रूमः—

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥१३॥**

इतरेपामिष्टापूर्त्ताद्यकुर्वतां चंद्रगमनं नास्ति; किंतु ते यमसदने कर्मफलमनुभूय प्रत्यवरोहंति। एवंभूतावेव तेपामारोहावरोहौ। 'वैवस्वतं संगमनं जनानामि'ति तद्गतिदर्शनम्-इष्टाद्यकुर्वतां यमलोकप्राप्तिदर्शनम्, अतो यमलोकप्राप्तिरेवोचिता तेपाम्।

**स्मरंति च ॥ १४ ॥**

इममर्थं स्मरंति च पराशरादयः 'सर्वे चैते वशं यांति यमस्य भगवन् किल' इत्यादिना।

**अपि सप्त ॥ १५ ॥**

सप्त रौरवादीनपि पापिनां महानरकान् स्मरंति। ननु पापिनां यमवशत्वमुक्तं तदयुक्तम्, रौरवादिपु चित्रगुप्तादीनां यातनादापनाधिपत्यस्मरणादिति चेत्तत्राह—

**तत्रापि तद्व्यापारादविरोधः ॥ १६ ॥**

तत्रापि चित्रगुप्ताद्यधिष्ठातृकेपु नरकेप्वपि तेपां[4] प्रेरकस्य यमस्य तदधिष्ठातृत्वव्यापारविद्यमानत्वात्सूर्यसुताधीनत्वस्य विरोधाभावः।

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥**

विद्याकर्मणोः फलभोगाद्यर्थं ब्रह्मगमनं चंद्रगमनं च। कुतः 'तद्य इत्थं विदुर्ये

---

१ तथाहि कौपितकिनः समामनंति। २ चंद्रमंडले। ३ 'न सांपरायः प्रतिभाति बालं प्रमाद्यंतं वित्तमोहेन मूढम्, अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' इति वैवस्वतं संगमनं जनानामित्यादिकं पापिनां यमलोकगतौ लिंगम्; सम्यगवश्यंभावेन परः परस्ताद्देहपातादूर्ध्वमयते गम्यते इति व्युत्पत्त्या संपरायः परलोकः तत्साधनभूतकर्मविशेपः सांपरायः स बालमविवेकिनं विशेपतो वित्तनिमित्तेन मोहेन मूढं छन्नदृष्टिं अत एव प्रमाद्यंतं प्रमादं विपर्यासक्तिं कुर्वंतं प्रति न भाति, स च बालो न केवलमज्ञ एव किंतु विपरितदर्शी यतोऽयमेव लोकोऽन्नपानादिरस्ति न पर इति मननशीलस्तस्मात्तदनुरूपं पापमाचरन् पुनःपुनर्जन्ममरणप्राप्त्या मे मम वशमापद्यत इति मृत्योर्नचिकेतसं प्रति वचनं जनानां परलोकं गतानां पापिनां संगमनं सम्यगागम्यं वैवस्वतं यमं राजानं हविपा प्रीणयतेत्यर्थः। ४ चित्रगुप्तादीनाम्।

चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवंति, अथ य इमे ग्रामे इष्टापूर्ते दत्त-मित्युपासते ते धूममभिसंभवंती'ति ब्रह्मगमने चंद्रगमने च विद्याकर्मणोरेव प्रकृतत्वात्-प्रसंगत्वात्, अतो न पापिनां तद्गतिप्रसंगः।

## [1]न तृतीये तथोपलब्धेः ॥ १८ ॥

केवलपापकर्मिणां तृतीयं स्थानम्; तस्मिन्स्थाने देहारंभाय पंचमाहुत्यपेक्षा नास्ति; कुतः तथोपलब्धेः-तथा तेषां द्युलोकगमनानर्हत्वात्पंचमाहुतिनियममंतरेणैव तृतीयस्थाने देहोपलब्धेः। 'अथैतयोः[2] पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवंति, जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न संपूर्यत' इति तृतीयं स्थानं पापकर्मिणां प्राप्यनरकादिस्थानमुक्तम्। अतः पापिनां न स्वर्गगमनम्।

## स्मर्यतेऽपि च लोके ॥ १९ ॥

लोके[3] द्रौपदेयधृष्टद्युम्नादीनां पुण्यकर्मणामपि पंचमाहुत्यनपेक्षा देहारंभाय स्मर्यते।

## दर्शनाच्च ॥ २० ॥

लोके जरायुजांडजस्वेदजोद्भिज्जेषु[4][5][6][7] चतुर्विधदेहेषु स्वेदजोद्भिज्जदेहयोः स्त्रीपुंसंबंधं विनैवोत्पत्तेर्दर्शनात्पंचमाहुत्यनपेक्षत्वम्। ननु 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवंति आंडजं जीवजमुद्भिज्जमि'ति श्रुतौ स्वेदजग्रहणं कुतो नास्तीति चेत्तत्राह–

---

१ ननु पापिनामस्मिन्लोके देहप्राप्त्यर्थं चंद्रलोकगमनमंगीकर्तव्यं 'पंचम्यामाहुतावापः पुरुषवचसो भवंती'त्याहुतिसंख्यानियमेन देहप्राप्त्यभिधानादन्यथा संख्यानियमाभावप्रसंग इत्यत आह। २ अथ ज्ञानिनां कर्मिणां च स्थानांतरोक्त्यानंतरं तदुभयसाधनहीनानां स्थानांतरोक्त्युपक्रमार्थोऽथशब्दः, पथिशब्दश्चात्र विद्याकर्मविषयः, तथा च यानि भूतानि एतयोर्यथोक्तयोरर्चिधूमादिलक्षणयोः पथोर्मध्ये कतरेणान्यतरेण न अपियंतीति शेषः यथोक्तपथिसाधनं ज्ञानं कर्म वा नानुतिष्ठंतीति यावत् तानीमानि क्षुद्राणि दंशमशककीटादीनि भूतानि असकृद्वारंवारमावर्तनशीलान्यावर्तीनि भवंति; जायस्व म्रियस्वेति पौनःपुन्येन लोणमध्यमैकवचनात्तयोः सर्वाख्यातेषु विधानात्पुनःपुनर्जायंते म्रियंते चेत्यस्मिन्नर्थे जायस्व म्रियस्वेति प्रयोगः। ३ लोके भारतादौ द्रोणधृष्टद्युम्नादीनां सीताद्रौपद्यादीनां चायोनिजत्वं स्मर्यते; तत्र द्रोणादीनां योषिदाहुतिरंका नास्ति धृष्टद्युम्नादीनां योषित्पुरुषविषये द्वे आहुती न स्त इत्याहुतिसंख्यापेक्षाया अनियमः। ४ मनुष्यादिशरीरम्। ५ पक्ष्यादिशरीरम्। ६ यूकादिशरीरम्। ७ वृक्षादिशरीरम्।

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

संशोकजस्य स्वेदजस्यापि तृतीयेनोद्भिज्जशब्देनावरोधः-संग्रहोस्तीत्यर्थः, अतः पापकर्मिणां न स्वर्गगमनमिति निश्चीयते ।

## [2]तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

पूर्वत्र फलभोगानंतरं स्वर्गात्सानुशयोऽवतरतीति निरूपितम्; तस्यावरोहत आकाशादिभावः श्रूयते 'अथैतमेवाध्वानं पुनर्निवर्त्तंते यथैतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षती'ति; अत्र यो जीवस्याकाशादिभावः स किं देवमनुष्यादिवत्तत्स्वरूपापत्तिः किंवा तत्तत्सादृश्यापत्तिरिति संदेहः। तत्र भूत्वेतिशब्दादाकाशादिस्वरूपापत्तिर्जीवस्येति पूर्वपक्षे प्राप्ते सिद्धांतं ब्रूमः—अवरोहतो जीवस्य नाकाशादिस्वरूपापत्तिः, किंतु तत्स्वाभाव्यापत्तिस्तत्सादृश्यापत्तिरित्यर्थः। कुतः उपपत्तेः—तत्र सुखदुःखाद्यनुभवाभावोपपत्तेः। सुखाद्यनुभवार्थं हि तत्तच्छरीरैकत्वसंबंधः, स च तस्य न भवति, अन्यस्यान्यत्वानुपपत्तेश्च; तस्मात्तत्सादृश्यापत्तिरवरोहत इत्येवोपपद्यत इति निर्णयः ।

## [9]नातिचिरेण विशेषात् ॥ २३ ॥

अत्रावरोहं कुर्वन् जीवस्तत्र तत्र विलंबते न विलंबते वा उतानियम इति संशयः। तत्र प्रवर्षणानंतरं व्रीह्यादिभावः श्रूयते 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायंत' इति; प्रागेतस्माच्चिरस्थायिनोर्व्रीहियवादिभावादाकाशादौ विलंबत्वरयोर्न नियम इति प्राप्ते ब्रूमः-नातिचिरेण व्रीह्यादिप्राप्तेः प्रागाकाशादिषु नातिचिरं तिष्ठति

---

१ वृक्षादिकं हि पृथिवीमुद्भिद्य जायते, स्वेदजं तु जलमुद्भिद्येत्युभयोरवयवार्थत्वाविशेषादुद्भिज्जपदेन संग्रहः श्रुतौ कृतः, न ह्येतावता चातुर्विध्यहानिर्भवति, स्थावरजंगमात्मकत्वेनोभयोर्भेदस्य दुरपह्नवत्वादिति भावः । २ तत्स्वाभाव्यापत्त्यधिकरणम् । ३ यथेतमित्युपलक्षणमनेवमित्यस्यापि । ४ यथेतमाकाशमित्यादिश्रुतौ । ५ लोके क्षीरस्य दधिभावो युक्तः क्षीरकाले दध्यभावात् इह तु पूर्वं विद्यमानाकाशादिभावो जीवस्य दुरुपपादः। किंच जीवस्याकाशस्वरूपापत्तौ वाय्वादिक्रमेणावरोहाभावप्रसंग इत्यादियुक्तिवशाद्भवति। श्रुतेर्गौणत्वमंगीकर्त्तव्यमित्याकाशादिसंबंधमात्रमेव जीवानां, संबंधश्च सादृश्यातिरिक्तो न संभवतीति सादृश्यमेवेति सिद्धम्। ६ आकाशादिषु । ७ अवरोहतो जीवस्य । ८ आकाशादिसादृश्यापत्तिः । ९ नातिचिराधिकरणम् । १० आकाशादिषु । ११ तथाविधे संशये । १२ एवमाकाशादिषु वर्षान्तेषु पूर्वसादृश्यानंतरमुत्तरोत्तरसादृश्यमित्युक्तं; तदुपजीव्य विचार्यते—किं जीवश्चिरकालमेकसादृश्येनावस्थायाऽपरसादृश्यं गच्छत्युताल्पकालमिति विषये नियामकशास्त्राभावादनियम इति प्राप्ते सिद्धांतयति ।

जीवः। कुतः विशेषात्-व्रीह्यादिभावानंतरं विशेषः कथं 'अतो वै खलु दुर्निष्प्रपतरमि'-ति व्रीह्यादिभावान्निर्गमनं दुःशकमिति हि श्रूयते[1]। अतो व्रीह्यादौ विलंबकथनेनान्यत्र त्वरेत्यवगमादाकाशादौ न विलंबते जीव इति।

## [3]अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

इह व्रीह्यादावपि जीवस्य संश्लेषमात्रमुत जन्मेति संशये 'व्रीह्यादिरूपेण जायंत' इति श्रवणात्तस्य व्रीह्यादिरूपं जन्मेति पूर्वपक्षे प्राप्ते सिद्धांतं वदामः—अन्येन जीवेनाधिष्ठिते व्रीह्यादौ जीवस्य संश्लेषमात्रमस्ति; कथं पूर्ववदाकाशादौ यथाऽवरोहतस्तस्य तत्र जननहेतुसंकीर्तनविरहिताभिलापाज्जायंत इति श्रुतिर्गौणी। यत्र ब्राह्मणादिषु जन्मास्ति तत्र 'रमणीयचरणाः कपूयचरणा' इति जन्महेतुरभिलप्यते, अतो ब्राह्मणादावेवास्य जन्माभिलापात् अन्यत्रास्या संबंधमात्रमिति निर्णयः।

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

नन्ववरोहतः पुरुषस्य पूर्वानुष्ठितयागादिष्वग्नीषोमीयादौ कृतं हिंसामिश्रं कर्म 'हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति न वा उ एतस्मिन्म्रियसे न रिष्यसी'त्यहिंसनभावशब्दाच्छुद्धं प्रतीयते इति चेन्न, रसलोलुपतया मांसभक्षणासक्तस्य हिंस्रशीलस्याहिंसाधर्मपालनासक्तस्य पुरुषस्य शुद्धवदाभासमानमप्यशुद्धमिति निश्चयात्; तथाहि श्रूयते स्मर्यतेच 'केवलेन[4] नः पशुनेष्टमसदि'ति ऐतरेयब्राह्मणे, 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं[5] येषु कर्म, एतच्छ्रेयो येऽभिनंदंति मूढा जरामृत्यू ते पुनरेवापियंती'ति मुंडके च 'अजसंज्ञानि बीजानि छागं नो हंतुमर्हथ, नैष धर्मः सतो देवा यत्र वध्येत वै पशुरि'ति; एवं च सति तत्कर्म[6] कृतवतोऽप्यवरोहतो नरस्य व्रीह्यादिभावप्राप्तिरेव हिंस्रयज्ञफलमिति नोक्तं किंतु फलान्तरमेव वक्ष्यति[7]; अतो व्रीह्यादौ संश्लेषमात्रमेव। उपपत्त्यंतरमाह—

---

१ अतोऽस्माद्व्रीह्यादिभावात् दुर्निष्प्रपतरं दुःखतरं जीवानां निःसरणं भवतीत्यर्थः। २ व्रीह्यादिभ्यो जीवस्य दुःखं निःसरणं भवतीत्युक्ते आकाशादिभ्यः सुखं निःसरणं जातमिति प्रतीयते; यथा लोके कश्चित्पंडितोऽनेकराजसभासंचारं चरित्वा कस्यांचिद्राजसभायां आंदोलिकाप्रतिष्ठां विंदते इत्युक्ते इतरासु सभासु आंदोलिकां न लब्धवानिति प्रतीयते तद्वत्। ३ अन्याधिष्ठिताधिकरणम्। ४ मेधगुणरहितेनाजादिपशुना नोऽस्माभिरिष्टं यद्यजनं कृतं तत् असत् गर्हितं कर्माऽस्ति। ५ षोडश ऋत्विजः यजमानस्तत्पत्नी चेति। ६ हिंसामिश्रं कर्म। ७ योनेः शरीरमित्यग्रिमसूत्रे उपन्यस्तशतपथब्राह्मणश्रुतौ।

## रेतःसिग्योगोऽथ ॥ २६ ॥

'यो यो ह्यन्नमत्ति यो रेतः सिंचति तद्भूय एव भवती'त्यत्रावरोहतो जीवस्याथ-व्रीह्यादिभावानंतरं रेतःसिचा पुरुषेण सह योगमात्रमुच्यते, अतः पूर्वमपि व्रीह्यादिषु योगमात्रम् ।

## [1]योनेः शरीरम् ॥ २७ ॥

यस्य यदा योषिदादियोनेः प्राप्तिस्तस्य तदैव शरीरमुत्पद्यते; शरीरोत्पत्त्यनंतरं सुखदुःखादिसंबंधाधिक्यं भवति; अतः पूर्वं सर्वत्र तु संश्लेषमात्रमिति भावः। अहिंस-यज्ञकर्तुरवरोहतो जीवस्य समीचीनब्राह्मणादिदेहोपलब्धिः, हिंसामययज्ञकर्तुस्तस्य कुत्सितपुरुषाश्वादिशरीरप्राप्तिश्च; तथा च श्रुतिः 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयामि'-त्यादिः शतपथब्राह्मणश्रुतिश्च 'स यं पुरुषमालभंत स किं पुरुषोऽभवद्यावश्वं च गां तौ गौरश्वश्च गवयश्चाभवतां यमविमालभंत स उष्ट्रोऽभवद्यमजमालभंत स शरभोऽभ-वत्तस्मादेतेषां पशूनां नाशितव्यमपक्रांतमेधा हैते पशव' इति ।

इति श्रीशुद्धैकान्तधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिवि-रचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

# तृतीयाध्याये द्वितीयपादः ।

## [2,3,4]संध्ये सृष्टिराह हि ॥ १ ॥

पूर्वत्र जीवस्य गत्यागतिनिरूपणं कृतम्; इह तदवस्था विचार्यते। संध्ये स्वप्ने 'न तत्र रथा न रथयोगा न पंथानो भवंत्यथ रथान् रथयोगान् पथः सृजत' इत्यादिना सृष्टिर-

१ नन्वनुशयिनां सर्वत्र संसर्गस्यैवांगीकारे जन्म क्वापि न स्यात् तथा 'रमणीयां योनि-मापद्येरन्नि'त्यादिश्रुतेर्निरवकाशत्वप्रसंग इति चेत्तत्राह । २ एवं जीवस्य गत्यागतिविवेककृतं वैराग्यं ज्ञानसाधनमिति सिद्धम् । ३ अधिकरणानि ५ सूत्राणि २७ । ४ संध्याऽधिकरणम् । ५ जाग्रत्सुषुप्त्योः संधौ भवे स्वप्ने । ६ न तत्रानंदा मुदः प्रमुदो भवंत्यथानंदान् मुदः प्रमुदः सृजते न तत्र वेशंताः पुष्करिण्यः स्रवंत्यो भवंत्यथ वेशंतान् पुष्करिणीः स्रवंतीः सृजते स हि कर्त्तेति ।

भिधीयते। सैषा जीवकृता नारायणकृता वेति संशयः। एवं सति जीवकृतेत्यवगम्यते 'अथ वेशंतान्पुष्करिणीः स्रवंतीः सृजते स हि कर्त्ते'ति स्वप्नदृशं जीवमेव कर्तारमाह हि श्रुतिः। किंच—

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

'य एषु सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्मिमाण' इति जीवमेव स्वप्ने कामानां निर्मातारं एके शाखिनोऽधीयते। ततः कामशब्दनिर्दिष्टाः काम्यमानाः पुत्रादयः प्रतीयंते। पूर्वत्र सर्वान्कामान् छंदतः प्रार्थयस्वेत्युक्त्वा तदनंतरं शतायुषः पुत्रपौत्रान् वृणीष्वेति तेषामेव प्रकृतत्वात्, ततश्च जीवकृतैव स्वप्नसृष्टिरिति पूर्वपक्षे प्राप्ते सिद्धांतोऽभिधीयते—

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३॥

स्वप्ने यत् रथादिसृष्टमर्थजातं तदिदं मायामात्रं नारायणकृतं न जीवकृतम्; स्वप्नदृशैकेनानुभाव्यं तत् कालमात्रावसायीत्याश्चर्यतया मायामात्रमित्युक्तम्। जीवस्य सत्यसंकल्पत्वादिकं नारायणोपासनेनानाद्यविद्यातिरोधानानंतरं श्रुतिस्मृतिषु निश्चितमतस्तस्य रथादिसृष्टिसामर्थ्यं न संभवति; अतः पुरुषो निर्मिमाण इति न जीवविषयं किंतु 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते, तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने'ति वाक्यशेषान्नारायणविषयम्; तदैकार्थ्यात्स हि कर्त्तेत्यपि तद्विषयमेव, अतो नारायणकृता स्वप्नसृष्टिरिति। इदानीं सूत्रार्थवर्णनं-स्वप्ने यदिदं सृष्टं मायामात्रं तत्तु नारायणकृतमेव न जीवकृतम्; कुतः कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्-अनाद्यविद्ययाऽनादिबद्धस्य जीवस्य निःशेषतया नारायणोपासनमृते सत्यसंकल्पत्वादेः स्वस्य चाभिव्यक्तस्वरूपत्वाभावात्। अथ जीवस्वरूपानभिव्यक्तिहेतुमाह—

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बंधविपर्ययौ ॥ ४ ॥

पराभिध्यानात्-परस्य नारायणादन्यप्राकृतविषयस्य अभिध्यानात्-संकल्पादनाद्यविद्यारूपवासनात एवेत्यर्थः, जीवस्य निजस्वरूपं तिरोहितमनादिकालतोऽतर्हितम्; तथा स्मृतिः-'अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुरा' इति नारायणाभिध्यानात्तु तदाविर्भूतमिति भावः। ततस्ताभ्यां नारायणानुपासनोपासनाभ्यां

---

१ एषु चक्षुरादिकरणेषु सुप्तेषु निर्व्यापारेष्वित्यर्थः। २ पुत्रादीनाम्। ३ यो जागर्त्ति तदेवेत्यन्वयः। ४ य एषु सुप्तेषु जागर्ती याद्युपक्रमे तदेव शुक्रमित्याद्युपसंहारे च नारायणस्वभावप्रतीतेः। ५ नारायणविषयम्। ६ जीवस्य निजस्वरूपम्।

अस्य जीवस्य बंधविपर्ययौ बंधमोक्षौ भवतो हि एव। तथाहि स्मर्यते—

'एकस्यैव ममांशस्य जीवस्य हि महामते।
बंधोऽस्याविद्ययानादिर्विद्यया च तथेतर' इति॥
'मां च योऽव्यभिचारेण भक्तियोगेन सेवते॥
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पत' इति॥

## देहयोगाद्वासोऽपि ॥ ५॥

सोऽपि जीवस्य स्वरूपतिरोधानभावोऽप्यनाद्यविद्यामयलिंगाख्यदेहयोगाद्भवति। वाशब्दोऽनुक्तसमुच्चयार्थे। नारायणज्ञानपूर्वकोपासकत्वाभावाच्च। एवं तस्य कृष्णोपासनरहिततयाऽनधिगतसत्यसंकल्पत्वादिकस्य तात्कालिकविचित्रसृष्टिसामर्थ्यं स्वप्ने न संभवति। उपपत्त्यंतरमाह—

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः॥ ६॥

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति, समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने' 'अथ स्वप्ने पुरुषं कृष्णं कृष्णदंतं पश्यति स एनं हंती'त्यादिश्रुतेः शुभाशुभसूचकश्च स्वप्नः। स्वप्नाध्यायविदश्च शुभाशुभसूचकान् स्वप्नविशेषानाचक्षते, अतो न जीवस्रष्टाः स्वप्नार्थाः। तेषां जीवस्रष्टृत्वे स्वाशुभसूचकानां सृष्ट्यभावप्रसंगापत्तिः, तस्मान्नारायणकृता स्वप्नसृष्टिरिति युक्तमेव।

## तदभावो[1] नाडीषु तच्छ्रुतेरात्मनि च॥ ७॥[2]

'अथ तद्यत्रैत्सुप्तः[3] समस्तः संप्रतिपन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सुप्तो भवतीति, अथ यदा सुषुप्तो भवति न कस्यचन वेद हि ता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठंते ताभिः प्रत्यवसृप्य पुरीतति शेत' इति, यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवती'ति चैताभिः श्रुतिभिः जीवस्य सुषुप्तौ सत्यां नाडीषु पुरीतति चात्मनि च शयनमवगम्यते। तेष्वस्य विकल्पः समुच्चयो वेति संशयः। नाड्यादीनि स्थानानि विकल्पितानि भवितुमर्हंति, एकप्रयोजनत्वात्; 'यथा व्रीहिभिर्यजेत' 'यवैर्यजेते'त्यत्र पुरोडाशनिष्पादनप्रयोजनस्यैकत्वेन

---

१ तदभावाधिकरणम्। २ एवं बाह्यकरणोपरमरूपं स्वप्नमात्मनः परोक्ष्यांतःकरणोपरमरूपां स्वप्नांतरभाविनीं सुषुप्तिं निरूपयति। ३ तत्तासु स्वप्नाद्यवस्थासु यत्रावस्थायामेतद्बाह्येंद्रियोपरमणं यथा स्यात्तथा सुप्तः सुषुप्तः संहृतबाह्येंद्रिय इति यावत् समस्तः अविशेषवृत्तिः संप्रसन्नः संहृतांतःकरणश्च यदा स्वप्नं न जानाति तदा नाडीषु सुप्त इत्यर्थः।

विकल्पः स्वीक्रियते, तथा सुषुप्तिप्रयोजनस्यैकत्वात् कदाचिन्नाडीषु शेते कदाचित्पुरीतति कदाचिदात्मनि चेति विकल्प एवात्र समुचित इति पूर्वः पक्षः। समुच्चय इति सिद्धांतः। कुतः नैकप्रयोजनत्वात्। तथाहि जीवस्य हृदयनिष्ठब्रह्मगमनमार्गतया नाडीनां साधनत्वं तासु पुरीतति च ब्रह्मणि च शयनस्य प्रासादखट्वापर्यंकवदविरोधः। अतो नाडीभिरुपसृप्य पुरीतति[1] हृदयांतर्वर्त्तिस्थानविशेषे च आत्मनि कारणशरीरव्याप्तेंऽतर्यामिरूपे ब्रह्मणि च जीवः शेत इति उपकारभेदात्समुच्चयः। सूत्रशब्दार्थविवेचनं विधीयते—तदभावः स्वप्नाभावः सुषुप्तिरित्यर्थः। सुषुप्तिर्नाडीष्वात्मनि चकारात्पुरीतति च तच्छ्रुतेः—तेषां त्रयाणां सुषुप्तिस्थानत्वश्रुतेः। उक्तेन न्यायेन समुच्चयो न्यायोपेत इत्यभिप्रायः।

## अतः प्रबोधोऽस्मात् ॥ ८ ॥

'अस्मात्सत आगत्य न विदुः सत आगच्छाम' इति कारणशरीरव्याप्तब्रह्मणः सकाशादस्य जाग्रद्रूपं प्रबोधं श्रुतिराहातः 'समुच्चय एव स्वीकार्यो ननु विकल्प' इति समाधानम्।

## [4]स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

अस्य 'सता सौम्य तदा संपन्नो भवती'ति विषयः। पूर्वत्र जीवस्य सुषुप्त्यवस्था निरूपिता। तत्र[5] ब्रह्मणि सुप्त एव जीवः पुनः प्रतिबुध्यते उतान्य इति संशयः। अन्यजीव इति प्राप्तम्। 'यद्गत्वा न निवर्त्तंत' इति ब्रह्मप्राप्तस्य जीवस्यावृत्तेरनुचितत्वात्; निरतिशयानंदे ब्रह्मणि साम्यं प्राप्तस्य जीवस्य पुनर्न दुःखमयसंसारावृत्तिरुपपद्यते; 'सता संपन्न' इति ब्रह्मापन्नः कथमुत्तिष्ठेत् को वात्र[6] विभाग इति प्राप्ते ब्रूमः—सता

---

१ केचित्तु पुरीतदिति हृदयपरिवेष्टनमुच्यते, तदंतर्वर्त्तिन्यपि हृदयाकाशे शयानः शक्यते पुरीतति शेत इति वक्तुं यथा प्राकारपरिक्षिप्तेऽपि हि पुरे वर्त्तमानः प्राकारे वर्त्तते इत्युच्यते इति मन्यंते। २ विकल्पेंऽगीकृतेऽष्टदोषप्रसंगः। तथाहि यदा जीवो नाडीषु शेते इत्यंगीक्रियेत तदा पुरीतद्ब्रह्मवाक्ययोः प्रामाण्यं प्राप्तं परित्यज्येत अप्राप्तं चाप्रामाण्यं स्वीक्रियेत; यदा पुनः पुरीतद्ब्रह्मणोः शेते तदा पुरीतद्ब्रह्मवाक्ययोः पूर्वं त्यक्तं प्रामाण्यं स्वीक्रियेत स्वीकृतं चाप्रामाण्यं परित्यज्येतेति प्राप्तपरित्यागोऽप्राप्तस्वीकारः परित्यक्तस्वीकारः स्वीकृतपरित्यागश्चेति दोषचतुष्टयं पुरीतद्ब्रह्मवाक्यकोटौ; तथा नाडीवाक्यकोटौ च दोषचतुष्टये योजिते सत्यष्टौ दोषा भवंति; ततो न विकल्पः समुच्चयोपपत्ताविति समाधिः। ३ नाडीषु प्रविश्य ततः पुरीततं प्रत्यवस्थायात्मनि शयनप्रतीतेरिति भावः। ४ कर्मानुस्मृतिशब्दविध्यधिकरणम्। ५ सुषुप्त्यवस्थायाम्। ६ ब्रह्मापन्ने जीवे।

संपन्नोऽपि यो जीवः स एव सुप्त एव प्रतिबुद्ध उत्तिष्ठति; कुतः कर्मानुस्मृतिशब्दविधिभ्यः- कर्म तावत् सुपुप्तेन पूर्वकृतं पुण्यपापरूपम्, परमात्मज्ञानराहित्येन कृतात्तेन जीवेनानुभोग्यात्कर्मणः अनुस्मृतेः'य एवाहं सुप्तः स एव प्रजागरितोऽस्मी'ति पूर्वानुभूतस्मरणाच्च। शब्दोऽपि सुप्तप्रबुद्धं व्याघ्रादिकं स एवायमिति दर्शयति। तथाहि–'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतंगो वा दंशो वा मशको वा यद्यद्भवंति तत्तदा भवंति' इति तद्भावशब्दाच्च 'ज्ञात्वा देवं मुच्यते सर्वपाशैरि'ति 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति,

'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुने'ति ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' इति ॥

'द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छंत्यमूढाः पदमव्ययं तत्' इत्यादिश्रुतिस्मृत्यभिहितमोक्षोपायविधेश्चैवं कर्मादिचतुर्भ्यः हेतुभ्यः सुप्तस्य साक्षाद्ब्रह्मप्राप्तौ सत्यां मोक्षोपायविधिवाक्यानर्थक्यप्रसंगाच्च। 'सत आगत्य न विदुरि'ति संपन्नस्य ब्रह्मानंदज्ञानाभावोक्तेर्मुक्तावित्र न ब्रह्मसंबंधः, किंत्वनाद्यज्ञानमयत्रिगुणात्मककारणशरीराच्छततया जीवस्य सता तद्व्याप्तांतर्यामिशक्तिरूपब्रह्मणा संपन्नत्वम्; अतो यो जीवः सुप्तःस एव पुनरुत्तिष्ठतीति युक्तम्।

## [३]मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

'मूर्छितः पुरुष' इति व्यवहारात् मूर्छेति काचिदवस्थानुभूयते; सैषा सुपुप्त्यादिभ्यो भिन्ना नवेति संदेहः। जागरस्वप्नसुपुप्तिभ्यो भिन्नाया अवस्थाया अप्रसिद्धत्वात् मूर्छा जागरादिष्वंतर्भूतेति पूर्वपक्षे प्राप्त उच्यते–मुग्धे मूर्छिते पुरुषे या अवस्था सा मरणार्द्धसंपत्तिः, कुतः, परिशेषात्-मूर्छितस्य कस्यचित्पुरुषस्य जीवनावशेषात् जागरादिभ्यो भिन्नेयं प्रपंचप्रतीतेरभावात् न तस्यां जागरस्वप्नयोरंतर्भावः। शब्दश्रवणादिक्रियोचितायाः सुपुप्तेः सकाशात् शब्दश्रवणादिव्यापारानर्हाऽप्रसन्नवदनादिलक्षणायाः अस्याः विशेषात् सुपुप्तौ नांतर्भावः, ततोऽप्यन्यावस्था मूर्छेति।

---

१ क्षेत्रज्ञम्। २ तथा। ३ मुग्धाधिकरणम्। ४ अर्द्धा मरणावस्थायाः कंपनादिधर्मरूपा संपत्तिः यस्याः सा मूर्छेत्युच्यते। ५ मूर्छावस्था। ६ मूर्छावस्थायाः। ७ मूर्छावस्थायाः।

## [1]न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि ॥ ११ ॥

पूर्वेषु सूत्रेषु जीवस्य स्वरूपधर्मगत्यागत्यवस्थानां भेदनिरूपणं कृतम्; अतः परं नारायणस्य स्वरूपधर्मादिकं निरूप्यते। 'यः पृथिव्यां तिष्ठन्नि'त्यादिषु नारायणस्य सर्वात्मकतया प्रवेशः श्रूयते; तस्य सर्वावस्थासु सर्वांतर्यामितयावस्थितौ तत्तद्दोषकलंकः प्रसज्यते नवेति संशये प्रसज्यत इति पूर्वः पक्षः। तथाहि यदि प्रकृतिसंबंधोऽप्यस्या[2]भ्युपगम्येत तर्हि जीववदसावपि सकलविकारदोषास्पदं भवेदिति प्राप्ते सिद्धांतं ब्रूमः—परस्य परमात्मनः सर्वावस्थासु सर्वांतर्यामितयाऽवस्थानादपि न तस्य[3] कश्चिद्दोषकलंकप्रसंगः, कथमिति चेत्तत्राह—सर्वत्र श्रुतिषु स्मृतिषु चास्य निरस्तसमस्तदोषकलंकत्वं निरतिशयमंगलगुणाकारत्वं चेत्युभयं[4] लिंगं हि प्रसिद्धम् 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' 'निरवद्यं निरंजनं' 'यः सर्वज्ञः सर्वविदिति, 'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' 'परः पराणां सकला न यत्र क्लेशादयः संति परावरेश' इत्यादिकासु तासु। तस्मात्पृथिव्यादिष्वंतर्यामितयावस्थानतोऽपि न दोषः।

## भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

यथा जीवस्य परमात्मोपासनेनापहतपाप्मत्वादिगुणभाजनस्यापि देवादिशरीरसंबंधित्वावस्थाभेदात्सकलदोषवत्त्वं तथा परस्यापि 'यस्य पृथिवीशरीरमि'ति शरीरसंबंधित्वावस्थाभेदाद्दोषाः स्युरिति चेन्न, प्रत्येकं प्रतिपर्यायमतद्वचनात्-दोषासंबंधित्ववचनात् 'यस्य पृथिवी शरीरमित्यादिषु 'एष त आत्मांतर्याम्यमृत' इत्यंतास्वंतर्यामिब्राह्मणश्रुतिष्वंतर्यामिणो हि निर्दोषत्वमुच्यते। जीवस्य तु पराभिध्यानात्तत्स्वरूपं तिरोहितमित्युक्तम्।

## अपि चैवमेके ॥ १३ ॥

अपि च एकस्मिन् शरीरे शरीरशरीरित्वेनावस्थितयोरपि जीवपरयोर्द्दोषसंबंधित्वतद्विपरीतत्वलक्षणो विशेषो यथा प्रसिध्यति तथैके शाखिनोऽधीयते 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्यो अभिचाकशीती'ति; अतो न जीववन्नारायणे दोषप्रसंगः। जीवपरयोः शरीरस्थितिसाम्येऽपि स्थितिवैषम्यमाह—

१ उभयलिंगाधिकरणम्। २ नारायणस्यापीत्यन्वयः। ३ नारायणस्य। ४ द्वयं स्वरूपज्ञापकचिन्हम्।

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

तत् मूर्त्तिमत् परब्रह्म देवमनुष्यादिशरीरेषु शरीरितयावस्थितमपि अरूपवत्-रूपरहितवस्तुवन्निर्लेपतयैव वर्त्तते; कुतः प्रधानत्वात्-तस्य चिदचिन्नामरूपनिर्वाहकत्वेन मुख्यत्वात्; तथाहि श्रूयते 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्मे'ति नामरूपयोरंतराले तत्कार्यस्पर्शरहित एव वर्त्तते इति स्वातंत्र्यमुक्तं, कर्मफलभोगार्थं हि जीवस्य शरीरे स्थितिरिति पारतंत्र्यमुक्तम्, अत उभयोर्वैषम्यम् ।

## प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथा 'तच्छुभ्रं ज्योतिषां ज्योतिरि'ति 'तस्य भासा सर्वमिदं विभाती'ति 'सत्यं ज्ञानमनंतं ब्रह्मे'ति वाक्यावैयर्थ्यात् प्रकाशवत्—असंख्यकोटिसूर्यचंद्रतुल्यप्रकाशयुक्तं परब्रह्मणः स्वरूपमिति विज्ञायते; तथा 'यः सर्वज्ञः सर्ववित्' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिवचनावैयर्थ्याच्च निरवद्यं कल्याणगुणकरं परब्रह्मणः स्वरूपमिति हि विज्ञायते, अतस्तदुभयलिंगमेव ।

## आह च तन्मात्रम् ॥ १६ ॥

'ज्योतिषां ज्योतिः' 'सत्यं ज्ञानमनंतं ब्रह्मे'त्यादिश्रुतिवृंदं ब्रह्मणस्तन्मात्रं-प्रकाशबहुलात्वतं स्वरूपमाह, नतु कल्याणगुणगणविशिष्टपुरुषाकृतित्वं निवारयति ।

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' ॥

' न तत्समश्चाभ्यधिकश्च दृश्यते' ' आत्मैवेदमग्र आसीत्पुरुषविधः' ' यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः' 'शांतं निरवद्यं निरंजनमि'त्यादिश्रुतिकलापो ब्रह्मणोऽस्पृष्टसकलदोषत्वं कल्याणगुणगणवत्त्वं च दर्शयति; अथो स्मर्यतेऽपि च—'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ' ' उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ' ' मां भजंति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासंगादयोऽगुणा ' इति; अगुणाः—गुणत्रयपरिणामरहिता गुणा इत्यर्थः । तथा पराशरश्च ' स सर्वभूतः प्रकृतेर्विकारान् गुणादिदोषांश्च मुने व्यतीत' इत्यादिस्मृतिगणेन हेयगुणराहित्येन कल्याणगुणसहिततया च ब्रह्मणो रूपमुभयलिंगं निरूप्यते ।

---

१ तयोर्नामरूपयोर्यत्कार्यं तज्जन्यसुखदुःखादि तस्य स्पर्शरहित एव । २ परब्रह्म । ३ तथा ।

## अतएव चोपमा सूर्यकादिवत् ॥१८॥

यतः पृथिव्यादिषु सर्वेषु चेतनाचेतनेषु स्थितस्यापि नारायणस्य निर्दोषत्वं कल्याणगुणगणाकरत्वं चोक्तम्, अत एव शास्त्रेषु जलदर्पणादिप्रतिबिंबितसूर्यादिवत्परमात्मन उपमा क्रियते–'आकाशमेकं हि यथा घटादिषु पृथग्भवेत्, तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमानि'ति। अत्र[1] वस्तुतः स्थितमाकाशं वस्तुनोऽनवस्थितं सूर्यं चोपमानमुपादत्ते, अनेनाभिप्रायेण यथैकमेवाकाशं घटादिषु पृथक् पृथगेव व्याप्य स्थितं तथैक एवात्मा–परमात्मा एकदेशस्थश्चेतनाचेतनेष्वंतर्यामितया पृथक् पृथग्व्याप्य स्थित इति नारायणस्यैकस्य बहुषु स्थित्या नभ उपमानम्; जलाधारेषु वस्तुतोऽनवस्थितस्य सूर्यस्य यथा न [2]तद्विकारादिदोषस्पर्शः तथा पृथिव्यादिषु वस्तुतोंऽतर्यामिशक्त्या स्थितस्यापि नारायणस्य न [3]तद्विकारादिदोषस्पर्श इति सर्वांतर्यामिणो नारायणस्य निर्दोषत्वं स्वरूपगुणाद्यहानिश्चेति सूर्योपमानं दिव्यपुरुषाकारस्य तस्यैकदेशस्थित्यांतर्यामिशक्त्या सर्वत्र व्याप्त्या चापि [4]तदुपमानम्, अत आकाशाद्युपमयापि सर्वात्मनो नारायणस्य सिद्धमुभयलिंगत्वम्। अत्राशंकते–

## अंबुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

अंबुवदिति सप्तम्यंताद्वतिप्रत्ययः। अंबुनि सूर्यस्य यथा वस्तुतोऽग्रहणाद्ग्रहणं नास्ति नारायणस्य तु न तथात्वम्;[6] तदेव स्पष्टयति–अंबुनि यथा भानुरवस्तुतया गृह्यते तथा चेतनाचेतनेषु नारायणोऽवस्तुतया न गृह्यते, किंतु परमार्थतोंऽतर्यामिशक्त्या तत्र स्थित एव गृह्यते, स्वैकांतिकभक्तेषु तु स्वयमेव स्थितश्च। अतः कथमस्य निर्दोषत्वमिति शंकायाः परिहार उच्यते–

## वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवंदर्शनाच्च ॥२०॥

नेत्यनुवर्त्तते। वस्तुतः पृथिव्यादिष्वंतर्भावादपि नारायणस्य तद्गतवृद्धिह्रासभाक्त्वं न भवतीति पूर्वोक्तोभयदृष्टांतग्रहणसामंजस्यादेव गम्यते। उक्तं हि वस्तुतोऽनवस्थितस्य सूर्यस्य स्थितस्य चाकाशस्योपमानत्वेन ग्रहणं सर्वत्रांतर्यामितयाऽवस्थि-

---

१ लोके। २ तेषां जलाधाराणां यो विकारः कंपादिरूपस्तदादिदोषस्पर्शः। ३ तेषां पृथिव्यादीनां विकाराः परिणामास्तदादिदोषस्पर्शः। ४ सूर्योपमानम्। ५ निर्दोषत्वं स्वरूपगुणाद्यहानिश्चेत्युभयलिंगत्वम्। ६ वस्तुतोग्रहणाभावत्वम्। ७ चेतनाचेतनेषु। ८ गृह्यते इत्यन्वयः। ९ वस्तुतोंऽतर्यामिशक्त्या स्वनिवासादपि। १० पृथिव्यादिगत। ११ दृष्टांतद्वये इति शेषः।

तस्यापि नारायणस्य न तद्दोषस्पर्श इति ज्ञापयितुमस्तीति; एवं तथा दृश्यते विवक्षितधर्मसाम्यज्ञापनमात्रेण चंद्रवन्मुखमिति दृष्टांतः। तस्मादुभयलिंगसिद्धिः पृथिव्यादिषु वस्तुतः स्थितस्यापि नारायणस्य। अथवा 'अश्व इव रोमाणि विधूय पापमि'त्यादिश्रुतावपि दृश्यते विवक्षितधर्मसाम्येन दृष्टांतः—अश्वो यथा रोमाणि सहजानि स्वावयवभूतानि त्यजति तथा जीवस्तु कदाचित्स्वकृतान्यनवयवभूतानि कर्माणीति तदर्थः। अतो विवक्षितधर्मसाम्येनोभयदृष्टांतसामंजस्यात् उभयलिंगमेव ब्रह्मेति सिद्धं, तथा सूर्याकाशदृष्टांताभ्यां मूर्त्तिमतो नारायणस्यैकदेशस्थत्वं सर्वगतत्वं च सिद्धम्। उभयलिंगासंभवमाशंक्याह—

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः॥ २१॥**

पूर्वत्र ब्रह्मण उभयलिंगत्वं साधितं तत्र बाधोऽस्ति नवेति संदिह्यते। 'द्वे वा ब्रह्मणो रूपे मूर्त्तं चामूर्त्तं चे'त्यादिना बृहदारण्ये पृथिव्यप्तेजोवाय्वाकाशात्मकं मूर्त्तामूर्त्तप्रपंचं रूपं ब्रह्मण उक्त्वा 'अथात आदेशो नेति नेती'ति श्रूयते। अत्रेति शब्दस्य पूर्वप्रकृतपरामर्शित्वात् ब्रह्मणः पूर्वप्रतिपादितं मूर्त्तामूर्त्तप्रपंचरूपत्वं निषिध्यत इति प्राप्ते ब्रूमः—नेति नेतीति वाक्येन पूर्वप्रसिद्धं ब्रह्मणः प्रपंचरूपत्वं न निषिध्यते; प्रमाणांतरैरप्रज्ञातत्वेनाभिहितस्य स्वधामस्थस्य प्रपंचरूपतयोक्तस्य च ब्रह्मणस्तत्र व्यापकतया प्रतिषेधायोगात्, किंतु प्रकृतैतावत्त्वं ब्रह्मणः प्रकरणप्राप्तमेतावन्मात्रत्वं न भवतीति प्रकृते ब्रह्मणीयत्तामेव नेति नेतीतिवाक्यं प्रतिषेधतीति युक्तं, ततश्चोक्तात्स्वरूपनिरूपणादपि भूयो भूयस्त्वं ब्रवीति नेति नेतीत्यादेशः। तथाहि न ह्येतस्मादिति वाक्येन नेतीति निर्दिष्टात् ब्रह्मणोऽन्यन्नास्त्युत्कृष्टमित्युच्यते; अथ नामधेयं 'सत्यस्य सत्यमि'ति ब्रह्मणो नामधेयमुच्यते; तदर्थनिर्वचनं 'प्राणा वै सत्यं तेषामेष सत्यमिति; प्राणा जीवात्मानः सत्यं वियदाद्युत्पत्तिवदुत्पत्त्यभावात्तेषां तेभ्यः सत्येभ्यो ह्येष परमात्मा' सत्यं तद्वज्ज्ञानसंकोचाद्यभावात्; इत्थं वाक्यशेषोदितसत्यशब्दोपलक्षितापहतपाप्मत्वादिगुणजातयोगाद् ब्रह्मणो न मूर्त्तामूर्त्तरूपप्रपंचपरत्वं नेति नेतीति वाक्यस्य, किंतु पूर्वकृतधर्मेयत्तामात्रप्रतिषेधपरत्वमिति निश्चीयते; अतो ब्रह्मणः पूर्वसिद्धमुभयलिंगत्वं न हीयते एव; एवं तावत्तस्य

१ अस्पृष्टसकलदोषत्वं स्वरूपगुणाहानिश्चेत्युभयलिंगत्वं तस्य सिद्धिरित्यर्थः। २ श्रुत्यर्थः। ३ मूर्त्तामूर्त्तप्रपंचे। ४ पृथिव्यादितुल्यत्वम्। ५ अपहतपाप्मत्वादिगुणविशिष्ट इति शेषः। ६ कर्मानुगुण्येन जीवज्ञानसंकोचादिवत्। ७ वस्तुतश्चिदचिदंतर्यामितयाऽवस्थितस्यापि परब्रह्मणोऽस्पृष्टसकलदोषत्वं स्वरूपगुणाहानिश्चेत्युभयलिंगत्वम्।

प्रमाणांतरागोचरत्वात्तच्छरीरतयोपदिष्टमूर्त्तामूर्त्तरूपप्रपंचस्य तच्छरीरानुवादावगतं यदेतावत्त्वं तत्प्रतिषिद्धम् । तदेव प्रमाणांतरागोचरत्वं द्रढयति–

**तदव्यक्तमाह हि ॥ २२ ॥**

तद्ब्रह्मस्वरूपं प्रत्यक्षादिना प्रमाणांतरेण नाभिव्यज्यते 'न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनमि'त्यादिना यतः श्रुतिराह, अतः स्वधामस्थं ब्रह्मस्वरूपं यथावस्थितं प्रत्यक्षादिप्रमाणगम्यं न भवति । ब्रह्मस्वरूपग्रहणे त्तुपायमाह–

**अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥**

अपि तु ज्ञानेन नवविधभक्त्या च सम्यगाराधने ब्रह्मस्वरूपं गृह्यते, ये परमभावयुक्ताः परब्रह्मोपासते तेषां ब्रह्मस्वरूपं ग्रहणयोग्यं भवतीति श्रुतिस्मृतिभ्यामवगम्यते; 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वामि'ति-एष आत्मा परमात्मा स्वां तनूं स्वकीयां रमणीयां मूर्त्तिं वृणुते ददातीत्यर्थः, ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति; 'निष्कलं ध्यायमान' इत्यादिका श्रुतिः,

'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।'
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप' ॥ इति
तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।
पश्यंत्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया' ॥

इत्यादिका स्मृतिश्च ।

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥**

ज्ञानानंदवत् चेतनाचेतनात्मकजगदैश्वर्यमपि परब्रह्मणो रूपमिति दर्शयति शास्त्रम्; एकेषां वामदेवादीनां दिव्यमूर्त्तिपुरुषोत्तमसंराधनरूपे कर्मणि अभ्यासात् प्रकाशश्च संजातः-ज्ञानानंदमयमूर्त्तेर्नारायणस्य दर्शनं संजातमित्यर्थः, तेषां तद्दर्शने जाते सति प्रकाशादिवत् परब्रह्मणो ज्ञानानंदादिधर्मवत् जगदैश्वर्यस्याप्यवैशेष्यं प्रतीयते शास्त्रे 'तद्वैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे'त्यादौ । उभयलिंगत्वमुपसंहरति–

१ न चक्षुषा गृह्यते नापि वाचेत्यादि । २ वामदेवादीनाम् । ३ नारायणदर्शने ।

## अतोऽनंतेन तथा हि लिंगम् ॥ २५ ॥

अत उक्तैर्हेतुभिः अनंतेनासंख्येन मंगलगुणगणेन सह योगः परब्रह्मणः प्रतिपादितः, तथा एवं सति तस्योभयलिंगत्वं सिद्धमेव। ब्रह्मशरीरभूतस्य स्थूलसूक्ष्मोभयावस्थावस्थितस्याचिद्वस्तुनो 'द्वे वाव ब्रह्मणो रूपे मूर्त्तं चैवामूर्त्तं चे'-त्यादिना मूर्त्तामूर्त्तत्वमुपदिष्टं, तच्चाहिकुंडलरज्जुन्यायेन प्रपंचयति–

## [२]उभयव्यपदेशात्त्वहिकुंडलवत् ॥ २६ ॥

अहिकुंडलवदहिप्रसारकुंडलभाववत् अचेतनप्रपंचस्य मूर्त्तामूर्त्तत्वे वेदितव्ये; तथाहि अहेः सर्पस्य यथा देहप्रसारो विकाशः कुंडलाकृतिः संकोचश्च, तद्वदचेतनशरीरकस्यांतर्यामिरूपस्य परमात्मनोऽपि सृष्टिप्रलयकालयोर्विकाशसंकोचाभ्यां मूर्त्तामूर्त्तत्वे वेदितव्ये; तत्र मूर्त्तत्वं नाम रूपभाक्त्वम्, अमूर्त्तत्वं नाम रूपविभागानर्हभाक्त्वमिति विवेकः। सूत्रेऽनुक्तसमुच्चयवाचकचार्थस्तुशब्दोऽचेतनवस्तुनोऽप्यहिप्रसारकुंडलभाववन्मूर्तामूर्त्तत्वे विज्ञापयति। अत्रायमाशयः-सर्पस्य ऋजुभावकुंडलभाववत्कार्यकारणोभयावस्थावस्थितचेतनाचेतनात्मकप्रपंचगते विकाशसंकोचाभ्यां मूर्त्तामूर्त्तत्वे तत्तच्छरीरिणः परमात्मन एव संपद्येते इति; कुत एतन्मूर्त्तामूर्त्तत्वमवगम्यते उभयव्यपदेशात्–'अस्मान्मायी सृजते विश्वमेतदि'ति 'हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति 'ब्रह्मैवेदं सर्वमात्मैवेदं सर्वमि'त्यादिश्रुतिषु कार्यकारणोभयावस्थावस्थितानां चेतनाचेतनानां नामरूपविभागभावाभावनिर्देशात्। इत्थं चेतनाचेतनात्मकप्रपंचशरीरकस्य परमात्मनः कार्यकारणरूपावस्थाद्वयेन प्रतिपादितस्य मूर्त्तामूर्त्तात्मकरूपद्वयस्यैक्यमाह दृष्टांतेन—

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥

वाशब्दोऽवधारणे। प्रकाशाश्रयवत्–दिव्यमूर्त्तेर्नारायणस्य प्रकाशः तदाश्रयो नारायणस्तयोः प्रभाप्रभावतोर्यथा भिन्नत्वेऽपि तेजस्त्वात्–प्रकाशत्वेनैकजातियोगादेकत्वमस्ति, तथा सूक्ष्मावस्थावस्थितचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म स्थूलावस्थावस्थितचिद्वस्तुविशिष्टं कार्यभूतं ब्रह्म तयोरवस्थाद्वयरूपविशेषणसंबंधप्रयुक्तविषयवैलक्षण्येन भिन्नयोरपि चिदचिद्विशिष्टयोर्ब्रह्मणोरभेद एवेत्यर्थः। किंच—

---

१ तत्प्राग्व्याख्यातम्। २ अहिकुंडलाधिकरणम्।

## पूर्ववद्वा ॥ २८ ॥

वाशब्दोऽवधारणार्थः । पूर्ववदेव यथा पूर्वत्र अंशो नानाव्यपदेशात् प्रकाशादिवत्तु, नैवं पर इत्युभयनिर्देशसिद्धये परमात्मनो निर्दोषत्वोपपत्तये च शरीरशरीरिवत् पृथक्सिद्ध्यनर्हतया जीवस्य ब्रह्मांशत्वमभिहितम्, एवमचिद्वस्तुनोऽपि ब्रह्मांशत्वं तथा आत्मपृथिव्यादिचेतनाचेतनवाचकशब्देनापि चिदचिद्वस्तुविशिष्टं ब्रह्मैवाभिधेयमस्ति; तथा श्रुतिषु शरीरशरीरिभावेन जगद्ब्रह्मणोः 'आत्मैवेदं सर्वं ब्रह्मैवेदं सर्व'मित्यभेदव्यपदेशोऽस्ति; जगद्ब्रह्मणोः स्वरूपस्वभावादिभेदज्ञापनाय तयोः पृथक् पृथङ्निरूपणेन भेदव्यपदेशश्चोपपद्यते; 'यस्य पृथिवी शरीरं यं पृथिवी न वेद यस्यात्मा शरीरं यमात्मा न वेद' 'क्षरं त्वविद्या ह्यमृतं तु विद्या' 'विद्याविद्ये ईशते यस्तु सोऽन्य' इत्यादिना ब्रह्मणो निर्दोषत्वं च ।

## प्रतिषेधाच्च ॥ २९ ॥

'स वा एष महानज आत्माऽजरोऽमरः' 'नास्य जरयैतज्जीर्यति विजरो विशोको विमृत्यु'रित्यादिषु ब्रह्मणोऽचेतनधर्मप्रतिषेधाच्च व्याप्यव्यापकभावेन शरीरशरीरिभावेन चांशांशिभाव इत्यभिप्रायः ।

## [4]परमतः सेतून्मानसंबंधभेदव्यपदेशेभ्यः ॥ ३० ॥

'जन्माद्यस्य यत' इत्यादिना प्रतिषेधाच्चेत्यंतेन यः परमकारणतया प्रतिपादितो नारायणः, अतः परमपि वस्त्वस्ति नवेति संशये परमस्तीति पूर्वः पक्षः। तथाहि 'अथ य आत्मा स सेतुर्विधृतिरेतं सेतुं तीर्त्वा अंधः सन्ननंधो भवती' त्यत्रास्य सेतुत्वव्यपदेशात्; एतं सेतुं तीर्त्वेत्यत्रास्य तरितव्यत्वव्यपदेशाच्चात्रोक्तात्परमन्यद्ब्रह्मास्तीति गम्यते। 'चतुष्पाद्ब्रह्म षोडशकलमि'ति परिमितत्वेन चोन्मानव्यपदेशादपरिमितमन्यदस्तीत्यवगम्यते; 'अमृतस्यैष सेतुरि'ति प्रापकत्वेन श्रुतिव्यपदेशाच्च प्राप्यमन्यदस्तीति प्राप्यप्रापकत्वरूपसंबंधात्प्रतीयते; तथा 'तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरमि'ति पुरुषशब्दनिर्दिष्टाद्ब्रह्मण उत्तरत्वेन भेदव्यपदेशाच्चान्यत् परमस्तीति प्राप्ते वक्ष्यमाणसूत्राण्यालंब्य सिद्धांतं ब्रूमः—न ह्येतस्मादिति नेत्यन्यत्परमस्तीत्युपदिष्टात्परब्रह्मणः

---

१ द्वितीयाध्यायतृतीयपादे । २ इति सूत्रद्वये जीवपरमात्मनोर्भेदाभेदश्रुतिसिद्धये । ३ एवं ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेन चोभयलिंगत्वमपि सिद्धम् । ४ पराधिकरणम् । ५ नारायणस्य । ६ सेतुशब्दस्य च लोके कूलांतरप्राप्तिहेतौ प्रसिद्धेः । ७ अथ य इतिश्रुतौ उक्तात् आत्मशब्दवाच्यवस्तुनः ।

परमन्यन्नास्तीति परत्वनिषेधेन सर्वकारणात्परब्रह्मणः परं वस्त्वंतरं नास्तीति निश्चीयते। तस्य सेतुत्वव्यपदेशस्त्वेषां लोकानामसंभेदायेति सकललोकासंकरताकारकत्वात्; एतं सेतुं तीर्त्वा सेतुरूपमेतं नारायणं प्राप्येति प्राप्तिवाचकस्तरतिधातुः वेदांतं तरतीवत्; चतुष्पाद्ब्रह्म षोडषकलमित्युन्मानव्यपदेशोऽपि 'वाक्पादः प्राणपादश्चक्षुष्पाद' इतिवदुपासनप्रयोजनतया संभवति। अपरिमितस्यापि ब्रह्मणोऽमितत्वानुसंधानं तैत्तद्देशसंबंधितयावसेयम्। 'अमृतस्यैष सेतुरि'ति स्वस्यैवामृतस्य स्वयमेव प्रापकमित्युच्यते 'यमेवैष वृणुते तेन लभ्य' इत्यादिश्रुतेः, ततो यदुत्तरतरमिति वचनं तेनेदं पूर्णमिति निर्दिष्टात् पुरुषादन्यस्य न परत्वमाह, अपि तु 'तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति पूर्वप्रतिज्ञातपुरुषवेदनस्यामृतत्वे हेतुत्वं वदति; तद्वेदनादन्यस्य चाऽयथात्वं वददुपसंहरति; यस्मात्परं नापरमस्ति किंचिदित्यारभ्य; 'तेनेदं पूर्णं पुरुषेण सर्वमिति परस्य पुरुषस्य च सर्वस्मात्परत्वमन्यस्य परत्वाभावं प्रतिपाद्य यदुत्तरतरं पुरुषतत्त्वं तदेव रूपमनामयं यतः ततो हेतोर्ये एतत्पुरुषतत्त्वं विदुः त एवामृता भवंति अथेतरे दुःखमेवाऽपियंती'ति प्रतिज्ञातमनेन पूर्वपक्षो व्यावृत्तः। तान्येव सूत्राण्याह—

## सामान्यात्तु ॥ ३१ ॥

तुशब्दः पूर्वपक्षव्यावर्त्तकः। तस्य सेतुत्वव्यपदेशस्तु तस्मान्नारायणान्नान्यबोधकः, कुतः,सामान्यात्-लोकविधृतिरूपेण सेतुसादृश्याद्धेतोः,अतस्तस्य तथा व्यपदेशोऽस्तीति श्रुतिरेव सेतुशब्दं वक्ति 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाये'ति; यद्यत्स्वभावान् लोकानसृजत तत्तत्स्वभावाऽसंकराय सर्वान् लोकानयमेव सेतुवदंतर्यामिरूपेण बिभर्ति इति हेतोः स सेतुरित्यर्थः।

## बुद्ध्यर्थः पादवत् ॥ ३२ ॥

पादवत्-'वाक्पादः प्राणपादश्चक्षुष्पाद' इतिवत् चतुष्पाद्ब्रह्म। 'पादोऽस्य विश्वा-भूतानीत्युन्मानव्यपदेशो बुद्ध्यर्थः--वेदनरूपोपासनार्थः।

---

१ चतस्रो दिशः एकः पादः, पृथिव्यंतरिक्षं द्यौः समुद्र इति द्वितीयः पादः, अग्निः सूर्यश्चंद्रमा विद्युदिति तृतीयः पादः, चक्षुः श्रोत्रं वाङ्मन इति चतुर्थः पादः इतिश्रुतावुपासनार्थं चतुष्पाद्ब्रह्मेत्युक्तमिति मंतव्यम्। २ वागादिस्थानविशेषसंबंधितया। ३ राजसतामससात्त्विकस्वभावान्।

## स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥

अपरिमित एव यद्यपि नारायणस्तथाप्यस्य स्थानविशेषात्परिच्छेद्यतयानुसंधानं युज्यते; यथा विततस्य प्रकाशादेरपि वातायनघटादिस्थानविशेषसंबंधात् परिमितत्वमस्ति तथा युज्यते। अथ प्राप्यस्य प्रापकत्वं चास्तीत्याह–

## उपपत्तेश्च ॥ ३४ ॥

प्राप्यस्यैव नारायणस्य प्रापकत्वं चोपपद्यते यथाह 'यमेवैष वृणुते तेन लभ्य' इति; अतो नारायणान्नास्ति परमिति सिद्धम्।

## तथान्यप्रतिषेधात् ॥ ३५ ॥

'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' 'आत्मैवेदमग्र आसीत्पुरुषविधः' 'तमाहुरग्र्यं पुरुषं पुराणम्' 'तेनेदं पूर्णं पुरुषेण सर्वं यस्मात्परं नापरमस्ति किंचित्' यस्माद्दिव्यपुरुषाकाराद् ब्रह्मणः सकाशादपरं किंचित् किमपि वस्तु परमुत्कृष्टं नास्तीत्यर्थः–इत्यादिश्रुतिषु यथा पुरुषाकृतेर्नारायणादन्यस्य श्रेष्ठत्वप्रतिषेधः तथा तेन नारायणेन सहान्यस्य सदृशत्वप्रतिषेधात् स एव सर्वोपास्यस्तद्ज्ञानेनैव मोक्षो भवतीति निश्चीयते। तथाहि श्रूयते-'न तत्समश्चाभ्यधिकश्च दृश्यते न सदृशे तिष्ठति रूपमस्य' 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति, 'एतद्विदुरमृतास्ते भवंति यथेतरे दुःखमेवापियंती'ति, स्मर्यते च 'निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नम' इति। पुनरपि नारायणेन सदृशं तदुत्कृष्टं च किंचिदपि वस्तु नास्तीत्याह–

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥

आयामो व्याप्तिः, अनेन दिव्यविग्रहपुरुषोत्तमस्य प्रकाशात्मकांतर्यामिरूपेण सर्वगतत्वं 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वमि'ति "अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः[१]' 'नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यंती'ति, व्याप्तिवाचकशब्देभ्योऽवगम्यते; एवं विज्ञानमेव तस्माद्ब्रह्मणोऽन्यच्छ्रेष्ठं वस्तु निषेधतीति तात्पर्यम्; आदिशब्देन 'सर्वं खल्विदं ब्रह्म' 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वमि'त्यादयो गृह्यंते। 'जन्माद्यस्य यत' इत्यादिभिः सूत्रैरभिहिताज्जगत्कारणाद्ब्रह्मणोऽन्य उत्कृष्टो नास्ति, तेन सदृशोऽपि नास्तीति निश्चीयते। एवमुक्तः सर्वात्मा

---

१ अस्मिन् जगति अंतर्मध्ये ततो बहिश्च यत्किंचिच्चिदचिद्वस्तुजातं दृश्यते श्रूयतेऽपि वा तत्सर्वं व्याप्येत्यर्थः।

नारायणः स्वोपासनरूपाणां च वेदोक्तकर्मणां तत्तद्देवतांतर्यामिरूपेण स्वयं च फलदाता भवतीति निरूपयितुमिदमधिकरणमाह—

## [1]फलमत उपपत्तेः ॥ ३७ ॥

पूर्वत्र सर्वेश्वरतया प्रतिपादितस्य नारायणस्यैव सर्वेषामनुष्ठातॄणामनुष्ठानफलदातृत्वमुतान्यस्येति संशयः। अनुक्षणविनाशिनोऽपि कर्मणोऽपूर्वं व्यवधानेन कालांतरभाविफलदाने सामर्थ्यमस्त्येव, ततः कर्मणः फलदातृत्वे सिद्धे सति [2]तदतिरिक्तफलप्रदायकनारायणकल्पने प्रयोजनाभावात्तस्य[3] फलदातृत्वमिति पूर्वः पक्षः। सिद्धांतस्तु अतः नारायणादेवाराधितात्सर्वेषां कर्मफलसिद्धिः, उपपत्तेः-सेवितराजादिवदुपासिताद्धि नारायणादुपासकानां फलसिद्ध्युपपत्तेः। न ह्यचेतनस्य कर्मणस्तदपूर्वसंज्ञसामर्थ्यस्य वा तारतम्येन [4]प्रतिनियतं फलं ज्ञातुं दातुं सामर्थ्यमस्ति। सेवाक्रियायामचेतनायां तथा दर्शनात्। इह शास्त्रसिद्धस्य नारायणस्याकल्प्यत्वान्न प्रयोजनाभावः। तथाहि श्रूयते 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमधो निनीषत' इति श्रुतिर्नारायणस्यैव धर्माधर्मफलदातृत्वं देशकालप्रकृत्याद्यनुगुणमतिदानेन तत्कारयितृत्वं च वदति, प्रत्युत अपूर्वस्यैवाश्रुतस्य कल्पने प्रयोजनाभावं तस्मात्कर्मभिराराधितव्यो नारायण एव फलदाता न कर्मेति निर्णयः।

## श्रुतत्वाच्च ॥ ३८ ॥

श्रूयते हि सर्वकर्मणां फलप्रदाता नारायण एव 'स वा एष महानज आत्मा अन्नादो वसुदानः एष ह्येवानंदयती'ति वसुशब्दवाच्यं भोगापवर्गाख्यफलं ददातीति फलप्रदातृत्वेन श्रुतत्वात् स एव फलप्रदाता सर्वयज्ञाराध्यश्चेत्यवगम्यते। पक्षांतरमाह—

## धर्मं जैमिनिरत एव ॥ ३९ ॥

धर्मं यागादिकं कर्म भगवदाराधनरूपं कर्म चैव फलदायिनं जैमिनिराचार्यो मेने; कुतः अत एव उपपत्तेः श्रुतत्वाच्च; उपपत्तिस्तावत् कृष्यादिकर्मणो धान्यादिप्रदं-

१ फलाधिकरणम्। २ कर्मातिरिक्त। ३ नारायणस्य। ४ यथावदनुष्ठितकर्मानुगुणानुसंधानपूर्वकावश्यकाभिमुख्यं यथा तथा। ५ कल्पितत्वासंभवात्।

नकर्मणश्च साक्षात्परंपरया वा फलसिद्धिदर्शनं श्रुतं च कामिनानुष्ठितं यागादिकर्मैव स्वेपकावस्थारूपेण कामिनः फलसाधनमिति ।

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥

तुशब्द उक्तमतं निरासयति । पूर्वमभिहितं कर्मणः फलदातृत्वं नारायणस्यैवास्तीति भगवान्बादरायणो मन्यते; कुतः हेतुव्यपदेशात्–भूतिकामस्य वायुयजनं [2] ततः फलप्राप्तिश्चोक्ता [3] 'स एवैनं भूतिं गमयती'त्यादिषु वाय्वादिशरीररूपेणावस्थितस्य नारायणस्य कर्मविधिष्वेव फलहेतुव्यपदेशात् । 'यो [4] वायौ तिष्ठन् यं वायुर्न वेद वायुमंतरो यमयति यस्य वायुः शरीरमि'ति वाय्वात्मना तस्यैवावस्थाने [5] श्रूयते तत्परित्यागेनाकर्मणोऽपूर्वद्वारा फलसाधनत्वकल्पनं फलप्रदातृत्वकल्पनं च । कर्मणोऽपूर्वत्वकल्पनं च श्रुतिविरुद्धमेव; अतः सकलदेवतात्मतया सर्वकर्मफलप्रदाता स एवास्तीति तात्पर्यम् । तथाहि स्मर्यते—

'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान् हि तान् ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' । इति;

एवं सर्वशाखेषु [6] तस्यैव सर्वाराध्यत्वं सर्वयागादिकर्मफलप्रदातृत्वं च सिद्धम् ।

इति श्रीशुद्धैकान्तधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने तृतीयाध्यायस्य द्वितीयः [7] पादः ॥ २ ॥

---

१ अपूर्वरूपेण । २ वायोः सकाशात् । ३ वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति । ४ अंतर्यामिब्राह्मणे । ५ वाय्वात्मना च परमपुरुष एवाराध्यतया फलप्रदायित्वेन चावतिष्ठत इति श्रूयते; इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः तदेवाग्निस्तद्वायुस्तत्सूर्यस्तच्चंद्रमा इति । ६ निरस्तसमस्ताविद्यादिदोषगंधस्य स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरस्य पुरुषोत्तमस्य । ७ अधिकरणानि ८ सूत्राणि ४० ।

# तृतीयाध्याये तृतीयपादः ।



## श्रीहरये नमः

[1]पूर्वत्र नित्यत्वादिगुणको जीव उपासको निरूपितः, सर्वज्ञत्वादिगुणगणवान्नारायण उपास्यश्च[2]। [3]अत्र कथमुपासनमित्याकांक्षायां तन्निरूपणमुत्तरत्र प्रतिपादयति–

## [4]सर्ववेदांतप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

सर्वेषु वेदांतेषु दहराद्युपासनं श्रूयते; तदेकमुत शाखाभेदादिना भिन्नमेवेति संदेहः। शाखाभेदेन प्रकरणभेदात्प्रतिशाखमुपासनं भिद्यते। तथा छांदोग्ये तैत्तिरीयब्राह्मणे च ब्रह्मोपासनमाम्नायते। एकत्र[5] ‘एष आत्मा अपहतपाप्मा विजरो विमृत्यु'रित्यारभ्य अपहतपाप्मत्वादयो गुणा आम्नाताः। [6]अन्यत्र ‘सत्यं ज्ञानमनंतं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्नि'त्यारभ्य सत्यज्ञानानंदादयो गुणाश्चाम्नाताः। तत्र[7] गुणभेदेन उपासनं भिद्यते; छांदोग्ये पंचाग्निविद्यायां कौथुममिति नाम, बृहदारण्यके वाजसनेयमिति नाम; [8]तत्र नामभेदादुपासनं भिद्यते; एकस्यां शाखायामविशेषतया पुनः पठितायाः श्रुतेः प्रतीयमानप्रकरणांतरस्य च भेदहेतुत्वावगमाच्छाखांतरे चापि तथैव पठितायाः प्रकरणांतरं च प्राप्नुवत्यास्तस्यैस्तथावगमाच्चोपासनं भिद्यते; मुंडकशाखायां शिरोव्रताख्यो धर्मः श्रूयते–‘तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णमि'ति; शिरोव्रतं नाम व्रतविशेषः, आथर्वणिकान्प्रति विहितो नेतरान्प्रति[12]; अतो धर्मभेदादुपासनभेदः; ततः शाखा[13]दिभेदादुपासनभेद इति पूर्वः पक्षः। सिद्धांतस्तु सर्वेषु वेदांतेषूपनित्सु प्रत्ययो ज्ञानं यस्य तत्सर्ववेदांतप्रत्ययं दहराद्युपासनमेकमेव; कर्मविधिष्विव[14] चोदनाफलसंयोगैरूपाख्यानामविशेषात् भेदाभावात् विद्या-

---

१ तृतीयाध्यायस्य द्वितीयपादे । २ निरूपित इत्यन्वयः । ३ तृतीयपादे । ४ सर्ववेदांतप्रत्ययाधिकरणम् । ५ छांदोग्ये । ६ तैत्तिरीयब्राह्मणे। ७ तत्र तयोश्छांदोग्यतैत्तिरीयब्राह्मणयोः। ८ छांदोग्यबृहदारण्ययोः । ९ अविशेषतया पुनः । १० श्रुतेः । ११ भेदहेतुत्वावगमात् । १२ विहित इत्यन्वयः। १३ आदिशब्देन गुणनामधर्मादीनां ग्रहणम्। १४ यथैकस्मिन्नग्निहोत्रे शाखाभेदेऽपि पुरुषप्रयत्नस्तादृश एव चोद्यते जुहुयादिति । १५ चोदनाद्यविशेषात्; चोदना तावदुपासीत विद्यादित्येवं जातीयको धात्वर्थविशेषविधिः, आदिशब्देन एकं वा संयोगरूपचोदनाख्याविशेषादिति कर्मकाण्डशाखांतराधिकरणसूत्रोक्ताः संयोगरूपाख्या गृह्यंते ।

दुपासीतेत्युभयविधा चोदना तावत् शाखाभेदेऽप्यविशिष्टा, फलसंयोगो ब्रह्मप्राप्तिरूपोऽविशिष्टः, वेद्यमपि वैश्वानरादिरूपं ब्रह्माविशिष्टम्, आख्यापि वैश्वानरविद्येत्येवमादिरविशिष्टैवेत्येकमेवोपासनम्; अतः शाखादिभेदेऽप्युपासनं न भिद्यते। तथाहि 'तस्मिन्यदंतस्तदन्वेष्टव्यमि'ति छांदोग्ये दहरविद्याविधिः[1], 'यो वेद निहितं गुहायामि'ति तैत्तिरीयब्राह्मणे तद्वेदनविधिश्च। तत्र[2] स्थानाद्यभेदादुपास्यस्य ब्रह्मणोऽप्यभेदादुभयत्रोक्तानां धर्माणां परस्परमविरोधाच्च विद्यैक्यमेवास्ति; तथा छांदोग्यबृहदारण्यकशाखयोर्द्युपर्जन्यपृथिवीपुरुषयोपिदाख्यस्याग्निपंचकस्य वेद्यतया यत्स्वरूपमाम्नातं तदुभयत्रापि समानम्, अतो न विद्याभेदः। यश्चैकस्यां शाखायामित्यादिना विद्यैक्ये विरोध उपक्षिप्तस्तमनूद्य परिहरति—

## भेदान्नेति चेदेकस्यामपि ॥ २ ॥

विद्याया अविशेषेण पुनः पठिता श्रुतिः प्रकरणांतरसहिता सती भेदप्रतिपादिका दृश्यते, ततो न विद्यैक्यमिति चेत्तत्रोत्तरम्-एकस्यामपि विद्यायां शाखांतरे सति विद्याप्रतिपत्तृभेदात् भिन्नतयोपपन्नापि सा श्रुतिरभेदावहा, एकविद्ययैकोपास्यस्यैवावगमात्। अयं भावः-यस्यां शाखायामेकस्मिन्विद्याग्रहीतरि सति ह्यविशेषतया पुनः श्रुतिः पठिता स्यात् प्रकरणांतरं च तत्र[5] वर्त्तेत तदते[6] तदनुपपत्त्या[7] कर्त्तव्यभेदाद्विद्याभेदः प्रतीयते; यत्र[8] च विद्याग्रहीतुर्भेदे प्रतीयमाने तु तस्य विद्योपदेशार्थत्वेनाविशेषपुनःश्रुत्याद्युपपत्तेस्तत्र[9] कर्त्तव्यांतरासंभवान्न विद्याभेद इति शिरोव्रतवतो ब्रह्मविद्यायामधिकार इति यदुक्तं तदसंगतमित्याह—

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

अथर्ववेदे 'तेषामेवैतां ब्रह्मविद्यां वदेते'ति तन्नियमः शिरोव्रतनियमः स्वाध्यायस्य तथात्वेन ह्यंगत्वेनास्ति नतु विद्यांगत्वेन। 'तथाहि नैतदचीर्णव्रतोऽधीते' इति तैस्याध्ययनसंबंधावगमः श्रूयते समाचारे समाचारसंज्ञे ग्रंथे; इदमपि वेदव्रतेन व्याख्यातमिति तैस्याधिकाराच्च वेदव्रतत्वप्रतिपादनाच्च ब्रह्मविद्यामित्यत्र ब्रह्मशब्दो वेदवाच-

१ ब्रह्मवेदनविधिः । २ छांदोग्यतैत्तिरीयब्राह्मणयोः । ३ स्वरूपम । ४ छांदोग्यतैत्तिरीयब्राह्मणयोरपि । ५ तस्यां शाखायाम् । ६ प्रकरणांतरं विना । ७ अविशेषपुनःश्रुत्यनुपपत्त्या । ८ शाखायाम् । ९ तस्यां शाखायाम् । १० अनुष्ठितशिरोव्रतः । ११ शिरोव्रतस्य । १२ शिरोव्रतमपि । १३ शिरोव्रतस्य ।

कोऽस्ति तस्मात् सर्वत्र च तन्नियमः। यथा सवहोमस्तेषामेव तथा शिरोव्रतमपि, अतस्तत्र धर्मभेदेऽपि न विद्याभेदः।

## दर्शयति च ॥ ४ ॥

श्रुतिरेव विद्यैक्यं दर्शयति। तथाहि छांदोग्ये दहरविद्यायां 'अथ यदिदमस्मिन्नि'-त्यारभ्य 'तस्मिन् यदंतस्तदन्वेष्टव्यमि'त्यंतेनापहतपाप्मत्वादिगुणाष्टकविशिष्टस्य नारायणस्योपासनमभिहितम्;तैत्तिरीयके तु छांदोग्यस्थमुपासनमतिदर्शनमाजीव्यं विशोकस्तस्मिन्यदंतस्तदुपासितव्यमिति गुणाष्टकयुक्तस्य तस्यैवोपासनमभिहितम्; तदुभयत्र विद्यैकत्वे सति संभवति, अतस्तत्र विद्याभेदिका श्रुतिरिति शंकाया नावकाशः, ततश्चोदनाद्यविशेषात् सकलवेदांतमत्ययं एकमेवोपासनम्; तद्भेदकशब्दांतराद्यदर्शनादिति सिद्धम्। सर्ववेदान्तचोदितानां विद्यानामैक्यप्रतिपादनफलमाह–

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

एवं सर्ववेदांतेषु विद्यैक्येनोपासने समाने सत्यपि शाखांतरसिद्धानां गुणानां शाखांतर उपसंहारो न कर्त्तव्यः कर्त्तव्यो वेति संशये न कर्त्तव्य इति पूर्वः पक्षः। तथाहि छांदोग्ये दहरविद्यायामपहतपाप्मत्वादयो गुणा आम्नाताः न ते तैत्तिरीयशाखीयब्राह्मणे आम्नाताः, न तत्र तेषामुपसंहारः कर्त्तव्यः तत्रानुक्तत्वात् विद्योपकारस्तत्रोक्तैरेव सत्यज्ञानानंदत्वादिगुणैर्भविष्यति किमेभिरितेनोपसंहारेणेति प्राप्ते सिद्धांतं ब्रूमः-सर्वत्र विद्यैक्ये छांदोग्यादिषूक्तानां दहराद्युपासनधर्माणामपहतपाप्मत्वादीनामन्यत्र तैत्तिरीयशाखीयब्राह्मणादिषूपसंहारः कर्त्तव्यः,कुतः,अर्थाभेदात्-विद्योपकाररूपस्यार्थस्यैकत्वात् विधिशेषवत् यथैकविधिशेषतया विहितानामंगानामग्निहोत्रादिषूपसंहारस्तथैव चोदनादिभिः समाने दहराद्युपासने गुणानां प्राप्तिरिति गुणोपसंहारो युक्त एव।

---

१ यथा सवाः सप्तहोमाः सौर्यादयः शतौदनांताः शाखांतरोक्तत्रेताग्न्यसंबंधादथर्वणोक्तैकाग्निसंबंधाच्चैकाग्नीनामाथर्वणिकानामेव नियम्यंते तद्वदेतच्छब्दादधीत इतिशब्दाच्च मुंडकाध्ययन एव शिरोव्रतस्य नियम इत्यर्थः। २ आथर्वणिकानामेव। ३ तेषामेवेत्यन्वयः। ४ मुंडकशाखायाम्। ५ दहरं गमनं विशोकः। ६ नारायणस्यैव। ७ छांदोग्यतैत्तिरीयकयोः। ८ तैत्तिरीयके। ९ उपासनभेदक। १० गुणाः। ११ तैत्तिरीयशाखीयब्राह्मणे। १२ छांदोग्यस्थापहतपाप्मत्वादिगुणानाम्। १३ उपासनपुष्टिः। १४ तैत्तिरीयशाखीयब्राह्मणोक्तैरेव। १५ सर्वशाखासु चोदनाद्यविशेषाद्विद्यैक्ये सिद्धे। १६ नो यो विधिशेषः विद्यावग्निहोत्रादिकर्मविशेषे शेषो गौणस्तस्य भावस्तत्ता तया। १७ एकः सर्वशाखासु सम एवं चोदनाद्यविशेषाद्विद्यैक्यमेकत्वे च गुणोपसंहारः कर्त्तव्य इति सिद्धम्।

## [1]अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

वाजिनां छंदोगानां चोद्गीथे प्राणदृष्ट्योपासनं शत्रुपरिभवफलं विधीयते, तत्र विद्यैक्यमस्ति नवेति संदेहः। तत्र वाजिनां प्राणदृष्ट्योपासनमुद्गानकर्तृविषयमि'त्यथ ह इममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उद्गायदि'ति शब्दात्प्रतीयते। छंदोगानां तु तदुपासनमुद्गानकर्मविषयमिति 'य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिर' इति शब्दात् प्रतीयते; तस्माच्चोदनाद्यविशेषेऽप्यन्यथात्वं विद्ययोर्नैक्यमिति सिद्धांती वदेच्चेत्तर्हि पूर्वपक्षी नेत्याह;कुतः, अविशेषात् 'द्वयाह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवाः ज्यायांसः असुरास्त एषु लोकेषु अस्पर्द्धंत ते ह देवा ऊचुः हंतासुरान्यज्ञ उद्गीथेनात्ययामे'त्येकत्र, अन्यत्र च 'देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः' इत्यादि; एवं द्वयोरुपक्रमवचनाविशेषादुभयत्र विद्यैक्यमिति प्राप्ते सिद्धांतमाह—

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥

परोवरीयस्त्वं उत्तरोत्तरं श्रेष्ठादपि श्रेष्ठत्वं नोभयत्र विद्यैक्यं प्रकरणभेदात्। तथाहि 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्युद्गीथावयवभूतप्रणवविषयमुपासनप्रकरणं

---

१ अन्यथात्वाधिकरणम्। २ छांदोग्यबृहदारण्ययोः। ३ बृहदारण्यके श्रूयते उद्गीथब्राह्मणं क्षेत्रज्ञस्य यास्तामसवृत्तयस्तेऽसुराः याश्च सात्त्विकवृत्तयस्ते देवास्तेषां देवासुराणामन्योन्यं स्पर्द्धा तामसवृत्त्युद्भवे सात्त्विकवृत्त्यनुद्भवः सात्त्विकवृत्त्युद्भवे च तामसवृत्त्यनुद्भव इत्येवंरूपां श्रावयित्वा तत्र देवाः सामभक्तिरूपेणोद्गीथोद्गातृकर्मणा असुरजयं करिष्याम इति बुद्ध्या वाचं प्राणं चक्षुः श्रोत्रं मनश्चोचुः—त्वमस्माकमौद्गात्रं कर्मोद्गीथं कुर्विति, ते च वागादयस्तथास्त्वित्युक्तवंतः, कर्मणि प्रवृत्तांस्तानुद्गातॄन् असुरा एभिरुद्गातृभिर्देवा अस्मज्जयं करिष्यंतीति बुद्ध्या ताडितवंतस्ते च वागादयस्ताडिता इति वागादीन्निंदित्वा मुख्यप्राणमुद्गातृत्वेन श्रावयति; अथ हेमं मुख्यं प्राणं देवा ऊचुस्त्वमस्माकमुद्गाता भवेति स प्राणस्तथास्त्वित्युक्त्वा कर्मणि प्रवृत्तस्तं चोद्गातारं प्राणं प्राप्य हंतुकामा असुराः पाषाणं प्राप्य वेगवान् लोष्ट इव विशीर्णावयवा अभूवन्निति प्राणस्तुतिं कृत्वोद्गीथकर्त्तारं प्राणमुपास्यं दर्शयतीति। ४ एवमेव छांदोग्येऽपि श्रूयते तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः तत् तत्र पूर्ववद्देवासुरस्पर्द्धायां देवा उद्गीथोपलक्षितमौद्गात्रं कर्माहृतवंतोऽनेन कर्मणैनान् तामसवृत्तिलक्षणानसुरान् अभिभविष्याम इत्युपक्रम्य पूर्ववदेव वागादिनिंदां कृत्वा अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिरे देवा इति सर्वत्र वागादिशब्दास्तदभिमानिदेवतापरा बोध्याः। ५ संग्रामं कृतवंतः।

छंदोगानां, वाजिनां तु 'हंतासुरान् यज्ञ उद्गीथेनात्ययामे'ति कृत्स्नोद्गीथविषयमित्युपक्रमभेदेन रूपभेदाद्विद्याभेदः, परोवरीयस्त्वादिवत्-यथैकस्यामपि शाखायामुद्गीथोपासनेषु परमात्मदृष्टिविधानसाम्येऽपि 'आकाशो ह्येवैभ्यो ज्यानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनंत' इति प्राणाद्यपेक्षयोत्तरोत्तरं श्रेष्ठतयोद्गीथे संपादितस्यापरिमितैश्वर्यतया ततः पृथगवस्थितस्य च तस्य प्राणाद्युद्गीथेपूपासनमादित्यगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनादर्थांतरमिति रूपभेदः, तथात्रापि। आशंक्य परिहरति—

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

संज्ञात–उद्गीथविद्येतिसंज्ञैक्यादुभयत्राभेद इति चेत्तत्रेदमुत्तरं वाच्यं–तद्विद्याभिन्नत्वं पूर्वमुक्तमस्ति हि। विधेयभेदेऽपि तत्संज्ञैक्यं भवति यथा नैयमिकाग्निहोत्रे कुंडयायिनामयनाग्निहोत्रे च नामैक्येऽपि कर्मभेदस्तद्वदत्रापि न विरोधः।

## व्याप्तेश्च समंजसम् ॥ ९ ॥

छांदोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति श्रूयते; इह प्रणवोद्गीथयोर्मिश्रितमुपासनम् उतैकविषयमिति संशये पूर्वः पक्षः-यद्यपि प्रणवोद्गीथयोः सामानाधिकरण्यमवगम्यते तच्च विशेषणविशेष्यतया संभवति। यथाप्युद्गीथेन प्रणवो विशिष्यते प्रणवे चोद्गीथ इत्यत्र नियामकाभावात् तंत्रमुपासनमित्येवं प्राप्ते ब्रूमः—न मिश्रितमुद्गीथप्रणवयोरुपासनम्; छांदोग्ये प्रथमप्रपाठके 'ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायती'ति तस्योपक्रमवदुत्तरत्रापि 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवती'ति प्रणवस्य उपास्यत्वव्याप्तेरुद्गीथेन प्रणवो विशेष्यत इत्युपासनस्य प्रणवविषयत्वमेव समंजसम्, अतः प्रणव एवोपास्यः, तस्य परब्रह्मवाचकत्वादुपासनं युक्तमेव।

## [६]सर्वाभेदादन्यत्रेमे ॥ १० ॥

'यो[८] ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च

---

१ छांदोग्यबृहदारण्ययोः। २ न वा प्रकरणभेदादिति सूत्रे। ३ नित्याग्निहोत्रे। ४ विद्याभेदेऽपि। ५ सामानाधिकरण्यम्। ६ सर्वाभेदाधिकरणम्। ७ छांदोग्यवाजसनेयकयोः प्राणविद्याम्नायते। ८ यो ह वै कश्चित् ज्येष्ठं च प्रथमवयसं श्रेष्ठं च गुणैरभ्यधिकं वेदोपास्ते स ज्येष्ठः श्रेष्ठश्च ह वै भवतीत्यर्थः। कोऽसौ तादृगित्यपेक्षायामाह—प्राणो वाव एव ज्येष्ठश्च वयसा वागादिभ्यो गर्भवृद्धिहेतुत्वेन प्राणस्य प्रथमं लब्धवृत्तित्वात् तस्य श्रेष्ठत्वं त्वग्रे स यथा सुहय इत्यादौ हयदृष्टांतेन स्पष्टीकरिष्यति ततोऽवगंतव्यम्।

श्रेष्ठश्चे'ति छंदोगा वाजिनश्च प्राणविद्यायां प्राणस्य ज्येष्ठत्वादिकमधीयते कौपीतकिनश्च; एभिस्त्रिभिरपि वागादिकरणग्रामस्थितेस्तत्कार्यस्थितेश्च हेतुत्वेन प्राणस्य ज्यैष्ठ्यमुपपादितम्। 'वागादिगतवसिष्ठत्वादिसंबंधित्वमपि प्राणस्य छांदोग्ये बृहदारण्ये चोक्तं 'अथ हैनं वागुवाच यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोसीति; अथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीति; अथ हैनं श्रोत्रमुवाच यदहं संपदस्मि त्वं तत्संपदसीति; अथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति; सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोसीति; चक्षुर्यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोसी'त्यारभ्य 'मनो यद्वा अहमायतनमस्मि त्वं तदायतनमसीति च'। कौपीतकिब्राह्मणे तु नोक्तमपि तद्वसिष्ठत्वादिकमुपसंहार्यं नवेति संशये 'य एवं विद्वानि'त्येवंशब्देन तच्छाखोक्तगुणानामेव ग्रहणादन्यत्रोपसंहार्यमिति प्राप्ते ब्रूमः–अत्रानुक्तमपि वसिष्ठत्वादिकमुपसंहार्यमेव, एवंशब्देनानुक्तगुणानामप्युक्तगुणवत् परामर्शेन प्राणस्य गुणिनो

१ अथातो निःश्रेयसाधनम् 'एता ह वै देवता अहं श्रेयसे विवदमाना' इत्यादिना प्राणश्रैष्ठ्यमुक्तम्। २ यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवतीति वसिष्ठं वस्तृतमं वासयितृतममाच्छादयितृतमं वा निवासाच्छादनार्थयोर्धात्वोराश्रयणात्; स उपासनानुसारेण स्वानां ज्ञातीनां मध्ये वसिष्ठो भवतीत्यर्थः। कस्तर्हि वसिष्ठ इत्यपेक्षायामाह–'वाग्वाव वसिष्ठ' इति वाग्मिनो हि पुरुषा वसंति वासयंति चान्यानभिभवंति चातो युक्तं वाचो वसिष्ठत्वमित्यर्थः। पुनरपि गुणांतरमुपदिशन् फलेन प्रलोभयति 'यो ह वै प्रतिष्ठां वेद प्रतिहतिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्चेति सुखबोधमेतत् का तर्हि प्रतिष्ठेत्यपेक्षायामाह–'चक्षुर्वाव प्रतिष्ठे'ति; 'चक्षुषा हि पश्यन् विषमदेशादौ प्रतितिष्ठति चक्षुषा हि समे च दुर्गे च प्रतितिष्ठती'ति श्रुत्यंतरादित्यर्थः। पुनरपि फलेन प्रलोभयन् गुणांतरमुपदिशति–यो ह वै संपदं वेद सं हास्मै कामाः पद्यंते दैवाश्च मानुषाश्चेति अस्मै संपद्गुणकोपासकाय दैवाः कामाः स्वर्गादयो मानुषाश्च कामाः पश्वादयः संपद्यंते; का तर्हि संपदित्यपेक्षायामाह–श्रोत्रं वाव संपदिति श्रोत्रेण वेदाः गृह्यंते तदर्थविज्ञानं च, ततः कर्माणि क्रियंते ततः कामसंपदित्येवं परंपरया संपद्धेतुत्वाच्छ्रोत्रं वावैव संपदित्यर्थः। पुनरपि गुणांतरमुपदिशन् फलेन प्रलोभयति–यो ह वा आयतनं वेदायतनं ह स्वानां भवतीति; स्वानां बंध्वादीनामायतनमाश्रयो भवतीत्यर्थः। किं तर्ह्यायतनमित्यपेक्षायामाह मनो ह वा आयतनमिति इंद्रियोपहृतानां विषयाणां प्रत्ययरूपाणां भोक्त्रर्थानां मनो ह वै प्रसिद्धमायतनमिति। ३ एनं मुख्यं प्राणं वाक् तावदुवाच किं यदहं वसिष्ठास्मि अहं वसिष्ठत्वगुणास्मीति यत्तत् त्वमेव वसिष्ठो वसिष्ठत्वगुणोऽसि। ४ अथो य एवं विद्वान् प्राणे निःश्रेयसं विदित्वेति श्रूयमाणेन एवंशब्देन। ५ कौषीतकिब्राह्मणे।

गुणानामप्येकत्वेन बुद्धिस्थत्वात् । यथा देवदत्तो मथुरायामध्यापयन् दृष्टः माहिष्मत्यामनध्यापयन्नप्यध्यापकत्वेन प्रत्यभिज्ञायते तथा छांदोग्यादिषु वसिष्ठत्वादिनोक्तः पुनरन्यत्र केवल उच्यमानोऽपि प्राणस्तद्गुणैर्विशिष्टतया बुद्धिस्थो भवति; तत एवंशब्देन परामर्शात् वसिष्ठत्वादिकमुपसंहार्यमिति । अथ सूत्रार्थवर्णनं विधीयते–अन्यत्र कौषीतकिप्राणविद्यायामनुक्ता अपि इमे वसिष्ठत्वादयो गुणास्तत्र संत्येव, कुतः सर्वाभेदात् सर्वत्र–प्राणगुणानां भेदाभावात् ।

## [2]आनंदादयः प्रधानस्य ॥ ११ ॥

अभेदादिति परामृश्यते; प्रधानस्य मुख्यस्य ब्रह्मण आनंदादयः आनंदत्वानंतत्वामलत्वविशोकत्वादयः श्रुतिप्रोक्ता गुणाः सर्वासु परविद्यासु उपसंहार्याः। तथाहि यथा नीलो धवलो रक्तः खंडः पूर्णशृंग' इत्यादीनामन्योन्यविरुद्धधर्माणामेव धर्मिभेदावहत्वं न तथा 'नीलं सुगंधि महदुत्पलमि'त्यत्र नीलिमादीनाम् ; एवं ब्रह्मणो गुणानां परस्पराविरोधान्न भेदावहत्वम्, तस्मात् गुणिनो ब्रह्मणः सर्वत्राभेदादुपसंहार्या आनंदादय इति ।

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

'तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनंद आत्मा ब्रह्म पुच्छं प्रतिष्ठे'त्यत्राह प्रियशिरस्त्वादयो ब्रह्मधर्मत्वेन श्रूयंते; तेऽप्यानंदादय इव परविद्यासूपसंहार्या नवेति संशये तेषामपि सत्यसंकल्पादिवदुपसंहारे को विरोध इति प्राप्ते ब्रूमः–नास्ति प्रियशिरस्त्वादीनामुपसंहारप्राप्तिः परविद्यासु सत्यसंकल्पत्वादिवत्तेषां दिव्यमूर्त्तिपरब्रह्मगुणत्वाभावात् ; तेषामुपसंहारे सति ब्रह्मणः शिरःपक्षादिकल्पितावयवभेदः स्यात् । दिव्यमूर्त्तेस्तस्य तस्मिन् कल्पितावयवभेदे सति ह्युपचयापचयौ प्रसज्येयातामनित्यत्वं च, अतः प्रियशिरस्त्वादयः' सत्यं ज्ञानमनंतं ब्रह्म' 'अजरोऽमृत' इत्यादिभिर्विरुद्धा भवेयुः, अतस्तेषां नोपसंहारः । आनंदत्वामलत्वादीनामिव सर्वज्ञत्वादीनां परब्रह्मस्वरूपांतर्भूतगुणत्वादुपसंहारे सत्यविरोध इत्याह—

## इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे सर्वज्ञत्वसत्यसंकल्पत्वनित्यतृप्तत्वादयो ब्रह्मस्वरूपांतर्गततयार्थसामान्यात् सर्वत्रोपसंहार्याः ।प्रियशिरस्त्वादीनां परब्रह्मस्वरूपे साक्षात्संबंधाभावान्नोपसंहार इति।

१ वशिष्ठत्वादिगुण । २ आनंदाद्यधिकरणम् । ३ सर्वज्ञत्वादिस्वगुणैः प्रतिपाद्यस्यार्थस्य परब्रह्मरूपपदार्थस्य सामान्यादेकत्वादित्यर्थः । ४ शाखासु ।

## [1]आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

इह पूर्वोक्तानंदमयात्मानुसंधानवदन्नमयादीनामप्यनुसंधानं नियतमस्ति नवेति संशयः। अन्नमयादिचतुष्काभ्यंतरस्यानंदमयस्य ब्रह्मणोऽन्नमयाद्यनुसंधानक्रममृते चतुष्टयाभ्यंतरत्वेनोपासकस्यानुसंधानायोगात् तेषामनुसंधानं नियतमिति पूर्वपक्षे प्राप्ते सिद्धांतोऽभिधीयते-आध्यानाय परब्रह्मानुचिंतनायैव अन्नमयादीनामनुसंधानं न नियतं प्रयोजनाभावात्; तस्यानंदमयब्रह्मसिद्धिर्हि प्रयोजनम्, अतस्तत्सिद्धिपर्यंतमेवान्नमयादीनामनुसंधानम्; अथवा स्वधाम्नि स्थितत्वान्मनोवागाद्यगोचरस्य दिव्यानंदमयमूर्त्तेः पुरुषोत्तमस्य आध्यानायानुचिंतनायैव प्रियादिभिः शिर आदिकल्पनं न तु तत्र प्रयोजनांतरम्, अतस्तेषां न नियतमनुसंधानम्। किंच—

## आत्मशब्दाच्च ॥ १५ ॥

'एतमन्नमयमात्मानमुपसंक्रामति एतमन्नमयमात्मानमुपसंक्रम्य एतं प्राणमयमात्मानमुपसंक्रामती'त्यादिष्वन्नमयादीनां प्रत्येकमात्मशब्दात् अन्नाद्यधिष्ठातुश्चेतनत्वमवगम्यते, अतस्तस्य ध्येयत्वेनानुसंधानमिति चेन् ब्रह्मव्यतिरिक्तानां चेतनानां मुमुक्षुध्येयत्वनिषेधात् ध्यानकाले तेषां नानुसंधानम्। तथा च गोपालतापिन्यां श्रूयते—'सत्पुंडरीकनयनं मेघाभं वैद्युतांबरम्। द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ॥ गोपगोपीगवां वीतं सुरद्रुमतलाश्रयम्। दिव्यालंकरणोपेतं रत्नपंकजमध्यगम् ॥ कालिंदीजलकल्लोलसंगिमारुतसेवितम्। चिंतयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः।' इति स्मर्यते च— 'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा' ॥

इत्यादौ नारायणस्यैव मुमुक्षुध्येयत्वमुक्तं नेतरेषाम्, अतोऽन्नमयादीनामनुसंधानानियमः।

---

१ यद्युपचयापचयप्रसंगात्प्रियशिरस्त्वादयो ब्रह्मणः पुरुषविधत्वरूपेण मात्रार्थाः न तु ब्रह्मगुणाः तर्हि तथारूपस्य ब्रह्मणस्तथात्वेन निरूपणं किमर्थं क्रियते, अतथाभूतस्य हि तथात्वरूपेण केनचित्प्रयोजनेन भवितव्यं यथा 'आत्मानं रथिनं विद्धि' इत्यादिनोपासकस्य तदुपकरणानां च रथिरथादित्वनिरूपणम् उपासनोपकरणभूतशरीरेंद्रियादिवशीकरणार्थं क्रियत इत्थं न चेह तथाविधं किंचित्प्रयोजनं दृश्यते इति बलात् ब्रह्मगुणत्वं प्रियशिरस्त्वादीनामभ्युपेतं तत्राह। २ प्रथमाध्यायप्रथमपादस्थानंदमयोऽभ्यासादिति सूत्रोक्ता। ३ अन्नमयादीनाम्। ४ अन्नमयाद्यनुसंधानस्य। ५ प्रियादीनां शिरःप्रभृतिकल्पने।

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

'इहान्योऽन्तर आत्मानंदमय' इत्यात्मगृहीतिः परमात्मविषया न प्रत्यगात्मविषया इतरवत् 'आत्मन आकाशः संभूत' इत्यत्रात्मशब्दवत् तदिदमुत्तरात् 'सोऽकामयत बहु स्यां प्रजायेये'त्यानंदमयशब्दवाच्यपरमात्मपरामर्शकतच्छब्दगर्भितादुत्तरवाक्यादवगम्यते। तस्मादानंदमयात्मानुसंधानं मुख्यं ब्रह्मानुसंधानमिति।

## अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

अन्नमयादीनामप्यात्मशब्दान्वयात् परमात्मत्वेन तेषामुपासनमविरुद्धमिति चेत्तत्रोत्तरम्—'अन्योऽन्तर आत्मानंदमय' इत्यानंदमयस्य परमात्मनो नारायणस्यान्नमयादिभ्यो भिन्नत्वावगमात् 'चितयंश्चेतसा कृष्णं मुक्तो भवति संसृतेरि'ति 'ध्येयो नारायणः सदा' इत्यादिषु स्वधामस्थनारायणसेवारूपां मुक्तिं ध्यानेन प्रापयतः स्वस्यैकस्यैव ध्येयत्वेनावधारणान्निर्णयपूर्वं कथनाच्च तदात्मत्वेन तेषामुपासनं विरुद्धमेव। अत्र हि निरस्तसमस्तकलंकत्वेन निखिलमंगलभाजनत्वेन च कृष्णनारायणादिशब्देनानंदभूमिः परब्रह्मोच्यते, अतस्तद्ध्यानेनैव तत्सेवारूपा मुक्तिः स्यात्, अतस्तदन्येषामन्नमयादीनां यथोपासनं फलमवगम्यते। एवं च सति तद्व्यतिरिक्तानामनुसंधानं न ह्यानंदमयनारायणसेवारूपमुक्तिप्रापकम्; अत आनंदमयो नारायण एक एवानुसंधेय इति तात्पर्यम्।

## [2]कार्याख्यानादपूर्वम् ॥ १८ ॥

छांदोग्यवाजसनेयकयोर्यो ह ज्येष्ठं च श्रेष्ठं च वेदे'त्यारभ्य 'किं मे वास' इति वागादीन्प्रति प्राणप्रश्नस्योत्तरे अपां प्राणस्य वासस्त्वमुक्तम्। 'अथ तस्माद्वा एतदशिष्यंतः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लंभुको ह वासो भवत्यनग्नो भवती'ति छांदोग्ये; तद्विद्वांसः श्रोत्रिया अशिष्यंत आचामंत्यशित्वा चाचामंत्येतमेव तदन्नम-

१ यथा इतरेषु सृष्टिवाक्येषु 'आत्मन आकाशः संभूत' इत्यादिषु आत्मशब्देन परमात्मन एव ग्रहणं तद्वदत्रापि। २ कार्याख्यानाधिकरणम्। ३ पूर्वप्रस्तुतप्राणविद्याशेषभूतमिदानीं चिंत्यते। ४ यस्मात्प्राणस्यापो वासस्तस्माद्वै तस्मादेवाशिष्यंतो भोक्ष्यमाणा भुक्तवंतश्च ब्राह्मणा विद्वांस एतत् कुर्वंति; एतत्किं पुरस्ताद्भोजनादूर्ध्वं चाद्भिर्वासस्थानीयाभिः परिदधति—मुख्यप्राणस्य परिधानं कुर्वंतीत्यर्थः। उक्तवासो दृष्टिफलमाह—लंभुक इति एवमुपासकस्य लंभुको लंभनशीलो वासो ह भवति—वाससो लब्धा भवतीति यावत्; अनग्नो ह उत्तरीयवानुपासको भवति।

नग्नं कुर्वंतो मन्यंते तस्मादेवंविदशिष्यं नाचामेदशित्वाचामेदेतमेव तदन्नमनग्नं कुरुत' इति वाजसनेयके च श्रूयते। इहाशनात्प्राक् अशनानंतरं च विधीयमानमाचमनीयानामपामाचमनं प्राणवासस्त्वं चेत्युभयं विधीयते उत तासां केवलं प्राणवासस्त्वमेवेति संदेहे उभयत्वोक्तौ विशेषाभावादुभयमप्यस्तीति प्राप्ते तासामाचमनस्य 'अमृतोपस्तरणमसि स्वाहा'[1] इतं मंत्रमुच्चरेत्। 'आपोऽशानमिति प्राहुर्भोजनादौ पिबेज्जलम्। अपोशानमकृत्वा तु यद्भुंक्ते द्विजसत्तमः। अभोज्यं तद्भवेदन्नं भुक्त्वा चांद्रायणं चरेत्'॥ इति स्मृत्याचारप्राप्तत्वादपूर्वपूर्वमप्राप्तमेव तासां यत्प्राणवासस्त्वं तदत्र विधीयते; कुतः कार्याख्यानात्—अप्राप्तस्यैव विधेयत्वाख्यानात्। अप्राप्ते प्राप्तुमर्हे चाचारो विधिकल्पना; तस्मादपूर्वं प्राणवासस्त्वानुसंधानमेव विधेयमिति युक्तम्।

## [3]समान एवं चाभेदात् ॥ १९ ॥

अग्निरहस्ये बृहदारण्यके च शांडिल्यविद्या आम्नायते—एकत्रा[4]त्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसंकल्पमाकाशात्मानमि'ति; इ[5]तरत्र 'मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नंतर्हृदये व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ती'ति; उभयत्र विद्या भिन्ना नवेति संशयः। ए[6]कत्र आकाशात्मत्वेन महत्त्वम्, इत[7]रत्र यवसादृश्येनाल्पत्वम्, ए[8]कत्र सत्यसंकल्पत्वम्, इ[9]तरत्र वशित्वादिकमिति धर्मभेदाद्भिन्नेति प्राप्ते ब्रूमः—सर्वत्र मनोमयत्वादिके समाने सति आकाशात्मेत्यस्य वाक्यस्य आकाशवत्स्वच्छतापरत्वेन माहात्म्यपरतया स्तुत्यर्हपरत्वेन च 'व्रीहिर्वा यवो वे'त्यस्य चोपासकाल्पहृदयनिवासकपरत्वेन समानत्वोपपत्तेः। एवं च वशित्वादीनामपि सत्यसंकल्पत्वगुणविशेषरूपत्वेन तेषां तदभेदाच्च विद्यैक्यम्।

## [10]संबंधादेवमन्यत्रापि ॥ २० ॥

पूर्वत्र यथा विद्यैक्यं प्रतिपादितमेवमन्यत्र बृहदारण्यके 'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मंडले पुरुषो यश्चायं दक्षिणेऽक्षन्नि'त्युपक्रम्य सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनादित्यमंडलेऽक्षिणि चोपास्यत्वमुक्त्वा 'तस्योपनिषदहरित्यधिदैवतं

---

१ भोजनादौ अमृतोपस्तरणमसि स्वाहेति भोजनांते च अमृतापिधानमसि स्वाहेत्यनेनाचमनद्वयरूपापोशानविधिः। २ छांदोग्यवाजसनेयकयोः। ३ समानाधिकरणम्। ४ अग्निरहस्ये। ५ बृहदारण्ये। ६ अग्निरहस्ये। ७ बृहदारण्ये। ८ अग्निरहस्ये। ९ बृहदारण्ये। १० संबंधाधिकरणम्। ११ भूरिति शिरः भुव इति बाहुः स्वरिति प्रतिष्ठापादाविति व्याहृतिशरीरत्वेन। १२ उपनिषच्छब्देन देवताप्रकाशकं रहस्यनामोच्यते, अहःशब्दः प्रकाशवाची अहंशब्दः प्रत्यगात्मवाची तावहरहंशब्दौ क्रमेणादित्यचाक्षुषपुरुषयोर्नामनी इति स्थितिः।

तस्योपनिषदहमित्यध्यात्ममि'त्यत्रोपास्यस्योपासनशेषतया द्वे हरस्य नामनी आम्नायेते उभयत्रैकस्योपास्यत्वसंबंधात्; ते उभयत्रोपसंहार्ये नवेति संशये सत्युपास्यैक्याद्विद्यैक्यम्, अत उभयत्रापि प्रत्येकं द्वे नामनी उपसंहार्ये इति पूर्वपक्षे प्राप्ते उच्यते—

## न वा विशेषात् ॥ २१ ॥

वा शब्दः पूर्वपक्षव्यावर्त्तकः। नात्र विद्यैक्यम्, आदित्याक्षिस्थानविशेषसंबंधित्वेन हि विशेषादुपास्यरूपभेदात्। एवं स्थानविशेषतया विद्याभेदतस्तमेकं परमात्मानं प्रत्येव द्वे नामनी नियते भवतो न तु प्रतिस्थानम्।

## दर्शयति च ॥ २२ ॥

छांदोग्ये 'य एषोंऽतरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण' इति 'एषोऽक्षिणि पुरुष' इति श्रुतिद्वयं हिरण्मयपुरुषोऽक्षिपुरुषश्चेति द्वे नामनी रूपे च दर्शयत्येकस्य परमात्मनः, अतो विद्याभेदेऽप्युभयेषां नामरूपाणां तत्रोपसंहारो विधीयते नतु प्रत्येकम्।

## 'संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

तैत्तरीयके राणायनीयानां खिलेषु श्रूयते 'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ब्रह्मभूतानां प्रथमोऽत जज्ञे नार्हति ब्रह्मणा स्पर्द्धितुं क' इति ब्रह्मणि ज्येष्ठानां गुणानां संभृतिः संधारणं तस्यैं द्युव्याप्तिश्चेत्यादिगुणवृंदमाम्नातं यत्तत्सर्वासु परविद्यासूपसंहार्यम् अथवा कुत्रचिदुपसंहार्यं कुत्रचिन्नोपसंहार्यमिति संशये अनारभ्याधीतत्वात्तद्गुणजातं सर्वासु परविद्यासूपसंहार्यमिति पूर्वपक्षे प्राप्तेऽभिधीयते—यद्यपि स्थानविशेषसंबंध्युपासनमनारभ्याधीतमेतद्गुणवृंदं भवति तथापि ज्येष्ठैर्वीर्यशब्दवाच्यैर्गुणगणैर्विशिष्टस्य ब्रह्मणो द्युव्याप्तिसामर्थ्यात्तद्गुणजातस्य हृदयाद्यल्प-

---

१ अक्षादित्यस्थानयोः। २ बृहदारण्ये। ३ परमात्मनि। ४ संभृत्यधिकरणम्। ५ वीर्यवीर्याणि पराक्रमविशेषरूपाणि वियदादीनि ब्रह्मैव, ज्येष्ठं अनन्यापेक्षं कारणं येषां तानि ब्रह्मज्येष्ठानि लौकिकेश्वरवीर्याणां बलवद्भिर्मध्ये भंगः संभवति ब्रह्मवीर्याणां तु नैवमित्याह संभृतानीतिसर्वाधिकेन ब्रह्मणा निर्विघ्नसमृद्धानीत्यर्थः। तच्च ज्येष्ठब्रह्माग्रे इंद्रादिजन्मनः प्रागेव दिवं स्वर्गमाततान व्याप्तवत् इत्यर्थः। ६ तेनार्हति। ७ ब्रह्मणः। ८ ज्येष्ठत्वादिगुणजातम्।

स्थानेषूपसंहारायोगात्, [2]तत्रान्यत्र महास्थानेषु तत्[3]साहचर्याच्च एतदल्पस्थानविहितासु विद्यासु नोपसंहार्यम् अन्यत्र महास्थानविहितासु चोपसंहार्यम् ।

[4]पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

अपिरवधारणार्थः । चकारो विद्याभेदज्ञापनार्थः । छांदोग्यतैत्तिरीयकयोः पुरुषविद्याम्नाता 'पुरुषो वाव यज्ञः तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनमि'त्यादिरेकत्र 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिरि'त्यादिरन्यत्र सोभयत्राभिन्ना भिन्ना वेति संशयः । उभयत्र पुरुषविद्येति नामाभेदाद्यज्ञावयवकल्पनाया असाम्येऽप्यभिन्नेति प्राप्तेऽभिधीयते तैत्तिरीये पुरुषविद्यायामितरेषां समाम्नातानां यजमानपत्न्यादीनां यज्ञावयवानां सवनत्रयादीनां च छांदोग्येऽनाम्नानात् तैत्रान्यथैव सवनत्रयादिकल्पनाच्च भिन्नैवोभयत्र पुरुषविद्या । तैत्तिरीयके हि 'यत्सायं प्रातर्मध्यं दिनं च तानि सवनानी'ति सवनत्रयकल्पनं, छांदोग्ये पुरुषायुषं त्रेधा विभज्य सवनत्रयकल्पनं तैत्तिरीये ब्राह्मणे 'त्वामहस ओमित्यात्मानं युंजीते'ति ब्रह्मविद्यामभिधाय 'ब्रह्मणो महिमानमाप्नोती'ति तत्फलं चाभिधाय तस्यैवं विदुष इत्यादिनाम्नाता पुरुषविद्या प्रस्तुतब्रह्मविद्यांगमस्ति; तत्फलं ब्रह्मप्राप्तिरेव छांदोग्ये 'प्रहषोडशं वर्षशतं जीवती'ति फलं श्रुतं ततः फलभेदादवयवभेदाच्च न विद्यैक्यमिति ।

[11]वेधाद्यर्थभेदात् ॥ २५ ॥

तैत्तिरीयाणामुपनिषदुपक्रमे श्रुतौ 'शन्नो मित्रः शं वरुणः, सह नाववत्वि'ति मंत्रौ विद्यांगभूतौ नवेति संशये विद्यासंनिधिवशाद्विद्यांगभूताविति प्राप्ते उच्यते—वेधादिवदिमाविति शेषः । तथाहि यथा आथर्वणिकानामुपनिषदारंभे पठितः 'सर्वं प्रविध्य हृदयं प्रविध्ये'त्यादिमंत्रो हृदयादिवेधप्रकाशनसामर्थ्यरूपाल्लिंगादभिचारशेषः । यथा वा ऐतरेयिणां वाजसनेयिनां चोपनिषदारंभे पठितं महाव्रतं प्रवर्ग्यरूपं च कर्म च श्रुत्या विनियोगात्क्रतुशेषभूतं तथेमावपि मंत्रौ 'ऋतं वदिष्यामि, तेजस्विनावधीतमस्त्वि'त्यादिलिंगादध्ययनशेषभूतावेव न विद्यांगभूतौ; एवं च सति श्रुतिलिंगवाक्यैः अर्थभेदात्प्रयोजनभेदात् सन्निधेर्दुर्बलत्वमवगम्यते ।

१ हृदयाद्यल्पस्थानात् । २ ज्येष्ठत्वादिगुणसाहचर्याच्च । ३ ज्येष्ठत्वादिगुणजातम् । ४ पुरुषविद्याधिकरणम् । ५ छांदोग्ये । ६ तैत्तिरीयके । ७ छांदोग्ये । ८ तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनं ततः पराणि चतुश्चत्वारिंशद्वर्षाणि माध्यंदिनं सवनं ततः पराण्यष्टाचत्वारिंशद्वर्षाणि तृतीयं सवनं पुरुषविद्याविदः षोडशोत्तरशतवर्षजीवित्वात् । ९ ब्रह्मविद्याफलम् । १० षोडशोत्तरशतवर्षं प्रजीवति ह एवेत्यर्थः । ११ वेधाद्यधिकरणम् । १२ सर्वम् । १३ इंद्रो वै वृत्रं हत्वा महानभवदित्यादि । १४ देवा ह वै सत्रं निषेदुरित्यादि ।

## [1]हानौ तूपायनशब्दशेषत्वात् कुशाछंदस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

विदुषो ब्रह्म प्राप्नुवतः पुण्यपापयोर्विमोचनं कुत्रचिच्छाखायामाम्नातम्; विमुक्तयोस्तयोर्मध्ये पुण्यस्य प्रवेशस्थानं सुहृदः पापस्य प्रवेशस्थानं शत्रव इति प्रवेशस्थानमेकस्यां शाखायामाम्नातं नतु विमोचनम्; अन्यस्यां विमोचनं प्रवेशस्थानं चेत्युभयमाम्नातम् एतत्सर्वं चिंतनीयमेव। इह विमोचनं प्रवेशस्थानं चेत्यनयोः समुच्चयेन सर्वत्र चिंतनमुत विकल्पेनेति संशयः। किं तावत्प्राप्तं 'तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां द्विषंतः पापकृत्यामि'ति शाट्यायनके श्रूयते; तांडिशाखायां 'अश्व इव रोमाणि विधूय पापं चंद्र इव राहोर्मुखात्प्रमुच्ये'ति श्रूयते; 'तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैती'ति चाथर्वणे; अत्र विदुषः पुण्यपापपरित्यागप्रतिपादकश्रुतौ परित्यक्तयोः पुण्यपापयोः प्रवेशस्थानं नोपसंहार्यं परित्यागश्रुतत्वादिति प्राप्ते [2]ब्रूमः—हानिर्विमोचनम्, उपायनं प्रवेशः। सूत्रे तुशब्देन हानिशब्दशेषत्वादिति हेतुः समुच्चीयते। तत्र हानिशब्द उपायनशब्दस्याप्युपलक्षणं तेन केवलायां हानावाम्नातायां केवले चोपायने आम्नाते इतरेतरसमुच्चय एव न्याय्यो न विकल्पः। कुतः उपायनशब्दशेषत्वात्—उपायनशब्दस्य हानिवाक्यशेषत्वात् विदुषा त्यक्तयोस्तयोः प्रवेशस्थानवाचिन उपायनशब्दस्य हानिशब्दापेक्षत्वादित्यर्थः। हानिशब्दशेषत्वाच्च पुण्यपापविमोचनवाचिनो हानिशब्दस्य तदुपादानभूतोपायनशब्दापेक्षत्वाच्चेत्यर्थः। ननु प्रदेशांतराम्नातवाक्यस्य प्रदेशांतरवाक्यं कथं शेषभूतमिति

---

१ हान्यधिकरणम्। २ परंस्तु हानौ तूपायनशब्दशेषत्वादिति सूत्रांश एवं व्याख्यायते—क्वचित्सुकृतदुःकृतयोर्हानिः श्रूयते क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायनं क्वचित्तूभयमपि हानिरुपायनं च तत्रोभयं श्रूयते तत्र तावन्न किंचिद्वक्तव्यमितरत्र यत्राप्युपायनमेव श्रूयते न हानिस्तत्राप्यर्थादेव हानिः संनिपतति। अन्यैरात्मीययोः सुकृतदुःकृतयोरुपेयमानयोरावश्यकत्वात्तद्धानेः यत्र तु हानिरेव श्रूयते नतूपायनं तत्रोपायनं संनिपतेन्नवेति विचिकित्सायामश्रवणात् असंनिपातो विद्यांतरगोचरत्वाच्च शाखांतरीयस्य श्रवणस्यापि चात्मकर्तृकं सुकृतदुःकृतयोर्हानं परकर्तृकं तूपायनं तयोरसत्यावश्यकभावे कथं हानेनोपायनमाक्षिप्येत।तस्मादसंनिपातो हानावुपायनस्येत्येतस्यां प्राप्तौ पठति हानाविति। हानौ त्वेतस्यां केवलायामपि श्रूयमाणायामुपायनं संनिपतितुमर्हति; कुतः उपायनशब्दशेषत्वात्—हानिशब्दशेषो ह्युपायनशब्दः समधिगतः कौषीतकिरहस्ये तस्मादन्यत्र केवलहानश्रवणेऽप्युपायनानुवृत्तिरिति।

चेत् यथा 'वानस्पत्याः कुशा' इत्येतद्वाक्यशेषभूतं 'औदुंबर्याः कुशा' इत्येतत्तद्विशेषकं प्रदेशांतरस्थं यथा वा 'देवासुराणां छंदोभिः स्तुवीतेत्ये'तच्छेषभूतं 'देवछंदांसि पूर्वाणी'ति यथा 'षोडशिनःस्तोत्रमुपाकरोती'त्यत्र छंदोगानां कालविशेषग्रहणाभावात् षोडशिनः पात्रविशेषस्य ग्रहणे अंगभूतं स्तोत्रं कदा कर्तव्यमित्येतच्छेषभूतं 'समयाध्युषिते सूर्ये षोडशिनःस्तोत्रमिति तैत्तिरीयकवाक्यं यथा ऋत्विज उपगायंती'येतच्छेषभूतं 'नाध्वर्युरुपगायेदि'ति शाखांतरीयं निषेधवाक्यम् , एवमुपायनवाक्यस्य हानिवाक्यशेषतया निर्वाहे सति न विकल्पो न्याय्यः । तदुक्तं पूर्वमीमांसायां जैमिनिना—अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यादिति । नन्वर्थवादः कथं देशांतरस्यार्थवादसापेक्ष इति चेत् न, सामोपास्तिस्तावकत्वेन श्रुतस्य 'एकविंशो वा इतोऽसावादित्य' इत्यर्थवादस्य एकविंशत्वनिर्णयाय तैत्तिरीयकगतसत्रप्रकरणस्यार्थवादापेक्षत्वदर्शनात् 'द्वादश मासाः पंचर्त्तवस्त्रय इमे लोका असावादित्य एकविंश' इति हि तत्र संख्यानिर्वाह उक्तः । ततोऽर्थवादत्वेऽप्युपायनमुपसंहार्यम् , हान्युपायनयोरेकत्राप्यवगतिरस्ति कौषीतकिश्रुतौ 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयंति अप्रिया दुष्कृतमि'ति, अतस्तयोः समुच्चयः ।

## [3]सांपराये तर्त्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

पूर्वोक्तं पुण्यपापविमोचनं देहवियोगकाल एव चिंतनीयमुत मार्गे चेति संदिग्ध उभयत्रेति पूर्वपक्षयति । तथाहि 'अश्व इव रोमाणि विधूय पापं चंद्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामी'ति कुत्रचिद्देहवियोगकाल एव श्रुता सुकृतदुष्कृतहानिः, कुत्रचित्स आगच्छति विरजां नदीं तां मनसात्येति, तत्सुकृतदुष्कृते विधूनत इति, अध्वनि श्रुता तद्धानिरिति प्राप्ते सिद्धांतं ब्रूमः—एवमुभयश्रुतिसद्भावेऽपि सांपराये देहवियोगकाल एव चिंतनीया तद्धानिः । तदूर्ध्वं या ब्रह्मप्राप्तिस्तदनंतरं तर्त्तव्यस्यातिक्रमणीयस्य कर्मसाध्यस्य सुखदुःखभोगस्याभावात् । तथा ह्यधीयतेऽन्ये 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्य' इति देहवियोगादूर्ध्वं ब्रह्मप्राप्तिरेव ।

## छंदत उभयाविरोधात् ॥ २८ ॥

देहवियोगकाले पुण्यपापविमोचनं तदूर्ध्वं ब्रह्मप्राप्तिश्च श्रूयते, एवमुभयत्र श्रुत्यविरोधाद्धेतोस्तत्सुकृतदुष्कृते विधूनुत इति मार्गश्रुतिखंडः छंदतो यथेष्टं नेतव्यः 'स

१ अर्द्धास्तमिते । २ तैत्तिरीयके । ३ सांपरायाधिकरणम् ।

एतं देवयानं पंथानमापद्याग्निलोकमागच्छती'त्यारभ्य 'स आगच्छति विरजां नदीं तां मनसात्येती'त्यंतद्वाक्यात्प्रागुपनेतव्य इत्यर्थः । अत्र पूर्वपक्षी वदति—

### गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥

देहवियोगकाले विरजानद्यतिक्रमणकाले चेत्युभयथा कर्मक्षये सत्येव देवयानगतेः अर्थवत्त्वं प्रयोजनवत्त्वम् ; अन्यथा देहवियोगकाल एव सर्वकर्मक्षये सति सूक्ष्मशरीरधारककर्मनाशःस्यात्, तथा सति सूक्ष्मशरीरानुपलब्धेः देवयानगतिश्रुतिविरोध इति प्राप्ते ब्रूमः—

### उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

देहवियोगकाले सर्वकर्मक्षये सत्यपि गतिविधिरुपपन्न एव परब्रह्मोपासकानाम्; कुतः तल्लक्षणार्थोपलब्धेः–क्षीणकर्मणामप्याविर्भूतस्वरूपाणां तेषां भागवतीतनुसंबंधलक्षणार्थोपलब्धेः । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्वस्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवती'त्यादिषु भागवतीतनुसंबंधः श्रूयते । लोकवत्–यथा लोके राजाश्रितानां पुरुषाणामितरपुरुषसाधारणसर्वार्थसिद्धिर्नास्ति किंत्वधिकैव तद्वत् । तथा सति परब्रह्मैकांतिकभक्तानां देहवियोगकाले सकलकर्मक्षयेऽपि परब्रह्मोपासनबलादुपगतभागवतीतन्वा देवयानश्रुत्यभिहितमार्गगतिः तत्तद्देशविहारशशांकसंवादादिसर्वार्थसिद्धिसंभवश्च श्रूयते । अतो मार्गश्रुतेरपि न बाधः। 'स आगच्छति विरजां नदीं तां मनसात्येति, तत्सुकृतदुष्कृते विधूनुते' इति श्रुतिस्तु छंदत इति सूत्रे व्याख्याता। अथवा सा निरवयवाक्षरब्रह्मोपासकानां देहवियोगकालानंतरं सूक्ष्मशरीरेणार्चिरादिमार्गे विरजानदीप्राप्त्यनंतरं सुकृतदुःकृतमयशरीरभंगपूर्वकनिरवयवाक्षरब्रह्मैक्यप्राप्तिबोधिकेति निर्णयः । आधिकारिकाणां कथं मुक्तिप्रकार इति चेत्तत्राह—

### यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥

सर्वत्राभिहितं परब्रह्मोपासकानां शुभाशुभकर्मविमोचनमर्चिरादिमार्गेण ब्रह्मपुरप्राप्तिश्च । अत्र ब्रह्मांडकलापे परब्रह्मोपासकानामाधिकारिकाणां देवानामृषीणां च अधिकारभोगसमाप्तिमृते ब्रह्मपुरप्राप्तिरूपा मुक्तिरस्ति नवेति संशयः। किं तावत्प्राप्तं वसिष्ठादीनामधिकारिणां तत्र तत्र पुराणादिषु जन्मांतरश्रवणात्तेषां तत्त्वविदामधिकारसमाप्तिं विनापि मोक्षप्राप्तिरिति चेदत्रोच्यते–अधिकारिपुरुषाणां शापेन स्वेच्छया वा स्वाधिकारिकदेहपातादनंतरप्राप्तमनुष्यादिदेहपातादनंतरं न फलांतरानुभवः, किंतु

आप्रारब्धाधिकारहेतुकर्मविनाशादूर्ध्वमेवेति निश्चीयते। एवं च सति यावदधिकारसमाप्तिस्तावत्तद्धेतुकर्मानुभवाय तत्रैव तेषामवस्थितिर्नार्चिरादिगत्या ब्रह्मपुरप्राप्तिः। तेषां तदन्यज्ञानिनां च प्रारब्धकर्मभोगानंतरमेव सर्वकर्म नश्यति, अतोऽधिकारिणामधिकारनिवृत्तेरनंतरं मुक्तिर्न मध्ये मोक्षप्राप्तिः। प्रत्यक्षश्रीहर्यैकांतिकभक्तानां तु तदिच्छात एव ब्रह्मपुरप्राप्तिर्नतु प्रारब्धकर्मभोगाधीना। परब्रह्मणः स्वातंत्र्यादिति पक्षांतरनिर्णयः।

[4]अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥

उपकोसलाद्युपासनेष्वर्चिरादिगतिराम्नायते। सा किं तन्निष्ठानामेव उत सर्वेषां ब्रह्मोपासकानामिति संशयः। छांदोग्ये पंचाग्निविद्यायामुपकोसलविद्यायां चार्चिरादिगतिः पठिता, इतरासु ब्रह्मविद्यासु न पठिता; यासु प्रकरणवशाच्छ्रुता तास्वेव नियता नापरास्विति पूर्वपक्षे प्राप्ते ब्रूमः–यासु श्रुता तास्वेवेति न नियमः, अपि तु सर्वासु परब्रह्मोपासनासु सा गतिर्भवति; तथा सत्येव शब्दानुमानाभ्यां–श्रुतिस्मृतिभ्यामविरोधः। पंचाग्निविद्यायां 'ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवती'ति अविशेषेण श्रुतिः। स्मृतिरपि—

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः'॥

इत्यविशेषिका। ततः सर्वेषां परब्रह्मोपासकानामर्चिरादिगत्या ब्रह्मपुरप्राप्तिर्नियतैव।

[7]अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥३३

बृहदारण्यके 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसंग'मित्यादौ ब्रह्मस्वरूपबोधाय केचन निषेधाः श्रुताः, तथा चाथर्वणे 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमि'त्यादौ केचन निषेधाः श्रुताः, तेषामानंदादिवदुपसंहारोऽस्ति नवेति संशयः। तत्र किं प्राप्नोति तेषां निषेधानामानंदादिवद्गुणत्वाभावात् न सर्वासु परविद्यासूपसंहार इति प्राप्ते ब्रूमः–अक्षराख्यपरब्रह्मसंबंधिनीनामस्थूलत्वाद्रेश्यत्वादिनिषेधधियां तत्तन्निषेधबुद्धिरूपाणां गुणानां परासु परविद्यास्ववरोध उपसंहार उचितः, कुतः, सामान्यतद्भावाभ्यां-सकलमंगलगुणिनो ब्रह्मपुरस्थस्य दिव्यमूर्तेरुपास्यस्य परमात्मनः

१ अधिकारसमाप्तिहेतु। २ अधिकारेष्वेव। ३ देवादीनाम्। ४ अनियमाधिकरणम्। ५ उपकोसलाद्युपासननिष्ठानामेव। ६ अर्चिरादिः। ७ अक्षराध्यधिकरणम्।

सर्ववेदेषु सामान्यादेकत्वागमात् तेत्र तेषां धर्माणां भावाच्च एतैर्हि सकलेतरवस्तु-विसजातीयपरब्रह्मानुसंधानोपपत्तिर्युक्तेतरथा नास्ति। हेयगुणसंबंधानर्हानंदादयो हि प्रत्यगात्मनः सकाशात् परब्रह्मणो वैलक्षण्यबोधकाः। नन्वस्थूलादृश्यत्वादयो धर्मा जीवात्मन्यपि संभवंतीति चेन्नहि तस्यानाद्यविद्यावशत्वेन स्थूलत्वादिस्वभावसंबंधा-देते[4] संभवंति; प्रधानानुवृत्तित्वं गुणस्य स्वभावः।तथात्वे निदर्शनमाह-औपसदवदिति; यथा 'जमदग्निः पुष्टिकामश्चतूरात्रेणायजते'ति यजुर्वेदविहिते जामदग्न्यहोत्रे पुरोडाश-संबंधिन्य उपसदः इष्टयः उपदिष्टाः संति। तत्र पठितानां पुरोडाशप्रदानमंत्राणामग्नेर्वै होत्रं विरथ्वरमित्यादीनामुद्गातृसामवेदपठितत्वेन सामवेदस्वरस्योदात्तत्वबोधके उच्चै-स्त्वे प्राप्तेऽपि तेषां याजुर्वैदिकाध्वर्युकर्त्तृकपुरोडाशसंबंध्युपसदनुवृत्तित्वादनुदात्तत्व-बोधकमुपांशुगुणत्वं तथा गुणिनः प्रधानभूतस्य परमात्मनः स्वरूपवैलक्षण्यबोधाय यत्र कुत्रापि श्रुतानां तत्तन्निषेधबुद्धिरूपाणां गुणानां तदनुवर्त्तित्वम्। तदुक्तं धर्ममीमांसा-प्रथमकांडे गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग इति; नैतावता सर्वेषामु-पसंहार्यत्वप्रसक्तिरित्याह—

## इयदामननात्॥ ३४॥

आमननमाभिमुख्येन मननं इयदेव गुणजातं सर्वत्रोपसंहार्यं येन गुणजातेन सकलेतरव्यावृत्तं ब्रह्ममननं भवति, अतोऽक्षराख्यपरब्रह्मसंबंधिनीनां अस्थूलत्वादि-निषेधधियामेव सकलेतरवस्तुव्यावर्त्तकधर्मरूपत्वादुपसंहारः परविद्यासु नतु 'सर्वकर्मा सर्वकामः सर्वगंधः सर्वरस' इत्यादीनामपीति।

## [5]अंतराभूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नो-पदेशवत्॥ ३५॥

अंतराशब्द उभयप्रश्नभेदसूचकः।बृहदारण्यके 'यत्साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वांतरस्तं मे व्याचक्ष्वे'ति उपस्तप्रश्ने प्रतिवचनमेवमाम्नायते 'यः प्राणेन प्राणिति स त आत्मा सर्वांतरो योऽपानेनापानिति स त आत्मा सर्वांतर' इत्याद्यतो 'अन्यदा-र्त्तमि'त्यंतम्। तदनंतरं 'यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वांतरस्तं मे व्याचक्ष्वे'ति कहोलप्रश्ने तु प्रतिवचनमेवमाम्नायते 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्ये-त्येतं हैवमात्मानं विदित्वे'त्याद्यतोन्यदार्त्तमित्यंतम्; इहोभयत्र विद्यैक्यं नवेति संशयः।

१ सर्ववेदांतेषु। २ अस्थूलत्वादीनाम्। ३ अस्थूलत्वादिधर्मैः। ४ अस्थूलत्वादिधर्माः। ५ अंतरत्वाधिकरणम्।

तथा सति य आत्मेत्युपस्तप्रश्नो भूतग्रामवत्स्वात्मनः देहवतः स्वकीयात्मनः संबंधी प्रत्यगात्मविषय इत्यर्थः । अन्यथा स परमात्मविषय इत्युक्तौ 'यः प्राणेन प्राणिति स त आत्मे'त्यत्र प्रतिवचनविषयः प्रत्यगात्मेत्युक्ते विरोधात् कहोलप्रतिवचनविषयस्याशनायाद्यतीतत्वहेतोः परमात्मनो भेदानुपपत्तिरित्युभयप्रश्नप्रतिवचनपक्षे विद्याभेदरूपा पूर्वपक्षशंकास्तीति चेत्तत्र सिद्धांतयति–नोपदेशवदिति उभयत्र प्रश्नैकरूप्यात् नारायण एवात्र प्रश्नविषयः न प्रत्यगात्मा । प्रतिवचनगतं निरुपाधिकं प्राणनादिहेतुत्वमशनायाद्यतीतत्वप्रयोजकत्वं च तत्रैव समुपपद्यते सद्विद्योपदेशवत् । प्रश्नप्रतिवचनावृत्तिरेकविषया प्रष्टृभेदो रूपभेदश्च न विद्याभेदावहः । तथा चाह—

## व्यतिहारो विशिंषंति हीतरवत् ॥ ३६ ॥

अर्थैक्ये निश्चिते सति तयोरुभयोः प्रष्ट्रोः प्रतिवचनगतबुद्धिव्यतिहारः परस्परं कर्त्तव्यः । तथाहि उपस्तेनाप्यशनप्रभृत्यतीतत्वधीः कार्या तथा कहोलेनापि प्राणनादिहेतुत्वादिधीः कार्या । उभयत्र गतानि हि वाक्यानि नारायणं विशिंषंति इतरवत् यथेतरत्र सद्विद्यायां एकस्यैव प्रश्नप्रतिवचनगतत्वं तद्वत् अतो न विद्याभेदः ।

## सैव[5] हि सत्यादयः ॥ ३७ ॥

यद्दृष्टांतेन पूर्वाधिकरणनिर्णयः तत्रापि सद्विद्यायां संशयः भिन्नेयमभिन्ना वेति । प्रश्नश्रुतिदर्शनात् प्रतिवचनभेददर्शनेन प्रत्यावृत्तिभेदात् सा भिन्नेति प्राप्ते ब्रूमः–न भिन्नेयं सद्विद्या 'सेयं देवतैक्षते'ति प्रस्तुताया एव हरिदेवतायाः प्रश्नप्रतिवचनेष्वनुवृत्तेः । यतस्तत्सत्यं स आत्मा तत्त्वमसीति पुनः पुनः सत्यादीनामावृत्तिर्गम्यते; अतो वस्त्वैक्यादभिन्नेयं विद्येति ।

## [9]कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥

छांदोग्ये वाजसनेयिशाखायां च दहरविद्या श्रुता सेयमभिन्ना भिन्ना वेति

---

१ उपस्तकहोलपृच्छायाम् । २ उपस्तकहोलपृच्छायाम् । ३ नारायण एव । ४ उभयोरुपस्तकहोलयोः पृच्छायाम् । ५ सैव हि सच्छब्दाभिहिता परमकारणभूता परा देवतैव सेयं देवतैक्षत तेजः परस्यां देवतायां इति प्रकृता यथा सोममधुकृतो निस्तिष्ठंतीत्यादिषु पर्यायेषु सर्वेषूपपद्यते यत ऐतदात्म्यमिदं सर्वं तत्सत्यम् स आत्मेति प्रथमपर्यायाधीताः सत्यादयः सर्वेषु पर्यायेषूपपाद्योपसंह्रियंते । ६ सद्विद्यादृष्टांतेन । ७ नित्यानंदपरिव्राट्कृतायां छांदोग्यस्य समस्तषष्ठाध्यायटीकायां स्पष्टमेतत्प्रतीयते अतो विशेषविस्तारस्ततोऽवगंतव्यः । ८ तत्सत्यं स आत्मेति पुनः पुनः सत्यादीनामावृत्तिभेदात् । ९ कामाद्यधिकरणम् ।

संशये पूर्वः पक्षः—'यदिदमस्मिन् ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतराकाश' इत्यारभ्य दहराकाशशब्दोक्तस्य दहरपुंडरीकवर्तिनोऽपहतपाप्मत्वादिगुणाष्टकं मुख्यमाम्नातं वाजसनेयिशाखायां 'य एषोंऽतर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ती'ति वशित्वादयो धर्माः प्रदर्शिताः । इत्युभयत्रोपास्यस्य धर्मिणः परमात्मन एकत्राकाशशब्दवाच्यत्वमितरत्र चाकाशे शयानत्वम् ; एवं तस्य रूपभेदो रूपभेदाच्च विद्या भिन्नेति प्राप्ते सिद्धांतं ब्रूमः—तत्र वाजनेयिशाखायामाकाशशयानस्य दिव्यमूर्त्तेः परमात्मनश्चिदाकाशशरीरतया 'यस्याकाशः शरीरमि'ति श्रुतत्वात्, इतरत्र छांदोग्ये शरीरशरीरिणोरभेदविवक्षान्यायत आकाशरूपतया श्रुतत्वाच्च पुंडरीकायतनादिभ्यो विद्यैक्यमेव । अतः सत्यकामादिगुणजातं सर्वत्रोपसंहार्यं छांदोग्यगतापहतपाप्मत्वादयो वाजिशाखागता वशित्वादयश्च सर्वे एते गुणा दहरविद्यायां दिव्यमनोहरमंगलमूर्त्तेर्नारायणस्यानुसंधेयाः । ननु यथा प्राकृतावयविनः पुरुषस्यावयवादिलोपस्तथा दिव्यमूर्त्तेः परमात्मनोऽप्यवयवादिलोपः स्यादिति चेत्तत्राह-

## आदरादलोपः ॥ ३९ ॥

सर्वत्रापहतपाप्मत्वादिगुणगणविशिष्टमप्राकृतावयविपरब्रह्मस्वरूपं सत्यसंकल्पत्वादिगुणवृंदं च निरूपितम् । इह तस्य मनोहररूपस्य तेषां गुणानां च तेजःपुंजरूपेऽक्षरब्रह्मणि कदाचिल्लोपः स्यादथवा कदाचिदपि लोपो न स्यादिति संदेहः । अत्र किं तावत्प्राप्तम् उपासनार्थं परमात्मनि तस्य तेषां च कल्पितत्वात्कदाचिल्लोपो भवेदिति पूर्वपक्षे प्राप्ते सिद्धांतयति—तद्दिव्यमनोहरावयवयुतस्वरूपस्य तेषां गुणानां चानादिसिद्धत्वेन सर्वत्र श्रुतिस्मृतिष्वभ्यासस्यादरादलोप एव । अत एवानादिसिद्धदिव्यावयविदिव्याप्राकृतगुणगणविशिष्टमसंख्यकोटिसूर्यचंद्रमससंनिभे ब्रह्मपुरे सदा वर्त्तमानं सपार्षदं परमात्मस्वरूपं निरंतराल्लभमुच्यते । तथा ह्युपनिषत्सु श्रूयते, पुराणेतिहासादिषु स्मर्यते—'चरणं पवित्रं विततं पुराणमि'ति, 'आत्मैवेदमग्र आसीत्पुरुषविध' इति, पुरुषस्य द्विभुजनरस्य विधाः करचरणाद्यवयवा इव विधा यस्य इत्यर्थः । 'यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठित' इति 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ती'ति 'हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण इति य आत्मा अपहत-

१ छांदोग्ये वाजसनेयिशाखायां च । २ छांदोग्ये । ३ वाजसनेयिशाखायाम् । ४ परब्रह्मणः । ५ मनोहररूपस्य । ६ अपहतपाप्मत्वादिगुणानाम् ।

पाप्मा विजरोऽमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प' इति, 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वमि'ति, 'पुरुषान्न परं किंचित्सा काष्ठा सा परागति'रिति, 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽतर आत्मानंदमयः स वा एष पुरुषविध एवे'ति, 'स्वभक्तेभ्यो रमते स मे सर्वस्वमि'ति, स्वभक्तैः साकं रमत इत्यर्थः, 'अक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुरि'ति, विश्वेभ्यः सर्वेभ्यो ब्रह्मादिभ्य आधिक्येन वर्त्तमानाः देवा दिव्याप्राकृतदेहा हरिपार्षदाः परमे भौतिकाकाशादुत्कृष्टे व्योमनि चिदाकाशाख्ये अक्षरे ब्रह्मणि निषेदुः–तत्परिचर्यार्थं निषण्णा अभवन्निति तात्पर्यार्थः । 'ददर्श कृष्णं ग्रीष्मस्य कोटिसूर्यसमप्रभम् । द्विभुजं मुरलीहस्तं किशोरं गोपवेषकम् ॥ परमात्मानमीशं च भक्तानुग्रहविग्रहम् । ब्रह्मविष्णुशिवाद्यैश्च स्तुतं मुनिगणैर्नुतम् ॥ इति । 'एका मूर्त्तिरनिर्देश्या शुक्लां पश्यंति तां बुधाः । ज्वालामालोपरुद्धांगी निष्ठा सा योगिनां परा ॥ दूरस्था चांतिकस्था च विज्ञेया सा गुणातिगा । वासुदेवाभिधानासौ निर्मलत्वेन दृश्यते' ॥ इति । 'इति संचित्य भगवान् महाकारुणिको हरिः । दर्शयामास लोकं स्वं गोपानां तमसः परम् ॥ सत्यं ज्ञानमनंतं यद्ब्रह्म ज्योतिः सनातनम् । यद्धि पश्यंति मुनयो गुणापाये समाहिताः ॥ नंदादयस्तु तं दृष्ट्वा परमानंदनिर्वृताः । कृष्णं च तत्र छंदोभिः स्तूयमानं सुविस्मिताः'॥ इति । 'तस्मै स्वलोकं भगवान्सभाजितः संदर्शयामास परं न यत् परम् । प्रवर्त्तते यत्र रजस्तमस्तयोः सत्वं च मिश्रं न च कालविक्रमः ॥ न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः । ददर्श तत्राखिलसात्वतां पतिं श्रियःपतिं यज्ञपतिं जगत्पतिम् । सुनंदनंदप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम्' ॥ 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायंते प्रलये न व्यथंति च'॥ इति । महाभारते च–'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः'। इत्यादिषु नित्यसिद्धत्वेन निरूपिता ये दिव्यात्रयविग्रुरुषोत्तमतल्लोकपार्षदगुणास्तेषां सच्छास्त्रैन्त्यादरेण निर्णीतत्वात् प्राकृतात्यंतिकप्रलययोरपि लोपो न भवेदेवेति निश्चीयते ।

## उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

इह पूर्वाधिकरणोक्तं परब्रह्मस्वरूपमेव मुक्तप्राप्यमुतान्यदिति संशयः । किं तावदत्र प्राप्यते 'अपाणिपादं निष्क्रियं शांतं निरवद्यं निरंजनमि'त्यादिषु ब्रह्म निर्विशेषमेव श्रूयते; 'ब्रह्म वेद ब्रह्मैव भवती'ति मुक्तस्य तत्स्वरूपापत्तिरेव मुक्तिरतो निर्विशेषमेव ब्रह्म मुक्तप्राप्यं नान्यदिति पूर्वपक्षे प्राप्ते सिद्धांतं ब्रूमः–पूर्वाधिकरणनिर्णीतं दिव्या-

प्राकृतावयविदिव्याप्राकृतगुणगणविशिष्टं परब्रह्मस्वरूपं मुक्तप्राप्यं नान्यत्। कुतः तद्वचनात्-'विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि'ति प्राकृतनामरूपादिमुक्तो जीवात्मा नारायणोपासनोपलब्धया प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुमित्यादिनोक्तया भागवतीतन्वा परात् सर्वोत्कृष्टादक्षरब्रह्मणः सकाशात्परमुत्कृष्टं दिव्यमप्राकृतं पुरुषं पुरुषाकृतिं पुरुषोत्तमं भगवंतमुपैति प्राप्नोतीति तात्पर्यार्थः। इति मुक्तस्य तत्प्राप्यत्ववचनात्। एवं पुरुषाकारतया प्रतिपादिते परब्रह्मणि उपस्थिते समीपे स्थिते सति तद्दर्शनादिना भक्तजनस्य निरतिशयानंदो भवति, अतस्तदेव प्राप्यमिति निश्चीयते। निष्कलं निष्क्रियमित्यादिवाक्यजातं प्राकृतावयवक्रियागुणनिषेधपरं न त्वप्राकृतावयवक्रियागुणनिषेधपरम् ; तथाहि 'अपाणिपादमि'त्यादिना 'निष्कलं निष्क्रियमि'त्यादिना च 'आत्मैवेदमग्र आसीत्पुरुषविध' इत्यादिना 'यः कालकालो गुणी'त्यादिना 'प्रधानक्षेत्रज्ञपतिर्गुणेश' इत्यादिना च परब्रह्मणो निरवयवत्वे निर्गुणत्वे च सावयवत्वे सगुणत्वे च सामान्येन प्राप्ते सति 'चरणं पवित्रं विततं पुराणमि'ति 'अन्योऽन्तर आत्मानंदमयः स वा एष पुरुषविध एवे'ति, 'अपहतपाप्मे'ति, 'यः सर्वज्ञः सर्वविदि'त्यादिभिः श्रुत्यंतरैर्निरवयवत्वनिर्गुणत्वप्रतिपादकश्रुतिभ्यः प्राकृतावयवहेयगुणराहित्यं सावयवत्वसगुणत्वप्रतिपादकश्रुतिभ्यश्चाप्राकृतावयवकल्याणगुणगणसाहित्यं चेति विज्ञायते। अतो दिव्यावयवमप्राकृतकल्याणगुणगणविशिष्टं परब्रह्मैव मुक्तप्राप्यं फलमिति सिद्धम्।

## [1]तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबंधःफलम् ॥ ४१ ॥

छांदोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति कर्मांगाश्रयाण्युद्गीथाद्युपासनानि कर्मसु नियतान्युतानियतानीति संदेहः। अत्र किं तावत्प्राप्तं तेषां कर्मांगत्वात्कर्मानुष्ठाने तानि नियमेनानुष्ठेयानीति पूर्वःपक्षः।तेषां कर्मप्रकरणमनारभ्याधीतत्वेऽपि'ओमित्येतदक्षरमि'त्यादिवाक्यादेव क्रतुसंबंधोपपत्तेः। यथा'यस्य पर्णमयी जुहूर्भवती'त्यत्र अनारभ्याधीतस्य पर्णमयत्वस्य अव्यभिचरितक्रतुसंबंधिजुहूद्वारा एतद्वाक्यतः क्रतुसंबंधः, तथा 'य एवं विद्वानुद्गायति य एवं विद्वान्साम गायती'त्यव्यभिचरितक्रतुसंबंधिसामोद्गीथादिद्वारा तदुपासनानां क्रतुसंबंधः, अतः कर्मसु नियतान्युद्गीथाद्युपासनानीत्येवं प्राप्ते सिद्धांतं ब्रूमः--गोदोहनादिवदनियतान्युपासनानि। यथा'चमसेनापःप्रणयेत् गोदोहनेन

---

१ तन्निर्धारणानियमाधिकरणम्। २ उद्गीथाद्युपासनानाम्। ३ यस्य पर्णमयी जुहूर्भवतीति वाक्यात्। ४ उद्गीथाद्युपासनानाम्।

पशुकामस्ये'ति अपां प्रणयनमाश्रित्य विधीयमानं गोदोहनमक्रत्वर्थत्वादैच्छिकमेव नतु स्वेनं सहापां प्रणयनादिवत्क्रत्वर्थे नियतं तथा कर्माण्याश्रित्य विधीयमानान्युपासनानि क्रत्वर्थे नियतानि न भवंति, "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे'त्यत्रोद्गीथाद्युपासनरहितस्यापि क्रत्वनुष्ठानदर्शनात्। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'ति वर्त्तमाननिर्देशेऽपि क्रतोर्वीर्यवत्तरत्वसाधनतयोपासनाविधिकल्पनात् वीर्यवत्तरतानामप्रबलकर्मांतरप्रतिबंधाभावेनाविलंबितफलत्वमेव तथा कामवृष्ट्यादिपृथक्फलश्रवणाच्च, एवं विद्यायुक्तकर्मणः पृथक्फलम्, अतः कर्मसु न नियतान्युद्गीथाद्युपासनानि। अथ सूत्रपदार्थो वर्ण्यते–तन्निर्धारणानियमः–तस्य मनसो निश्चयेन धारणं यस्मिंस्तदुद्गीथोपासनं तस्य कर्मस्वनियमः, कुतः तद्दृष्टेः–'तेनोभौ कुरुत' इत्यनियमदर्शनात् पृथग्भूतं ह्युपासनस्य फलमित्यवगम्यते। तत्फलस्य चाप्रतिबंधोऽविलंबितत्वं शीघ्रप्राप्यत्वमित्यर्थः।

## [4]प्रदानवदेव तदुक्तम् ॥ ४२ ॥

एकस्यैव नारायणस्य परब्रह्मणः सर्वासु परविद्यासु तत्तद्गुणस्थानविशिष्टतया पृथक्चिंतनीयत्वमुक्तं तत्संभवति नवेति संशयः। किं तावत्प्राप्तं गुणभेदेऽपि गुणिनो ब्रह्मण एकत्वादुपासनं न भिद्यते। यथैकस्य राज्ञस्तत्तद्भूषणादिविशेषणभेदेन युक्तस्यापि कार्यदर्शनव्यायामभोजनासनमृगयासमरादिव्यापारेषु सिंहासनादिस्थानभेदेऽपि भेदो न दृश्यते तथा दहरादिस्थानभेदेऽपि तत्तद्गुणभेदविशिष्टस्यापि ब्रह्मण एकत्वात्तदनुसंधानमेकमेवेत्येवं प्राप्ते ब्रूमः–एकस्यैव परब्रह्मणो नारायणस्य स्वरूपाभेदेऽपि तत्तद्गुणादिविशिष्टस्वरूपतया गुणादिरूपविशेषणभिदया भेदात्तत्तद्विशिष्टगुण्यावृत्त्या पृथक्तदुपासनप्रयोगः, इंद्रप्रदानवत्; 'यथेंद्राय राज्ञे पुरोडाशमिंद्रायाधिराजायेंद्राय स्वराज्ञ' इति पुरोडाशत्रयवत्यामिष्टौ राजाधिराजस्वराजगुणभेदेन तद्विशिष्टदेवताभेदात्पुरोडाशानां प्रदानस्य प्रक्षेपस्य भेदस्तद्वत्; तदुक्तं नाना वा देवता पृथक्त्वादिति संकर्षणेन। अत एकस्यापि परब्रह्मणो गुणभेदात् उपासनपृथक्त्वम्। यदुक्तमेकस्य राज्ञ इति तत्रापि राजस्वरूपाभेदेऽपि स्थानगुणादिभेदादुपासनप्रकारो भिन्न एव सेवकानामिति।

---

१ गोदोहनेन। २ तेनोंकारेणोभावपि कर्म कुरुतः यश्चैतदोंकाराख्यमक्षरम् एवं रसतमत्वाप्त्यादिगुणकं वेद यश्च न वेद तावुभाविति संबंधः। ३ यस्मात् मणिविक्रये शबरवणिजोः सामान्यविशेषज्ञानाभ्यां फलभेदस्तस्माद्यदेव कर्म विद्ययोद्गीथादिविषयया श्रद्धया आस्तिक्यबुद्ध्या उपनिषदा तत्तद्देवताध्यानेन युक्तं करोति तदेव कर्म वीर्यवत्तरं भवतीत्यर्थः। अनेन विद्याहीनं कर्म वीर्यवन्मात्रं विद्यासहितं तु वीर्यवत्तरमिति। ४ प्रदानाधिकरणम्।

## [1]लिंगभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥

तैत्तरीयाः पठंति ' सहस्रशीर्षं देवं सहस्राक्षं विश्वसंभवं विश्वतः परमं नित्य विश्वं नारायणमि'त्यारभ्य'सोऽक्षरःपरमः स्वराडित्यंतम्।अस्मिन्ननुवाके उपास्योऽभिहितः। किमयं पूर्वाऽनुवाकोदितदहरविद्योपास्यविशेपनिर्द्धारणार्थः, उत सर्ववेदांतोदितसर्वपरविद्योपास्यविशेपनिर्द्धारणार्थ इति संशयः। दहरविद्याया आनंतर्येण सान्निध्यात् स दहरविद्योपास्यविशेपनिर्द्धारणार्थ इति पूर्वः पक्षः। सहस्रशीर्षमित्यादिद्वितीयाविभक्तिनिर्देशस्य दहरविद्याभ्यंतरोदितोपासिना पुरुषेण सह संबंधस्यैव युक्तत्वादिति प्राप्ते सिद्धांतं ब्रूमः-तदेव परमं ब्रह्म परंज्योतिः परमात्माऽक्षरशिवादिशब्दैः समस्तपरविद्योपास्यानामनुवादं कृत्वा अनेन वाक्येन तेषां नारायणत्वप्रतिपादनात्तस्य नारायणस्यैव प्रकरणाच्च स्वरूपबलीयस्त्वेन तस्यैव सर्वविद्योपास्यत्वनिर्द्धारणमस्तीति निश्चितम्। न च सहस्रशीर्षमिति द्वितीयानिर्देशः पूर्वेणोपासिना संबध्यते, 'तस्मिन्यदंतस्तदुपासितव्यमि'ति पूर्वेण कृत्प्रत्ययेन कर्माभिहितमिति तत्र द्वितीयानिर्देशायोगात्। 'नारायणः परं ब्रह्म व्याप्य नारायणः स्थितः' 'परमात्मा व्यवस्थित' इत्यादिभिरैक्याध्यौत् प्रथमार्थे द्वितीया। अथ सूत्रार्थविवेचनं विधीयते—'सहस्रशीर्षं देवमि'त्यादिवाक्ये प्रासंगिकदहरविद्योपास्यस्यैव नोपादानं किंतु सर्वपरविद्योपास्यमात्रस्य; लिंगभूयस्त्वात्—सर्वविद्योपास्यनिर्द्धारणे नारायणस्य चिह्नभूतवाक्यभूयस्त्वादित्यर्थः। तद्धि लिंगवाक्यं प्रकरणाद्बलीयः बलवत्तरं तदपि पूर्वस्मिन्कांडे श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमित्यादिनोक्तम्; एवं सर्वोपास्यनिर्द्धारणे स्थिते सति दहरविद्यायामपि अयं नारायण एवोपास्यस्तस्यैव 'पद्मकोशप्रतीकाशमि'त्यादिना हृदयादिष्वभिधानं च युज्यत इति तात्पर्यम्;तस्मादसंख्यमुक्तकोटिसेव्यं नारायणाख्यं परं ब्रह्म सकलपरविद्योपास्यमिति सिद्धम्।

## [6]पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४४ ॥

वाजसनेयकेऽग्निरहस्यब्राह्मणे श्रूयतेऽस्य विषयः 'षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन् अर्कान्मनोमयान्मनश्चित' इति तथा 'वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितःकर्मचितोऽग्नीनि'ति;पुरुषस्य शतसंवत्सरमिते आयुषि षट्त्रिंशत्सहस्राणि दिनानि;

---

१ लिंगभूयस्त्वाधिकरणम्। २ सहस्रशीर्षमित्यादिना। ३ समस्तपरविद्योपास्यानाम्। ४ सहस्रशीर्षमित्यादिवाक्ये। ५ लिंगस्य भूयस्त्वमपि। ६ पूर्वविकल्पाधिकरणम्।

तत्रैकैकस्मिन्दिने यावत्यो मनोवृत्तयस्तासामेकैकोऽग्नित्वे मते सति अग्नयः षट्त्रिंशत्सहस्राणि संपद्यंते; ते च प्रत्यगात्मस्वरूपेण ध्यातव्याः। एवं वाक्चितादयोऽपि। ते सर्वे विद्यामयक्रत्वंगभूता उत क्रियामयक्रत्वंगभूता इति संशये पूर्वपक्षः प्रवर्त्तते। मनश्चिदादीनां सांपादिकाग्नीनां 'नैव वा इदमग्रे सदासीन्नैव सदासीदि'त्यादिना पूर्वमुक्तेष्टकचिताग्निशेषभूतक्रियामयक्रत्वनुप्रवेशः स्यात्, ततश्च तेषामग्नीनां इष्टकचिताग्निना संकल्पः मानसवत्। यथा द्वादशाहे दशमेऽहन्यादिवाक्ये पृथिवीपात्रस्य प्रजापतिदेवताकस्य समुद्रद्रव्यस्य मानसग्रहस्य मनःसंपाद्यग्रहणासादनस्तोत्रशस्त्रहवनप्रत्याहरणभक्षणत्वेन संभूतस्य मानसस्यापि सत्कर्मणः क्रियामयक्रत्वंगत्वम्, एवमेषां मानसानामपि क्रियामयक्रत्वंगत्वम्।अथ सूत्रार्थवर्णनं-मनश्चिदादिसांपादिकाग्नीनां पूर्वेण 'नैव वा इदमग्रे सन्नैव सदासीदि'त्यादिपूर्वश्रुत्युक्तेनेष्टकचिताग्निना सह विकल्पःसंकल्पः स्यात्, कुतः तत्रेष्टकचिताग्नेः प्रकरणात्। अत एव क्रियाः क्रियामयक्रत्वंगभूता ये मनश्चिदादयस्ते मानसवत् स्युः।

## अतिदेशाच्च ॥ ४५ ॥

'तेषामेकैक एव तावान्यावानसौ पूर्व' इति तेष्विष्टकचिताग्निकार्यस्यातिदेशाच्चारोपणादपि तदंगत्वमिति; एवं प्राप्ते सिद्धांत उच्यते—

## विद्यैव तु निर्द्धारणाद्दर्शनाच्च ॥ ४६ ॥

विद्यैव ब्रह्मविद्यात्मका मनश्चिदादय एवैते विद्यामयक्रत्वंगभूता इत्यर्थः। तासां मनोवृत्तीनां सांपादिकाग्नित्वेन विद्यामयत्वे सिद्धेऽपि 'ते हैते विद्याचित एवे'ति निर्द्धारणं हि विद्यामयक्रत्वंगत्वख्यापनाय। दृश्यते च विद्यामयः क्रतुः अत्रैव 'ते मनसैवाचीयंत मनसैषु ग्रहा अगृह्यंत मनसा स्तुवन् मनसा शंसन् यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयं क्रियते' इति, अतस्तेषां विद्यामयक्रत्वंगत्वमेव।

---

१ पुरुषस्यायुष्ट्वेन कल्पशतवर्षाणामहोरात्राणि षट्त्रिंशत्सहस्राणि तैरवच्छिन्ना मनोवृत्तयोऽपि षट्त्रिंशत्सहस्राणि भवंति; एकस्मिन्नहोरात्रे उत्पन्नसर्वमनोवृत्तिष्वहोरात्रगतैकत्वारोपात्त एव तावत्संख्याका मनोवृत्तयोऽनुमीयंते। २ अग्नयः। ३ सांपादिकानां मनश्चिदादीनाम्। ४ सांपादिकमनश्चिदाद्यग्निषु। ५ क्रियामयक्रत्वंगत्वम्। ६ तेऽग्नयो मनसैवाचीयंत आधानकर्मणा संपादिताः अचीयंत इति चिताः एष्वग्निषु ग्रहाः पात्राण्यगृह्यंत गृहीताः अस्तुवन् स्तोत्रं कृतवंतः उद्‌गातारः अशंसन् शंसनं कृतवंतो होतारः। किं बहुना यत्किंच कर्म आरादुपकारकं यत्किंच यज्ञियं यज्ञनिष्पत्त्यर्थं सन्निपत्योपकारकं च क्रियते तद्विदुषो मनसैवाक्रियत कृतमिति।

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥

'ते हैते विद्याचित एवे'ति श्रुतिः, 'विद्यया हैवैत एवंविदश्चिता भवंती'ति वाक्यं; 'तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वंत्यपि स्वपत' इति लिंगं च—एवं श्रुत्यादित्रिभिरवगतस्य विद्यामयक्रत्वन्वयस्य बलीयस्त्वात् दुर्बलेन क्रियामयक्रतुप्रकरणेन तस्य न बाधः। ननु 'मनसैषु ग्रहा अगृह्यंते'त्यादिषु विध्यर्थलकारबोधकप्रत्ययाश्रवणात् क्रियामयात्क्रतोरन्यो विद्यामयः क्रतुर्नास्तीत्यत आह—

## अनुबंधादिभ्यः प्रज्ञांतरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ४८ ॥

'ग्रहा अगृह्यंते'त्यादिक्रत्वनुबद्धैर्ग्रहणस्तवनादिभिः 'ते हैते विद्याचित एवेति श्रुत्यादिभिश्च विद्यामयक्रतुविधिः कल्पनीयः। प्रज्ञांतराणां बुद्धिगम्यानामन्यासां दहरादिविद्यानां क्रियामयात्क्रतोः पृथक्त्ववदस्यापि विद्यामयक्रतोः पृथक्त्वमवगम्यते; कुतः, अनुबंधादिभ्यः-'ते मनसैवाधीयंत मनसाचीयंते'त्यादिश्रुतिभिर्मनःप्रभृतिवृत्तिषु कर्मांगानामनुबंधात्संपादनात् आदिशब्दग्राह्यतत्प्रतिपादकश्रुत्यादिभ्यश्च दृष्टश्चानुवादस्वरूपे कल्प्यमानो विधिः,यदेव विद्यया करोतीत्यादौ,तदुक्तं वचनानि त्वपूर्वत्वादिति। अतो मनश्चिदादीनां सांपादिकाग्नीनां विद्यामयक्रत्वंगत्वमेव युक्तम्; आशंक्य परिहरति—

## न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥ ४९ ॥

'तेषामेकैक एव तावान्यावानसावि'त्यश्रेष्टकचिताग्निचितफलसामान्येन मनश्चिदादीनामतिदेशात् इष्टकचिताग्नेः स्वक्रतुद्वारेण यत्फलं तदेषां विद्यामयक्रतुप्रवेशेन फलमवगम्यते इति चेत् एतावता न पुनरिष्टकचिताग्नितुल्यदेशत्वमेषाम्। कुतः,सामान्यादप्युपलब्धेः—केनापि सामान्यगुणेनातिदेशोपलब्धेः। तथाहि 'स एष एव मृत्युर्य एष एतस्मिन्मंडले पुरुष' इत्यत्र संहर्तृत्वरूपसामान्यमात्रादतिदेशः। नहि तत्र सूर्यमंडलस्थपुरुषस्य मृत्युवल्लोकापत्तिस्तद्देशप्राप्तिः, किंतु तस्मिन् मृत्युवत्सर्वसंहर्तृत्वमेवातिदिश्यते; अतः केनचित्सामान्येनातिदेशे सति न विरोधः। हेत्वंतरमाह—

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबंधः ॥ ५० ॥

'परेण च अयं वाव लोक एषोऽग्निचितस्तस्यापः परिश्रिता' इत्यादिपरब्राह्मणवाक्येन अस्य मनश्चिदादिवाचिनः शब्दस्य शब्दवृंदस्य ताद्विध्यं—विद्यामयप्रतिपादकत्वमवगम्यते; तेन परवाक्येन पृथक्फला विद्या च, एवं चेत्तर्हि कथं कर्मप्रकरणे

---

१ विद्यामयक्रतोः। २ वचनांतरेण प्राप्तस्य पुनर्वचनमनुवादः। ३ सूर्यमंडलस्थपुरुषे।

मनश्चिदादय उक्तास्तत्राह–क्रियाप्रकरणे मनश्चिदादीनामनुबंधः प्रतिपादनं तु मनश्चिदाद्यग्निविद्यायां संपादनीयानां कर्मांगानां भूयस्त्वात्। तत एतेषां विद्यामयक्रत्वंगत्वम्।

[1]एक आत्मनः शरीरे भावात् ॥ ५१ ॥

इह तु पूर्वोक्तब्रह्मस्वरूपानुसंधानं जीवस्यैकात्मतया सर्वासु परविद्यासु युज्यते पृथक्तया वेति संशयः। तत्रैके मन्यंते शरीरे भावात्–वर्त्तमानत्वादुपासितुरात्मनः कर्तृत्वभोक्तृत्वापत्तिरवगम्यते। तदात्मतयावस्थितस्य परमात्मनस्तु कर्तृत्वभोक्तृत्वादिलक्षणरूपानुसंधानं न युज्यते; अतो जीवस्य कर्तृत्वादिपरिहाराय सर्वासु परविद्यास्वेकात्मतया परब्रह्मानुसंधानमिति प्राप्ते सिद्धांत उच्यते—

व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥ ५२ ॥

नैवं यत्कर्तृरूपापन्नस्योपासितुरेकात्मतया परमात्मानुसंधेयः, किंतु कर्तृत्वादिपरिहाणायाप्युपास्यतया भिन्न एवानुसंधेयः। किंच सांसारिकस्वभावान्मुक्तेऽपहतपाप्मत्वादिप्राप्त्यर्हे शुद्धनिजात्मनि तु यो व्यतिरेकस्ततः पृथक्तया स्थितोऽपहतपाप्मत्वादिपरमात्मगुणकलापः सोऽनुसंधेयः। कुतः, तद्भावभावित्वात्–परमात्मपार्षदत्वोपलब्ध्या परमात्मभावभावित्वात् नतूपलब्धिवत्; यथा जीवात्मनः कृष्णोपासनेन स्वविषया स्वस्वरूपोलब्धिस्तथाऽपहतपाप्मत्वादिगुणोपलब्धिः परमात्मोपासनेन स्वविषया न भवति, किंतु तदुपासनेनैव परमात्मविषया तद्गुणलब्धिः स्यात्। ननु जीवस्य परमात्मोपासनेनापहतपाप्मत्वाद्यष्टगुणोपलब्धिकथने विजरविमृत्युत्वयोर्वस्तुतया जीवस्वरूपे विद्यमानत्वात्कथं पुनः परमात्मतस्तत्प्रादुर्भाव उक्त इति चेत्तत्रोत्तरम्–अनाद्यविद्यासंबंधबलेन जीवस्यानादिजन्ममरणादिप्रवाहप्राप्तौ जरामरणादिधर्मोपलब्धेर्नित्यविद्यमानत्वाद्वस्तुतस्तु तौ परमात्मधर्मावेव भवतो ननु जीवधर्मौ, अतो न तत्र शंकावकाश इति, अत उपासकेन सर्वपरविद्यासु अपहतपाप्मत्वादिगुणानुसंधानेन सर्वात्मा परमात्मानुसंधेयः।

[4]अंगावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥

क्वासुचिच्छाखासु श्रूयमाणा उपासनांगावबद्धाः प्रणवाभ्यासतप्तचक्रादिश्रुतयः सर्वासूपासनास्वंगत्वेनोपसंहार्या नवेति संशयः। तथाहि 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति छांदोग्ये उद्गीथविद्यायां प्रणवाभ्यासः श्रूयते, अथर्वणि 'देवा ये विष्णुना बाहुना

---

१ शरीरेभावाधिकरणम्। २ तदंतर्यामितया। ३ जीवस्यापहतपाप्मत्वाद्यष्टगुणोपलब्धिकथने। ४ अंगावबद्धाधिकरणम्।

सुदर्शनेन प्रतप्ता लोकसृष्टिं वितन्वंति' इति 'एभिर्वयमुरुक्रमस्य चिह्नैरंकिता लोके सुभगा भवाम' इति च 'अग्निना वै होतारश्चक्रं पांचजन्यं सुतप्तं द्विभुजाभ्यां धारयेदि'ति च ।

'धृतोर्ध्वपुंड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मंत्रेण सदा हृदि स्थितं परात्परं याति महान्महान्तम् ॥' इति;
धृतोर्ध्वपुंड्रः परमेशितारं नारायणं सांख्ययोगादिगम्यम् ।
स्मृत्वा विमुच्येत नरः समस्तैः संसारपाशैरभियाति विष्णुम्' ॥ इति;

वासुदेवोपनिषदि च 'ॐ नमस्कृत्य भगवान्नारदः सर्वेश्वरं वासुदेवं पप्रच्छे'त्यादिनोर्ध्वपुंड्रधारणविधिरुक्तः। शतपथब्राह्मणे च 'स होवाच याज्ञवल्क्यस्तत्पुमानात्महिताय हरिं भजेत्,सुश्लोकमौलेर्वर्माण्यग्निना संदधत' इत्यादिषु तप्तमुद्रोर्ध्वपुंड्रादिधारणविधिः श्रूयते,तेन च नारायणलोकप्राप्तिफलश्रवणात् तस्य परविद्यांगत्वम्; एवं यासु विद्यांगावबद्धासु शाखासु श्रुताः याः प्रणवाभ्यासोर्ध्वपुंड्रतप्तचक्रादिधृतय एतासु शाखासु विहितेषूपासनेषूपासकैस्ताः कार्याः संनिधानान्न सर्वत्रेति प्राप्ते ब्रूमः—प्रणवाभ्यासोर्ध्वपुंड्रतप्तचक्रादिधृतयः यासु शाखासु श्रुतास्तास्वेवेति न नियमः, किंतु प्रतिवेदं सर्वासु शाखासु सर्वैरपि परब्रह्मोपासकैस्ताः कार्याः । एवमेकत्र सन्निधेर्नियमो नास्तीति निश्चीयते ।

## [3]मंत्रादिवद्वा विरोधः ॥५४॥

यथा क्रत्वंगभूतानां मंत्राणां एकैकशाखागतानामपि सर्वशाखागतानामपि सर्वशाखागतक्रत्वन्वये विरोधो नास्ति तथात्रापि ।

## [5]भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५५ ॥

इह वैश्वानरविद्यायां उपासनमंशेन समस्तेन वेति संदिह्यते । तथाहि तत्र द्युलोकसूर्यवाय्वाकाशोदकपृथिव्यो वैश्वानरस्य मूर्द्धचक्षुःप्राणमध्यशरीरमूत्रस्थानपादरूपा ध्यातव्या इति निरूपितम्, पृथक् पृथग् द्युप्रभृतिपर्यायवाचकैर्वाक्यैस्तेषामंगानामपि प्रत्येकमुपासनं हि 'अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवात्मानं

---

१ प्रणवाभ्यासतप्तमुद्रोर्ध्वपुंड्रादिधारणविधेः । २ शाखासु । ३ यथा तंदुलपेषणार्थमश्मादानमंत्रः कुरुरसीत्येकत्राम्नातः शाखांतरेऽपि प्राप्नोति यथा वा प्रयाजा एकत्राम्नाताः शाखांतरेऽपि प्राप्नुवंति तद्वदत्राप्यविरोधः । ४ प्रणवाभ्यासोर्ध्वपुंड्रतप्तचक्रादिधृतावपि । ५ भूमज्यायस्त्वाधिकरणम् । ६ वैश्वानरविद्यायाम् ।

वैश्वानरमुपास्त' इति वाक्येऽभिहितम्। एवं सत्युपास्तिशब्दस्य फलवचनस्य च प्रत्येकमुपलभ्यमानत्वादंशोपासनमुचितमिति पूर्वः पक्षः। सिद्धांते तु समस्तोपासनमेव मुख्यमित्युच्यते; तथाहि तत्र त्रैलोक्यशरीरतयोपास्यस्य वैश्वानरात्मनः स्वर्लोकादिपृथिव्यंतानां मूर्द्धादिपादांतावयवत्वमभिधाय 'यस्त्वेतमेवंप्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती'ति सर्वत्र व्यापकत्वेन कामचारत्वेन चान्नादनाद्ब्रह्मभावात्मकं फलमभिहितम्। तत्र द्युलोकादिरूपमूर्द्धाद्यवयवोपासनात् भूम्नः समस्तोपासनस्य ज्यायस्त्वं प्रामाणिकत्वेन श्रेष्ठत्वम्। तत्रैव ब्रह्मानुभवफलाभिधानात् तत्रावयवोपासनं फलकीर्त्तनं च क्रतुवद्विवक्षितम्;'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात' इत्युक्त्वा 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाती'त्यादिनोच्यमानमष्टाकपालादिकं तत्फलं च यथा विवक्षितं तद्वत्;तथाहि समस्तोपासनस्यैव ज्यैष्ठ्यं दर्शयति श्रुतिः तत्र 'औपमन्यव कं त्वमात्मानमुपास्से प्राचीनयोग्यकं त्वमात्मानमुपास्स' इत्यादिप्रश्नानंतरं 'दिवमेव भगवो राजन्नादित्यमेव भगवो राजन्नि'त्यादिप्रतिवचनैरवयवोपासनेऽभिहिते 'अत्यन्नं पश्यति प्रियमि'त्यादिना तत्र तत्र फलनिर्देशं कृत्वापि 'मूर्द्धा त्वेष आत्मन' इति होवाच मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' इत्यादिराजवचनैरनर्थं ब्रवीति, अतस्तस्य समस्तोपासनमेव मुख्यम्।

## [10]नानाशब्दादिभेदात् ॥ ५६ ॥

परविद्यानामेकीकरणेन परब्रह्मोपासनमुत भेदेनेति संशये नानाशाखाश्रुतानामपि विद्यानां वेद्यस्य ब्रह्मण एकत्वादेकीकरणेनोपासनमिति प्राप्ते उच्यते—सद्विद्यादहरविद्योपकोशलविद्याशांडिल्यविद्यावैश्वानरविद्यानंदमयविद्यादीनामनेकश्रुतिबोध्यानां विद्यानां एकीकृत्यानुष्ठानायोगात् स्वरूपैक्येऽपि परब्रह्मणः गुणभेदाद्विद्याभेदः। यत्र गुणभेदाद्विद्याभेदो नास्ति तत्र स्थानादिभेदाद्विद्याभेदः, राजादिगु-

१ वैश्वानरविद्यायाम्। २ वैश्वानरविद्यायाम्। ३ समस्तोपासने एव। ४ वैश्वानरविद्यायाम्। ५ वैश्वानरविद्यायाम्। ६ प्रत्यवयवोपासने। ७ एष तु द्युलोकाख्य आत्मनो वैश्वानरस्य मूर्द्धा न समस्तो वैश्वानरोऽतोऽस्य समस्तवैश्वानरबुद्ध्योपासनान्मूर्द्धा ते तव विपरीतग्राहिणो व्यपतिष्यद्विपतितमभविष्यद्यदिमां नागमिष्यो नागतोऽभविष्यः,तस्मात्साध्वकार्षीर्यन्मामागतोसीत्यभिप्रायः। ८ श्रुतिरिति संबंधः। ९ त्रैलोक्यशरीरतयोपास्यस्य वैश्वानरात्मनः। १० शब्दादिभेदाधिकरणम्। ११ विद्यायाम्। १२ विद्यायाम्। १३ इंद्राय राज्ञे पुरोडाशमिंद्रायाधिराजायेंद्राय स्वराज्ञ इति पुरोडाशत्रयवत्यामिष्टौ राजाधिराजस्वराजगुणभेदेन तद्विशिष्टदेवताभेदात् पुरोडाशानां प्रदानस्य प्रक्षेपस्य भेदस्तद्वदित्यर्थः।

णभेदादिन्द्रस्य पुरोडाशदानभेदवत्, गार्हपत्यस्थानादिभेदादग्नेरुपचारभेदवच्च विद्याभेद उपपन्न इति निरूपितम्; अतस्तस्यैकस्योपासने नानाप्रकारा विद्या भवंति शब्दाद्यनुबंधभेदादिति निर्णयः। पुनरधिकरणारंभोऽयं ज्ञानस्याविधेयतानिरासार्थः।

## [3]विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

एवं नानाप्रकाराःपरविद्या निरूपिताः। तामुपासकस्य विकल्पः समुच्चयो वेति संशयः। किं प्राप्नोति दहरविद्यासद्विद्यादीनां समुच्चयेनानुष्ठानमुचितं कर्मभूयस्त्वेन फलभूयस्त्वसंभवात्; विकल्पे तु किंचिन्नियामकं नास्ति, अतो न विकल्पेनानुष्ठानमिति प्राप्ते ब्रूमः—एकस्मिन्नुपासके सर्वासां परविद्यानां विकल्प एव। कुतः अविशिष्टफलत्वात्—परब्रह्मणि साक्षात्कारे सति निरतिशयतदानंदानुभवफलस्याविशिष्टत्वात् येनोपासनेन स्वप्रयोजनं सिद्ध्यति तदेव विधेयं किमन्यैरप्रयोजनैः। तदेकं स्वप्रयोजनसाधकमुपासनं परित्यज्यान्यत्र गमने चित्तविक्षेपः स्यात् अतो विकल्प एव।

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥

वा शब्दः पूर्वाधिकरणोक्तं विकल्पं व्यावर्त्तयति। काम्यास्तु ब्रह्मप्राप्तीतरफलाविद्यास्तु उपासकैः यथाकामं यथेष्टं समुच्चीयेरन्, न पूर्वाधिकरणन्यायवद्विकल्प्येरन्। कुतः पूर्वहेत्वभावात् पूर्वोक्तब्रह्मप्राप्तिरूपफलानुसंधानाभावात्; अतो ब्रह्मप्राप्तीतरफलेच्छूनां जनानां तासां विद्यानां समुच्चय एव युक्त इति निर्णीयते।

## [8]अंगेषु यथाश्रयभावः ॥ ५९ ॥

इह पुनरुद्गीथादिक्रत्वंगावबद्धानामुपासनानां क्रत्वंगभावः स्वातंत्र्यं वेति संशये पूर्वपक्षन्यायः प्रवर्त्तते—उद्गीथादिषु क्रत्वंगेषु 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यादिश्रु-

---

१ यदि नानाशाखाश्रुतानां परविधानामेकीकृत्यानुष्ठानायोगात्परमश्रेयोऽर्थीया काचिद्विद्योपादीयते तदा तु तत्तद्विद्यास्वरूपस्य तत्त्वतो ज्ञानमंतरा सम्यगुपासने प्रवृत्त्यनर्हत्वात्परममोक्षभावः प्रसज्यते; एवं च सति तत्सिद्ध्यर्थं तथा विधातुमेकेनाशक्यम्; एवमुपगतं ब्रह्म जिज्ञासाया अभावं निरासयितुं पुनरयमारंभः। २ वेद उपासीत स क्रतुं संकल्पं कुर्वीतेत्यादिशब्दभेदात् आदिशब्देनोपास्यगुणभेदाच्चेत्यर्थः। यथा यागदानहोमानां कर्मणां यजेत दद्याज्जुहुयादिति शब्दभेदाद्भेदस्तद्वदिति द्रष्टव्यम्। ३ विकल्पाधिकरणम्। ४ उपासनम्। ५ उपासनांतरैः। ६ उपासनांतरे। ७ पूर्वहेतोरविशिष्टफलत्वस्य विकल्पनियमप्रयोजकस्यात्राभावादित्यर्थः। ८ यथाश्रयभावाधिकरणम्।

तानामुपासनानां यथाश्रयभावः—उद्गीथाद्यंगवत् क्रत्वंगभाव एव, 'गोदोहनेन पशुकामस्य प्रणयेदि'त्यत्र फलश्रवणं यथा तथा स्ववाक्ये फलाश्रवणात् ।

## शिष्टेश्च ॥ ६० ॥

शिष्टिः शासनं विधिरित्यर्थः । उद्गीथमुपासीतेति विधेर्हेतोः 'यदेव विद्यया करोति तदेव वीर्यवत्तरमि'त्यत्र कर्मणो वीर्यवत्तरत्वं प्रति विद्यायाः साधनत्वाच्च तेषां क्रत्वंगभाव एव ।

## समाहारात् ॥ ६१ ॥

क्रतावुद्गात्रा ऋग्वेदोदितप्रणवस्य सामवेदोदितोद्गीथस्य चैक्येनोच्चारणे कृते सति तत्फलं श्रुतिराह 'होतृपदनाद्धैवापि दुरुद्गीथमनुसमाहरती'ति। उद्गाता प्रणवोद्गीथयोरैक्यज्ञानमाहात्म्यात्स्वकृतं दुरुद्गीथमपि यथोचितस्वरादिग्रहणहीनत्वाद्दूषितमप्युद्गानं होतृपदनात्—होतृपदनशब्दोपलक्षिताद्धोतृकृतशंसनाख्यकर्मरूपात् सहायादनुसमाहरत्येव ह प्रतिसमादधात्येव खलु कुतः—समाहारात्—ऋग्वेदोक्तस्य होतृकर्मसंबंधोंकारस्य स्ववेदोक्तोद्गीथस्य चैक्येन चिंतितत्वादित्यर्थः । एवं च सति वेदद्वयोदितप्रणवोद्गीथयोरैक्यज्ञानस्यैतादृशं फलं ब्रुवद्वाक्यं सर्ववेदोदितानामप्यंगाश्रितोपासनानां समुच्चयं द्योतयति । सर्वोपासनेषु वेदांतरोक्तोपासनस्य वेदांतरोक्तोद्गीथादिना संबंधस्य समानत्वाच्च तेषां क्रत्वंगभावः ।

## गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

तेनेयं त्रयीविद्या वर्तते 'ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायती'ति गुणस्य गुणभूतप्रणवस्य साधारण्यश्रुतेः सर्वकर्मणि संचरतः प्रणवस्य गुणत्वेनोपासनस्य संचारादप्यंगत्वेनोपासनोपादाननियमोऽवगम्यते। तेनेति हि प्रकृतपरामर्शी शब्दः प्रकृतं सोपासनमेव प्रणवं परामृशति, अत उद्गीथाद्युपासनानां स्वातंत्र्यं न संभवतीति प्राप्ते सिद्धांत उच्यते—

## न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

यथा क्रत्वंगानामुद्गीथादीनां क्रत्वंगभावः श्रूयते तथा तेषामुद्गीथाद्यंगाश्रितानामुपासनानां यः सहभावः क्रत्वंगभावस्तस्याश्रुतेरश्रवणात् एषां न तद्भावः स्यादेव। 'यदेव विद्यया करोति तदेव वीर्यवत्तरमि'ति फलांतरसाधनतयावगताना-

१ उद्गीथाद्यंगाश्रितोपासनानाम् । २ क्रत्वंगभावः ।

मुपासनानामंगभावाभावात् 'उद्गीथमुपासीते'त्युद्गीथाश्रयतामात्रप्रतिपादनात् न तेषामुद्गीथाद्यंगावबद्धानां क्रत्वंगभावः किंतु स्वातंत्र्यमेव ।

**दर्शनाच्च ॥ ६४ ॥**

'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षती'ति व्याहृतिहोमप्रायश्चित्ताभिज्ञस्य ब्रह्मणो वेदनेन सर्वरक्षणं वदंती श्रुतिरुद्गातृप्रभृतिवेदनस्यानियमेन क्रत्वंगतां दर्शयति, अतोऽपि समाहारादिहेतुद्वयोक्तं क्रत्वंगत्वमयुक्तमेव ।

इति श्रीशुद्धैकान्तधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥ ३ ॥

---

## तृतीयाध्याये चतुर्थपादः।

**[2]पुरुषार्थोऽतःशब्दादिति बादरायणः ॥ १ ॥**

पूर्वत्र परविद्याप्रकारः प्रतिपादितः । अत्र तु विद्यांगभूतानाश्रमधर्मादीन् वर्णयितुं विद्यात एव पुरुपार्थ इति प्रकाशयति–अतो विद्यात एव पुरुपार्थः । 'ब्रह्मविदाप्नोति परं' 'वेदाहमेतं पुरुपं महांतमादित्यवर्णं तमसः परस्तात्' 'तमेव विद्वानमृत इह भवति नान्यः पंथा विद्यतेऽयनाये'ति,

'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन'॥

इत्यादिशब्दादिति भगवान्बादरायणो मन्यते, तत्संभवति नवेति संदेहे[4] सति पूर्वः पक्षः प्रवर्त्तते–

**शेषत्वात्पुरुपार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥**

न विद्यातः पुरुपार्थः, कुतः कर्मसु क्रियमाणेपु सत्स्वपि तत्कर्त्तुरेवात्मनस्तत्त्वमसीत्यादिसामानाधिकरण्येन ब्रह्मत्वावगमात् तद्वेदनस्य कर्त्तृसंस्कारतया कर्मशेपत्वात् ज्ञाने जातेऽपि कर्मणः करणीयतयावशिष्टत्वात् तत्रै पुरुपार्थवादः, फलश्रुतिस्तु

१ ऋग्वेदादिविहितांगलोपे व्याहृतिहोमप्रायश्चित्ताभिज्ञत्वं ब्रह्मण एवंवित्त्वं सर्वोपासनानां समुच्चये हि विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेपामृत्विजां न स्यात् । २ अधिकरणानि ३२ सूत्राणि ६४ । ३ पुरुपार्थाधिकरणम् । ४ संदेहबीजं चोभयश्रुतिदर्शनम् । ५ ब्रह्मवेदनस्य । ६ कर्त्तृशुद्धिहेतुतया । ७ ब्रह्मवेदने ।

अन्येषु द्रव्यसंस्कारकर्मसु यथा तथार्थवादमात्रम् । तदुक्तं द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति, अस्यार्थः–पर्णमयी जुहूर्द्रव्यं यजमानस्यांजनादिः संस्कारश्च प्रयाजादिरूपं कर्म च तेषु नरस्य निर्दोषकीर्त्तिश्रवणादिफलश्रुतिः अर्थवादः–कथनमात्रं स्यात्कुतः परार्थत्वात्–तेषुं स्वर्गादिप्राप्तिरूपफलांतरार्थत्वादिति, अतो न विद्यातः पुरुषार्थ इति जैमिनिराचार्यो मन्यते ।

## आचारदर्शनात् ॥ ३ ॥

तथाचारोऽपि कर्मप्रधानो दृश्यते श्रुतिस्मृतिषु–'अश्वपतिः केकयो ब्रह्मवित् यक्ष्यमाणो ह वै भगवंतोऽहमस्मि इत्याह; जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेज' इति, 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इत्येवं केकयजनकादीनां परब्रह्मविदामपि कर्मप्राधान्येनाचारोऽवगम्यते, अतोऽपि विद्या कर्मांगमेव ।

## तच्छ्रुतेः ॥ ४ ॥

'यदेव विद्यया करोती'ति श्रुत्यैव विद्यायाः कर्मसु विनियोगादपि कर्मांगत्वम् । यत्करोति तद्विद्यया परब्रह्मज्ञानेनेति श्रुतेरर्थः ।

## समन्वारंभणात् ॥ ५ ॥

'तं विद्याकर्मणी समन्वारभेते' इति विद्याकर्मणोरेकस्मिन्पुरुषे साहित्यं दृश्यते, अतश्च तदंगत्वमेव विद्यायाः ।

## तद्वतो विधानात् ॥ ६ ॥

'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुंबे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधते' इत्यादावर्थज्ञानपर्यंताध्ययनवतः कर्म विधीयते, अतश्च ज्ञानस्य कर्मांगत्वम् ।

---

१ द्रव्यसंस्कारकर्मसु । २ विदेहानामधिपतिर्जनको नाम राजा बहुदक्षिणसंज्ञेनाश्वमेधेन वा बहुदक्षिणायुक्तेनेजे–यागं कृतवानित्यर्थः। ३ तं परलोकं व्रजंतं विद्याकर्मणी समनुगच्छत इति श्रुत्यर्थः । ४ आचार्यस्य कुलं गृहं उपनयनं कृत्वा तदनंतरं गुरोः शुश्रूषणरूपकर्म विधाय अतिशेषेण शिष्टेन कालेन यथाविधानं पवित्रपाणित्वप्राङ्मुखत्वादिविधानमतिक्रम्य वेदमधीत्यानंतरं अभिसमावृत्य व्रतविसर्गं कृत्वा कुटुंबे गार्हस्थ्ये स्थितः शुचौ देशे स्वाध्यायाध्ययनं कुर्वन् कर्मांतराणि च विहितानि यथाशक्ति कुर्वाणो ब्रह्मलोकमभिसंपद्यते इत्यर्थः ।

## नियमाच्च ॥ ७ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा' इत्यात्मपरमात्मविदां जीवनस्य कर्मसु नियोगो नियम्यते, अतश्च विद्या कर्मांगं, तस्मान्न विद्यातः पुरुषार्थ इति प्राप्ते सिद्धांत उच्यते—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तु शब्दः पूर्वपक्षनिरासार्थः। न विद्यायाः कर्मांगत्वम् अपि तु विद्ययैव पुरुषार्थ इति भगवतो बादरायणस्य मतमेवोचितम्; कुतः अधिकोपदेशात्—कर्मकर्तुर्जीवात्मवृंदादधिकस्य स्वरूपस्वभावगुणविभूतिभिरत्युत्कृष्टस्य परमात्मनो मोक्षार्थं वेद्यतयोपदेशात्। तथाहि 'सोऽकामयत बहु स्यां प्रजायेयेति' 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप' इति 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतमि'ति 'आत्मैवेदमग्र आसीत्पुरुषविध' इति 'य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प' इत्यादिवाक्येषु वेद्यस्य नारायणस्याधिक्यं दृश्यते, अतो न विद्यायाः कर्मांगत्वम्। यदुक्तं कर्मप्रधानाचारदर्शनं तत्राह—

## [2]तुल्यं तु दर्शनम् ॥ ९ ॥

विद्यायाः प्राधान्येऽपि ब्रह्मविदां तया तुल्यं कर्माचारदर्शनं न केवलं कर्मण एवाचारदर्शनम्। तथाहि 'एतद्ध स्म वैतद्विद्वांस आहुः ऋषयः कापेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे किं प्रजया करिष्याम' इत्यादौ ब्रह्मविदां कर्मत्यागा हि दृश्यते। फलाभिसंधानरहितस्य कर्मणो विद्यांगत्वेनानुष्ठानं त्यागस्तु फलाभिसंधानयुक्तस्येति विरोधाभावात् कर्मण एव विद्यांगत्वमिति विद्यायाः प्राधान्यमेव। यदेव विद्ययेति यदुक्तं तत्राह—

## असार्वत्रिकी ॥ १० ॥

'यदेव विद्यया करोती'त्यत्र न सार्वत्रिकी विद्योच्यते; यदेव विद्ययेति प्रसिद्धव-

---

१ इह देहे सः शतं समाः—शतं संवत्सरान् जीवितुमिच्छेदिति यत्तत्कर्माणि कुर्वन्नेवेति नियमविधिः। २ यद्यपि विद्यया सह कर्माचारस्य दर्शनं तुल्यं समानमाम्नातमस्ति तथापि तस्या एव मुक्तिफलजनकत्वे प्राधान्यम्। तुरवधारणे। ३ कथं तर्हि ब्रह्मविदां कर्मानुष्ठानं श्रुत्यादिषु दृश्यत इति चेत्तत्राह।

न्निर्देशात्। 'यदेव विद्यया करोति तदेव वीर्यवत्तरमि'ति प्रकृतोद्गीथविद्यायास्तद्युक्तस्य कर्मणो वीर्यवत्तरत्वसाधनभावोऽभिधीयते इति न विद्या कर्मांगम्। यदुक्तं तं विद्याकर्मणी इति तत्राह—

## विभागः शतवत् ॥ ११ ॥

'तं विद्याकर्मणी समन्वारभेते' इत्यत्र विद्याकर्मणोर्भिन्नफलत्वेन समारंभः श्रूयते। तथाहि 'विद्या च स्वस्मै फलायान्वेति कर्म च स्वस्मै फलायान्वेति विभागः यथा क्षेत्ररत्नविक्रयिणं शतमि'त्यत्र क्षेत्रार्थं शतार्द्धं रत्नार्थं शतार्द्धमिति विभागः।

## अध्ययनमात्रवतः ॥ १२ ॥

'वेदमधीत्ये'त्यध्ययनमात्रवत एककर्मविधानात् न विद्या कर्मांगम्। अध्ययनविधिर्ह्यक्षरग्रहणमात्रे पर्यवस्यति, अर्थावबोधपर्यंतत्वे चापि पर्यवस्यतिः उपासीतेति विहिता या विद्या अर्थज्ञानादर्थांतरभूता सा च ज्ञानाभ्यासरूपा, अतोऽस्या न कापि कर्मांगत्वम्।

## नाविशेषात् ॥ १३ ॥

कुर्वन्नेवेह कर्माणीत्यत्र स्वतंत्रे कर्मणि विद्वदायुष एव निनियोगो नास्ति, कुतः अविशेषात्तद्वाक्ये विशेषाभावात् 'ईशावास्यमिदं सर्वमि'ति विद्याप्रकरणाच्च विद्यांगभूतमेतत् कर्मेति विज्ञायते, अतो न विद्यायाः कर्मांगत्वम्।

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

वाशब्दोऽवधारणार्थपरः। 'ईशावास्यमिदं सर्वमि'ति विद्याप्रकरणाद्विद्यास्तुतये कर्मणोऽनुमतिरनुवृत्तिरेव; विद्यामाहात्म्यात्सर्वदा कर्माणि कुर्वन्नपि तैर्न लिप्यते इति हि विद्या प्रशंसिता। 'त्वयि न कर्म लिप्यते नरे'इति वाक्यविशेषात्, अतश्च विद्याया एव प्राधान्यम्।

## कामकारेण चैके ॥ १५ ॥

'किं प्रजया करिष्याम' इत्यादिना कामकारेण स्वेच्छया विदुषो गार्हस्थ्यत्यागमधीयत एके, अतोऽपि विद्या प्रधानभूता लक्ष्यते।

---

१ शतमन्वेतीत्युक्तौ क्षेत्रमूल्यं पंचाशत् रत्नमूल्यं च पंचाशदिति विभागस्तथात्रापि। २ कुर्वन्नेवेह कर्माणीतिवाक्ये। ३ विद्वानितिभेदवचनस्याभावात्। ४ कुर्वन्नेवेति वाक्यस्य विद्वदायुर्विषयत्वेऽप्यविरोधो विद्यास्तुत्यर्थत्वादित्याह। ५ अनुज्ञा। ६ शाखिनः।

## उपमर्दं च ॥ १६ ॥

विद्यया सर्वकर्मोपमर्दं चाधीयत एके 'क्षीयते चास्य कर्माणि तस्मिन् दृष्टे परावर' इति, अतो न कर्मप्राधान्यम् ।

## ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतःसु संन्यासाश्रमिषु ब्रह्मविद्यादर्शनात् तेष्वग्निहोत्राद्यसंभवाच्च न विद्या कर्मांगम् । तथाहि 'त्रयो धर्मस्कंधा' इत्यादि वैदिके शब्दे आश्रमत्रयस्यैव कर्मानुष्ठानं दृश्यते नतु चतुर्थाश्रमस्य, अतो विद्यैव प्रधानभूता पुरुषार्थहेतुः । तस्यास्त्वंगतया फलाभिसंधिरहितस्य विहितकर्मणोऽनुष्ठत्तिरिति सिद्धम् ।

## परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ १८ ॥

पूर्वत्र 'त्रयो धर्मस्कंधा' इति त्रयाणामेवाश्रमाणां धर्माधारत्वमुक्तम्; अत एवात्र चतुर्थाश्रमसद्भावे संदेहे सति पूर्वपक्षः प्रवर्त्तते—'त्रयो धर्मस्कंधा' इत्यादौ चतुर्थाश्रमाचोदनात् 'एतमेव प्रव्राजिनो लोकमिच्छंतः प्रव्रजंती'त्यादिचतुर्थाश्रमवचनं तु परामर्शम्—उपासनस्तुत्यर्थवादमेव जैमिनिर्मन्यते। किंच अपवदति हि 'वीरहा वा एष देवानां योऽग्निमुद्वासयत' इति श्रुतिः चतुर्थाश्रमं निषेधति, अतोऽग्निहोत्रपरित्यागे महान्दोष इति अग्निहोत्रपरित्यागेनाश्रमांतरं नास्तीति प्राप्ते सिद्धांतं ब्रूमः—

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

गृहस्थाश्रमादिवदाश्रमांतरमप्यनुष्ठेयमिति भगवतो बादरायणस्य मतम् । 'त्रयो धर्मस्कंधा' इत्यादेः सर्वाश्रमसाम्यश्रुतेः अग्न्युद्वासनदोषो गृहस्थविषय एव, अतश्चतुर्थाश्रमधर्मसद्भावः ।

## विधिर्वा धारणवत् ॥ २० ॥

वाशब्दोऽवधारणार्थपरः । धारणवत्—'अधस्तात्समिधं धारयन्ननु द्रवेदुपरि हि देवेभ्यो धारयती'त्यत्र वर्त्तमानप्रयोगेऽप्युपरिधारणस्याप्राप्तत्वाद्यथा विधिः कल्पितः तद्वत्प्रव्रजंतीत्यत्रापि विधिरेव; अथवा जाबालश्रुतौ प्रत्यक्षो विधिरप्यस्ति 'ब्रह्मचर्यं समाप्य गृही भवेत् गृही वा वनी भूत्वा प्रव्रजेदि'ति नात्र क्रमनियमः। 'उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति श्रुतेः जन्मांतरसुकृतपरिपाकविशुद्धांतःकरणस्य ब्रह्मचर्यादेव पारिव्राज्यं भवति । 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्,

१ समानत्वश्रवणात् ।

अनपाकृत्य मोक्षं तु भजमानो व्रजत्यधः' इत्यादिनिषेधस्त्वविरक्तविषयः। 'वीरहा वा एष देवानां योऽग्निमुद्वासयेत्' इत्यग्न्युद्वासननिषेधात् ब्रह्मचर्यादेव पारिव्राज्यं न गार्हस्थ्यात्परमिति केचित्। तथा सति 'वनी भूत्वा प्रव्रजेत्' 'उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेदि'त्यादिविधिवैयर्थ्यं स्यात्, अतो ब्रह्मचर्यादेव प्रव्रजेदिति वा वनी भूत्वा प्रव्रजेदिति वा निर्बंधः कार्यः। ब्रह्मचर्यादेव प्रव्रजेदिति वदतामयमभिप्रायः-साग्निरनग्निकश्चेति द्वावेवाश्रमौ। तत्र ब्रह्मचारी परिव्राट् चानग्निः, गृहस्थो वानप्रस्थश्च साग्निः। आदावग्निमाधाय पश्चात्तमुद्वास्य यत्पारिव्राज्यं ततोऽपि ब्रह्मचर्यात्पारिव्राज्यमेवातीव मुख्यमिति। अन्यथा श्रुतिविरोधापत्तेः। अतः सर्वाश्रमधर्मसिद्धिः।

## [२]स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीते'त्युपक्रम्य 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथ' इति श्रूयते। एवंजातीयके उदाहरणे उद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयते, किंतु 'इयमेव जुहूरादित्यः कूर्मः स्वर्गो लोक आहवनीय' इति जुह्वादीनां पृथिव्यादित्वप्रतिपादकवचनवत् कर्मांगभूतोद्गीथाद्युपादाय तस्य रसतमत्वादिवचनं स्तुतिमात्रं न वेति संशयः। किं तावत्प्राप्तं नोद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयते, किंतु स्तुतिमात्रमिति पूर्वपक्षश्चेत्तत्र सिद्धांत उच्यते-नापूर्वत्वादिति तद्वचनं न स्तुतिमात्रं किंतु तेनोद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयत एव अपूर्वत्वात्-पूर्वमुद्गीथादौ रसतमत्वादेरप्राप्तत्वात्। एवं च सति नात्र इयमेव जुहूरित्यादिन्यायोऽवतार्यः, जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानात्; अतो रसतमत्वादिदृष्टिर्विधिरेव।

## भावशब्दाच्च ॥ २२ ॥

'उद्गीथमुपासीते'ति विधिप्रत्ययप्रयुक्तोऽत्र भावशब्दश्च क्रियाशब्द एव श्रूयते, अतोऽपि रसतमत्वादिदृष्टिर्विधिरिति।

---

१ ब्रह्मचर्यानंतरं वानप्रस्थानंतरं च पारिव्राज्यांगीकारे यदहरेव विरजेत्तदहरेव प्रव्रजेदित्यादिश्रुतिविरोधापत्तेः। २ स्तुतिमात्राधिकरणम्। ३ ओमित्येतदक्षरमुद्गीथमुपासीतेत्यादिवाक्ये। ४ ओमित्येतदक्षरमुद्गीथमुपासीतेत्यादिवाक्यम्। ५ ओमित्येतदक्षरमित्यादिवाक्येन। ६ इयमेव जुहूरित्यादि तु विधिसन्निधावेवाम्नातमिति वैषम्यम्। ७ क्रतुवीर्यवत्त्वादिफलसिद्ध्यर्थमुद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यमित्यर्थः।

## [1]पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

वेदान्तेषु विद्यारंभे 'प्रतर्दनो ह वै दैवोदासि'रित्याद्याख्यायिका आम्नातास्ताः किं पारिप्लवप्रयोगार्था उत विद्यास्तुत्यर्था इति संशयः। किं तावत्प्राप्तं पारिप्लवार्था इति; अश्वमेधयागे राजानं सकुटुंबमुपवेश्य तत्पुरतो वैदिकान्याख्यानानि अध्वर्युणा वक्तव्यानि, तदिदं पारिप्लवाख्यं कर्म 'पारिप्लवमाचक्षीते'ति वाक्येन विहितम्। तत्र सर्वाण्याख्यानानि पारिप्लवे शंसतीति विनियोगात् उपनिषदारंभगता अप्याख्यायिकास्तदर्था इति पूर्वः पक्ष इति चेत्तत्र सिद्धांत उच्यते—न विशेषितत्वादिति; 'प्रथमेऽहनि मनुर्वैवस्वतो राजा द्वितीयेऽहनि यमो वैवस्वतो राजे'त्यादिना पारिप्लवार्थानामाख्यायिकानां विशेषितत्वात्—पृथक्तयाभिधानात् ता न पारिप्लवार्थाः, किंतु विद्यास्तुत्यर्थाः। औपनिषदाख्यायिकानां संनिहितविद्याविधिभिरेकवाक्यत्वादपि ता विद्यास्तुत्यर्था इत्याह—

## तथा चैकवाक्यतोपबंधात् ॥ २४ ॥

यथा सोरोदीदित्याद्याख्यानानां कर्मविधिभिरेकवाक्यता तथा विद्याविधिभिः सह औपनिषदाख्यायिकानामेकवाक्यतयोपसंबंधाच्च ता विद्यास्तुत्यर्था एवेति।

## [4]अत एव चाग्नींधनाद्यपेक्षा ॥ २५ ॥

पूर्वत्रोपपादितोंऽत्याश्रमसद्भावः। तस्य विद्यार्थमाधानाद्यपेक्षास्ति नवेति संशयः। किं तावत्प्राप्तं यतो विद्यांगत्वेन कर्मणो विधानमत एव विद्यावतामूर्ध्वरेतसां विद्यांगत्वेनाधानादिसंस्काररूपं कर्मानुष्ठेयमिति प्राप्ते ब्रूमः—अग्नींधनाद्यनपेक्षा न तेषामाधानाद्यपेक्षा विद्या 'एतमेव प्रव्राजिनो लोकमिच्छंतः प्रव्रजंती'त्यादिश्रुतेः तेषां कर्मत्यागेनैव विद्यावत्त्वावगमात्। किंच तेषामपि स्वाश्रमधर्मापेक्षा विद्या तु विद्यत एव, आधानादिकर्मानुपपत्तेरिति सिद्धम्।

## [8]सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

अंत्याश्रमिणामनुपपत्तेराधानादिकर्मानपेक्षा विद्येति पूर्वाधिकरणे निरूपितम्। गृहिणां विद्या तदपेक्षा नवेति संशयः। एवं सति गृहस्थानामपि विद्या अग्नींधनादिकर्मानपे-

---

१ पारिप्लवाधिकरणम्। २ वेदांतेषु। ३ पारिप्लवप्रयोगार्थाः। ४ अग्नींधनाधिकरणम्। ५ अग्निश्च इंधनानि काष्ठानि च आदिशब्दग्राह्याणि व्रीहियवतिलादीनि द्रव्याणि च विद्यंते येषु तेषां यज्ञकर्मणामनपेक्षा। ६ अग्नींधनमग्न्याधानं आधानं आधानपूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा। ७ ऊर्ध्वरेतसाम्। ८ सर्वापेक्षाधिकरणम्। ९ अग्नींधनाद्यपेक्षा।

क्षणीति ब्रूमः। तस्य कर्मणो व्यभिचारेण विद्यांगत्वानुपपत्तेः। यत्तु विमता विद्या स्वांगभूतकर्मापेक्षा, अंगित्वात्प्रयाजाद्यपेक्षा, दर्शपूर्णमासवदित्यनुमानम्; तत्राधानादेः कीदृशमंगत्वं साध्यं प्रयाजादिवत्फलोपकारित्वं वा अवघातादिवत्स्वरूपोपकारित्वं वा? नाद्यः तेज्जन्यत्वे मुक्तेरनित्यत्वं स्यात्; द्वितीये साध्यविकलो दृष्टांतः, अतो न विद्यांगत्वं कर्मणः। तस्मात् गृहिणामपि विद्या अग्नींधनादिकर्मानपेक्षेति पूर्वः पक्षः। सिद्धांतस्तु कर्मवत्सु गृहस्थेषु विद्या अग्निहोत्रादिसर्वकर्मापेक्षा 'यज्ञेन दानेने'ति श्रुतेः, यज्ञादीनां नारायणनियोगसिद्धत्वाच्च। यथाश्वो गमनसाधनभूतोऽपि स्वपरिकरबंधापेक्षो गमने तथा कर्मणः फलाभिसंधिरहितत्वेन विद्यास्वरूपोपकार्यंगत्वात् न तज्जन्यत्वं मोक्षफलस्य किंतु ज्ञानफलमेव मोक्षः। अतो गृहस्थानां यज्ञादिसापेक्षा विद्या सर्वेषामाश्रमिणां स्वाश्रमविहितकर्मापेक्षेति विद्यायाः कर्मापेक्षत्वमुक्तम्।

## [2]शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदंगतया तेषामवश्यानुष्ठेयत्वात्॥ २७॥

'शांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्, श्रद्धाभक्तिध्यानयोगादवेही'त्यादिना विद्यायाः शमदमादिसंपत्त्यपेक्षा श्रूयते। सा शमादिसंपत्तिर्गृहिणां संभवति नवेति संशयः। यज्ञादिगत्तया बहुव्यापारव्याकुलानां तेषां तदुपरतिरूपा शमदमादिसंपत्तिर्न संभवतीति पूर्वपक्षे प्राप्ते सिद्धांत उच्यते-यद्यपि गृहस्थो विहितकर्मप्रवृत्तस्तथापि निषिद्धकाम्यादिकर्मसु व्यापाररहित एव शमाद्युपेतः स्यात्। 'शांतो दांत' इत्यादिना 'श्रद्धाभक्तिध्यानयोगादवेही'त्यादिना च गृहस्थानां शमादिविधेर्विहितत्वाद्विद्यानिष्पत्तये तदंगत्वेन तेषां शमादीनामवश्यानुष्ठेयत्वाच्च। आंतराणां रागद्वेषादीनामनाविर्भूतिः शमः, सर्वेषामिंद्रियाणां अविहितव्यापारेभ्यो निवर्तनं दमः, निषिद्धकाम्यकर्मव्यापारोपरम—उपरतिः, द्वंद्वसहिष्णुत्वं तितिक्षा, विनष्टतंद्रिव्याक्षेपस्य चित्तस्य परमात्माभिमुख्यं समाधानम्, अपुरुषार्थसकलेतरशास्त्रपराङ्मुखी परविद्यामयपरमाप्ततंत्रोपनिषद्गोष्ठीसमुत्कंठारूपा सत्वकला श्रद्धा, निर्मुक्तसकलेतरदेवताराधना त्रिविधकरणसंपाद्या अष्टांगयोगविशिष्टा परमात्मपरिचर्यामयी वेदरहस्या नवविधा भक्तिः, परमानंदावेशमयपरमात्मसेवारूपमुक्तिप्राप्तित्वरा मुमुक्षा च सकलप्राकृतभोगपराङ्मुखत्वरूपेण वैराग्येण नित्यानित्यवस्तुनिर्धारणाकारेण विवेकेन च

---

१ आधानादिकर्मजन्यत्वे। २ शमदमाद्यधिकरणम्। ३ त्रिविधकरणानि कायवाङ्मनांसि।

विशिष्टस्य नरस्य शमादिसंपत्तिक्रमेण संभवति मुमुक्षा। एते विवेकादयो मुमुक्षापर्यंताः [1]परमधर्माः सर्वेषामाश्रमिणां पराभक्तिरूपविद्यार्थमविशेषेणानुष्ठेया इति।

[2]सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्॥ २८॥

वाजिनां छंदोगानां च प्राणविद्यायां पठ्यते 'न ह वास्यानन्नं जग्धं भवती'ति 'न ह वा एवंविदि किंचनानन्नं भवती'ति। इह प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः प्रतीयते। एषा युक्ता नवेति संशयः। किं तावत् प्राप्तम्? मानांतरप्राप्तस्य भोजनस्याविधेयत्वादिह सर्वान्नानुमतिरप्राप्ता विधीयते, इति प्राप्ते समाधीयते– प्राणविद्यानिष्ठस्यापि सर्वान्नानुमतिः सर्वान्नभक्षणाज्ञा न सर्वदा, किंतु प्राणात्यये एव; अधिकशक्तेरुषस्तेर्ब्रह्मविदोऽपि हि प्राणात्यय एवोच्छिष्टभक्षणादौ श्रुतिर्दृश्यते '[4]मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे कुद्राणक

---

१ नित्यानित्यवस्तुविवेकः, शमदमादिसाधनं संपत्, इहामुत्र च फलभोगविरागो मुमुक्षुत्वं चैतत्साधनचतुष्टयरूपाः परमधर्मा इत्यर्थः। २ सर्वान्नानुमत्यधिकरणम्। ३ अस्य प्राणोपासकस्य जंतुमात्रस्य जग्धं भक्ष्यं तत्सर्वमनन्नं न भवति ह अदनीयमेव भवतीत्यर्थः। ४ ननु मटच्यो मर्दनहेतवोऽशनयः पाषाणवृष्टयो वा ताभिः कुरुषु कुरुदेशसस्येषु हतेषु नाशितेषु सत्सु दुर्भिक्षे जातेऽन्नालाभात्कुद्राणकः कुत्सितां गतिं गतोऽन्त्यामवस्थां प्राप्तश्चक्रस्यापत्यं चाक्रायण उषस्तिनामा ह किल आटिक्यः-अटनाय प्रवृत्तः आटिक्यः, आटिक्या इति पाठे तु गृहांतराघटनाहेतुत्वादाटिकी तयाटिक्यानुपजातपयोधरादिस्त्रीव्यंजनया जायया सह इभ्यग्रामे इभो हस्ती तमर्हतीतीभ्य ईश्वरो हस्त्यारोहो वा तस्य ग्रामस्तस्मिन् इभ्यग्रामे उवास उषितवान्; कस्यचिद्गृहमाश्रित्य पश्चात्स उषस्तिर्ह किलान्नार्थमटन् इभ्यं हस्त्यारोहं कुल्माषान् कुत्सितान्माषान् खादंतं भक्षयंतं सहसोपलभ्य विभिक्षे-याचितवान्; याचिते सति तमुषस्तिं ह इभ्य उवाच किं यच्चेति बहुवचनार्थः, इमे मे मम भाजने उपनिहिताः निक्षिप्ता, इतोऽस्माद्भाजनस्थादुच्छिष्टकुल्माषराशेर्ये अन्ये कुल्माषास्ते न विद्यंते, इत्यतः किं करोमीत्युक्त उषस्तिरेतेषामिति कर्मणि षष्ठी एतान्त्वया भक्ष्यमाणान् कुल्माषान्मे मह्यं देहीति होवाचेत्युक्त इभ्यस्तान् कुल्माषानस्मै उषस्तये प्रददौ–प्रदत्तवान्; हंतोच्छिष्टाः कुल्माषाः भक्षिताश्चेदिदमनुपानमुदकं गृहाणेत्यर्थः, एवमुक्त उषस्तिः प्राणातिरिक्ते उच्छिष्टभक्षणे दोषं पश्यन्नुवाचेत्याह उच्छिष्टमिति यदीदमुदकमहं पास्यामि तदा त्वदीयमुच्छिष्टं वै मे मया पीतं स्यादित्युषस्तिनोक्ते हस्तिपको वक्ष्यमाणन्यवस्थामजानन्नुपहसति-न स्विदिति; एते कुल्माषा अपि किं नोच्छिष्टाः? स्विदिति तर्के इत्युवाचेत्यर्थः। उच्छिष्टमपि जीवनविच्छित्तिमात्रनिरासाय स्वीकृतं न दोषायेत्युत्तरमुवाचेत्याह नवा इति; इमान्कुल्माषानखा-

उवास, स हेभ्यं कुल्मापान् खादंतं विभिक्षे स होवाच नेतोऽन्ये विद्यंते यच्च ये म इम उपनिहिता इत्येतेषां मे देहीति होवाच तानस्मै प्रददौ हंतानुपानमित्युच्छिष्टं मे पीतं स्यादिति होवाच न स्विदेतेप्युच्छिष्टा इति नवा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमि'त्यादिरूपा। अतः प्राणात्यय एव सर्वान्नानुमतिः परविद्यावतोऽपि।

## अबाधाच्च ॥ २९ ॥

'आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः स्मृतिप्रतिलंभे सर्वग्रंथीनां विप्रमोक्ष' इत्यत्रोक्ताया आहारशुद्धेः सर्वान्नानुमत्या बाधे प्राप्तेऽपि अबाधात्—प्राणात्यये बाधाभावोक्तेः, प्राणसंशय एव सर्वान्नानुमतिर्निर्बाधा। विदुषामविदुषामपि सर्वान्नानुमतौ प्रमाणमाह—

## [१]अपि स्मर्यते ॥ ३० ॥

प्राणसंशय एव सर्वान्नानुमतिः स्मर्यतेऽपि—

'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः।
लिप्यते न स पापेन पद्मपत्रमिवांभसा'॥ इति.

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

'यतः तस्माद्ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृज' इति पाप्मना संसृष्टो न भवामीति मत्वा सुरां न पिबतीत्यर्थ इति काठानां संहितायाम् अकामकारे कामकारनिवृत्तौ शब्दश्चायं भवति; अतश्च प्राणसंशय एव सर्वेषामपि सर्वान्नभक्षणानुमतिः। अन्यथा निषिद्धाचरणे सति नारायणाज्ञाद्रोही स्यादिति भावः।

## [२]विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

विद्याहीनस्य गृहस्थस्य आश्रमकर्म यज्ञादिकं 'यावज्जीवमग्निहोत्रं जुहोती'ति विहिततया 'यज्ञेन दानेने'ति श्रुतेर्विद्यासाधनतया चानुष्ठेयमवगम्यते।

---

दन्नभक्षयन्न वै अजीविष्यं नैव जीविष्यामीत्युषस्तिरुवाचेत्यर्थः। नाभावेऽपि तुल्यं जीवनराहित्यमित्याशंकायामाह काम इति; मे मम उदकपानं काम इच्छातो यथेष्टं लभ्यते इत्यर्थः, तथा च चाक्रायणस्य विदुषोऽभक्ष्यभक्षणं प्रति प्रवृत्तिश्रुतेर्जीवितसंदेहावस्थामापन्नस्य विद्याधर्मयशोवतः स्वात्मनः परोपकारसमर्थस्य जीवनमात्रकारणं निषिद्धमपि कुर्वतो नागःस्पर्श इत्यभिप्रायो गम्यते।

१ सर्वापेक्षेति सूत्रे यदुक्तमग्निहोत्रादिसर्वकर्मापेक्षा विद्येति तत्र विद्वदविदुषां कर्त्तव्यतां सूत्रद्वयेन विभजति। २ विहितत्वाधिकरणम्।

**सहकारित्वेन च ॥ ३३ ॥**

विद्यावतोऽपि 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह, अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत' इति श्रुतेर्विद्यांगतया हिततया चानुष्ठेयं यज्ञादिकर्मावगम्यते। इह विद्याहीनेन विद्यावता च यज्ञादिकं विद्यासाधनत्वेनांगत्वेन विहितत्वेन च द्विरनुष्ठेयं सकृदनुष्ठेयं वेति संशये सत्युभयविधिबलाद्विरनुष्ठेयमिति प्राप्ते सिद्धांत उच्यते—

**सर्वथापि त एवोभयलिंगात् ॥ ३४ ॥**

सर्वथापि अविदुषो विद्यासाधनत्वेन विदुषश्च विद्यांगत्वेनोभयोरपि विहितत्वेन चैवं सर्वप्रकारैरपि करणीयतयोक्ताः त एव एते यज्ञादय एव प्रसिद्धाः संति। सकृत्कृतानामपि तेषामुभयलिंगं—उभयाकारत्वेन संभूतस्वरूपसंभवोऽस्ति, अतः कर्मस्वरूपैक्ये सत्यपि तेषामुभयाकारत्वे विरोधाभावः। सकृत्प्रयोगेऽपि वचनद्वयबलेन कर्मण एकस्याप्याकारद्वयोपपत्तेः। यथा 'खादिरो यूपो भवति खादिरं वीर्यकामस्वरूपं कुर्वीते'त्यत्र वचनद्वयबलेन नित्यत्वं काम्यत्वं चैकस्य खादिरत्वस्यास्ति तद्वद्विदुषोऽप्यविदुषोऽपि विद्यांगतया विद्याहेतुतया विहिततया च सकृदेवानुष्ठेयं यज्ञादिकमिति।

**अनभिभवं च दर्शयति ॥ ३५ ॥**

चकारोऽवधारणार्थः, 'धर्मेण पापमपनुदती'ति श्रुतिः विद्योत्पत्तिप्रतिबंधकदुरितनिवर्त्तनेन विद्याया अनभिभवं पराभवनिवर्त्तकं कर्मानुष्ठानं दर्शयत्येव, अतो न पूर्वोक्तविरोधः।

**[5]अंतरा चापि तु तद्दृष्टेः ॥ ३६ ॥**

आश्रमिणां विद्या संपद्यत इत्युक्तम्। इहानाश्रमिणां विद्या संपद्यते नवेति संदेहः।

---

१ विद्याम् अक्षरात्मस्वरूपज्ञानं च अविद्यां च विद्याभिन्नं वर्णाश्रमोचितं कर्म च तदेतदुभयं सह परमात्मोपासनसहितमेव भवति, एवं द्वयं यो वेद जानाति सः अविद्यया विद्याभिन्नेन भगवदाराधनार्थं कृतेन वर्णाश्रमोचितेन कर्मणा मृत्युं कालभयं तीर्त्वा उल्लंघ्य विद्यया त्रिगुणातीतेन शुद्धात्मस्वरूपज्ञानसहितेन परमात्ममाहात्म्यज्ञानेन अमृतं मरणधर्मवर्जितं परमेश्वरसेवोपयोगिनमप्राकृतविग्रहं अश्नुते प्राप्नोतीति श्रुत्यर्थः। २ विद्योत्पत्तिद्वारेण विद्यासहकारितया। ३ अविदुषां विहिततया विद्यासाधनतया च कर्मानुष्ठानमाम्नायते, विदुषां च विहिततया विद्यांगतया च कर्मानुष्ठानमाम्नायत इत्युभयविधिबलात्। ४ अतो यज्ञादिकर्मणां विद्यायाः साधनत्वेऽङ्गत्वे चाविरोध इत्यर्थः। ५ विधुराधिकरणम्।

अनाश्रमिणः स्नातकविधुराश्च, तेषां ब्रह्मविद्या न संभवति, विद्यासाधनभूतानाश्रमधर्माणामभावादिति प्राप्ते वदामः--अंतरा चापि तु तद्दृष्टेः--रैक्वविदुरादिषु विद्यासाधनभूताश्रमहीनेष्वपि विद्यादर्शनात् अनाश्रमिणामपि विद्या संभवत्येव। यदुक्तं विद्यासाधनाश्रमधर्माभाव इति तत्राह—

**अपि स्मर्यते ॥ ३७ ॥**

अनाश्रमिणामपि जपादिना विद्यानुग्रहः स्मर्यते—

'जप्येनैव तु संसिद्ध्येत् ब्राह्मणो नात्र संशयः।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' ॥ इति.

**विशेषानुग्रहश्च ॥ ३८ ॥**

आश्रमानियतधर्मविशेषेणापि विद्यानुग्रहः श्रूयते--'तपसा ब्रह्मचर्येण श्रद्धया विद्यया चात्मानमन्विष्ये'ति[2]।

**अतस्त्वितरज्ज्यायो लिंगाच्च ॥ ३९ ॥**

अतोऽनाश्रमित्वादितरदाश्रमित्वं ज्यायः धर्मभूयस्त्वेन श्रेष्ठतरम्; कुतः लिंगाच्च-'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विज' इति स्मृतेश्च। एवमनाश्रमित्वादाश्रमित्वं वरमेव तथाप्यापद्विषये अनाश्रमिणापि जप्यादिसाधनेन विद्या संपाद्यत एवेति।

**[4]तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥**

इहोर्ध्वरेतसां नैष्ठिकादीनां स्वस्वाश्रमावरोहोऽपि संभवति नवेति संशये संभवतीति पूर्वपक्षे प्राप्ते सिद्धांतयामः--नैष्ठिकादिभूतस्य जनस्य अतद्भावः--ततः प्रच्युतिर्न संभवति, कुतः तद्रूपाभावेभ्यो नियमात्--तद्रूपाभावा नैष्ठिकादिधर्माभावास्तेभ्यो नियमः'ह्यत्यंतमात्मानमाचार्यकुलेऽवसादयन्निति,' 'अरण्यमियात् ततो न पुनरेयादिति, 'समाप्याग्नीन्न पुनरावर्त्तयेदि'ति च शास्त्राणि नियच्छंति, न चारोहरूपशास्त्रवदवरोहरूपशास्त्राणि संति; अतः तेषामप्रच्युतिनियमश्रुतेः--प्रच्युतौ श्रुत्याद्यभावाच्च न तेषां

१ स्नातकाः समावर्त्तनकर्मानंतरमनधिगतस्त्रीकाः विधुराः आश्रमयोरंतराले वर्तमानाश्च। २ जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः। ३ नन्वेवं चेत्तर्ह्याश्रमित्वं व्यर्थं तत्राह। ४ तद्भूताधिकरणम्। ५ नैष्ठिकादीनाम्।

प्रच्युतानां विद्याधिकारः। जैमिनेरप्येवमेव मतमस्ति। तेषां प्रायश्चित्तादिनापि विद्याधिकारो नास्तीत्याह—

### न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

आधिकारिकमधिकारलक्षणोक्तं यदवकीर्णिन उपकुर्वाणस्य ब्रह्मचारिणः प्रायश्चित्तं गर्दभपश्वालंभनं तद्वन्नैष्ठिकस्य तत्प्रायश्चित्तं न संभवति, कुतः पतनानुमानात्तदयोगात्।

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा' ॥ इति.

तस्य पतने प्रायश्चित्तानधिकारस्मृतेः प्रायश्चित्तासंभवात् अनुमानं स्मृतिः।

### उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ४२ ॥

उपपूर्वं पातकमुपपातकं नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनं संजातं चेत्तत्र भावं प्रायश्चित्तविद्यमानतां एके आचार्या मन्यंते अशनवत्, यथोपकुर्वाणस्य मध्वशनादिनिषेधस्तत्प्रायश्चित्तं च तथा नैष्ठिकादीनामपि समानं तदुक्तम्, उत्तरेषां चैतदविरोधीति उपकुर्वाणस्य यदुक्तं तत् चाश्रमाविरोध्यन्येषामप्याश्रमिणां भवतीत्यर्थः।

### बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

उभयथापि उपपातकत्वे महापातकत्वेऽपि कर्माधिकारादिबहिष्कृता एते 'प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महे'ति स्मृतेः, आचाराच्च—शिष्टाचारबहिराचरणाच्च तेषां सर्वथैवारूढपतितानां न विद्याधिकारः।

---

१ नैष्ठिकादीनाम्। २ अवकीर्णशब्देन योनौ निषिक्तं रेत उच्यते तदस्यास्तीत्यवकीर्णी तस्य यः पशुः सः लौकिकाग्नौ होतव्यः स यथोपनयनकाले लौकिकाग्नौ होमस्तद्वदाधानस्य पत्नीपरिग्रहोत्तरकालतया पूर्वमप्राप्तकालत्वादिति तदिदमधिकारलक्षणे सिद्धं प्रायश्चित्तमाधिकारिकं तदपि नैष्ठिकस्यावकीर्णिनो नैवास्ति। ३ छिन्नशिरस इव प्रतिक्रियानुपपत्तेः उपकुर्वाणकस्य तु तादृक्पतनस्मरणाभावादुपपद्यते तत्प्रायश्चित्तम्। ४ उत्तरेषाम्। ५ यद्यपि कल्मषनिर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो वर्तते तथापि कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न संभवति, प्रायश्चित्तं न पश्यामीत्यादिस्मृतेः। ६ शिष्टा हि नैष्ठिकादीन् भ्रष्टान् कृतप्रायश्चित्तानपि वर्जयंति तेभ्यो ब्रह्मादिकं नोपदिशंति। ७ नैष्ठिकादीनां आरूढपतितानां नैष्ठिकव्रतात्प्रच्युतानां सर्वथैव यथाविधि प्रायश्चित्तानुष्ठानेनापि ब्रह्मविद्याधिकार इत्यन्वयः।

## [1]स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

उक्तमुद्गीथाद्युपासनम्। तदनुष्ठानं यजमानस्य उत ऋत्विजामिति संशयः। किं प्राप्तं. उद्गीथाद्युपासनं स्वामिनो यजमानस्यैवानुष्ठातुमर्हं तस्यैव वीर्यवत्तरत्वफलश्रवणात् नर्त्विजामित्यात्रेयो मेने, इति तन्मतरूपे पूर्वपक्षे सिद्धांत उच्यते—

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥

'एवंविद्वुद्गाता ब्रूयादि'ति वाक्यशेषे उद्गातुरुपासकत्वं स्फुटं श्रूयते; ऋत्विग्भिः कृतमार्त्विज्यमेव तदनुष्ठानमित्यौडुलोमिस्तन्मते कथमन्यकर्तृकं कर्मान्यगामिफलं स्यादिति चेत् ऋत्विजामशेषांगयुतकर्मानुष्ठानाय यजमानेन क्रीतत्वात्तत्संभवेदेवे-त्याह-तस्मै-सांगकर्मानुष्ठानाय हि ऋत्विक्कलापो यजमानेन परिक्रीयते-परिक्रियते, अतः ऋत्विक्कृतमुपासनं यजमानकृतमेव, तस्मात्तत्फलं च तस्य स्वामिन एवेति न विरोधः।

## [4]सहकार्यंतरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

कहोलब्राह्मणे श्रूयते 'तस्मात् ब्राह्मणः पांडित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पांडित्यं च निर्विद्याथ मुनिरि'ति बहूपनिपत्तात्पर्यनिर्णयरूपं पांडित्यं विशेषेण संपाद्य बाल्येन रागद्वेषादिरहितत्वात् बाल्यसदृशेनावस्थांतरेणावतिष्ठेत ततः पांडित्यबाल्ये निःशेषं संपाद्याथ मुनिरिति। अत्र पांडित्यबाल्यवन्मौनमपि विधीयते नवेति संशये मुनिरित्यत्र भवेदित्यादिविधिप्रयोगाभावान्न मौनं विधीयत इति प्राप्ते विधीयते सिद्धांतः-तद्वतो विद्यावतः विध्यादिवत् विधीयत इति विधिः यज्ञदानप्रभृत्याश्रमधर्मः, आदिशब्देन श्रवणमनने ग्राह्ये आश्रमधर्मवत् श्रवणमननवच्च पांडित्यबाल्ययोस्तृतीयं सह कार्यंतरं मौनमेकं विधीयते; कुतः मुनिशब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रसिद्धेर्निष्ठानिष्पत्त्यर्थं उपास्यविषयाभ्यासरूपमिदं प्रकृष्टमननं तिष्ठासेदिति पदानुवृत्त्या विधीयते, ततो मौनविधिः संभवति विद्यावत इति।

---

१ स्वाम्यधिकरणम्। २ ओमित्येतदक्षरमुद्गीथमुपासीतेत्यारभ्य तस्माद्वुहैवंविदुद्गाता ब्रूयादिति वाक्यशेषे। ३ उद्गीथाद्युपासनानुष्ठानम्। ४ सहकार्यंतरविध्यधिकरणम्। ५ यस्मात् पूर्वे ब्राह्मणा आत्मानं विदित्वा पुत्रैषणाभ्यो व्युत्थाय भिक्षाचर्यं चरंति तस्मादधुनातनो ब्राह्मणः। ६ अवस्थातुमिच्छेत्। ७ कहोलब्राह्मणे।

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥

इह सर्वेषामाश्रमाणां विद्या साधारणा उत अत्र विशेषोऽस्तीति संशयः। ब्रह्मचारिणो वेदाभ्यास आचार्यपरवशत्वात् गृहस्थस्य कुटुंबभरणायोद्यमे व्याकुलत्वात् वनस्थस्य वैखानसधर्मव्यापृतत्वात् न तेषां ज्ञानध्याने संभवतः। 'वेदांतविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वा' इति वेदांतार्थज्ञानवतां संन्यासयोगश्रवणात् अंत्याश्रमस्थेषु ध्यानविधिदर्शनाच्च अंत्याश्रमिणामेव ज्ञानध्याने संभवतः, नेतरेषामिति पूर्वपक्षे प्राप्ते सिद्धांतं ब्रूमः—सर्वेष्वाश्रमेषु ज्ञानध्यानरूपा विद्या संभवत्येव, कुतः कृत्स्नभावात्-कृत्स्नाश्रमेषु विद्यासद्भावप्रदर्शनात्। तथाहि छांदोग्ये 'कुटुंबे शुचौ देशे स्वाध्यायमधीयान' इत्यारभ्य 'स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तत' इति। अत्र हि गृहिणा गृहस्थेन उपसंहारः सर्वविद्यासमाप्तिस्तु सर्वेषां प्रदर्शनार्थः, एवमंत्याश्रमवचनमपि सर्वेषामाश्रमिणां प्रदर्शनार्थम्, अतः सर्वेषामाश्रमिणां विद्यास्त्येव। फलत्यागः संन्यासः, यतित्वं जितेंद्रियत्वं सर्वमिदं सर्वेषां संभवत्येव।

## मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

'अथ मुनिरि'ति वचने 'अथ भिक्षाचर्यं चरंती'त्यनेनोक्तो यः शमदमादिरूपपारिव्राज्यैकधर्मोपसंहारः स सर्वाश्रमिणां शमाद्यनुष्ठानार्थं प्रदर्शितः, तं सूत्रार्थेन दर्शयति-मौनवत्—सर्वैषणाविनिर्मुक्तानां मौनोपदेशवत् इतरेषां शमदमादिसाधनामपि सर्वाश्रमिजनानुष्ठानोपदेशात् सर्वाश्रमिणां ब्रह्मविद्या विहितैव।

## [२]अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

कलिवर्ज्यप्रकरणे वानप्रस्थसंन्यासाश्रमयोर्निषेधत्वाद्गार्हस्थाद्याश्रमांतरेण देहमनाविष्कुर्वन्नव्यक्तीकुर्वन्नपि द्विजो वासुदेवीमहादीक्षारूपाश्रमं परविद्यासाधनमुपादत्ते; कुतः तस्य वैराग्यातिशयेन ब्रह्मचर्यादियतिधर्मसमन्वयात्। अंत्याश्रमसंज्ञकोऽयमाश्रमभेदः नारायणसेवापरस्तत्प्रसन्नताहेतुश्च। तथाहि वासुदेवोपनिषदि 'ॐ नमस्कृत्य भगवान्नारदः सर्वेश्वरं वासुदेवं पप्रच्छ भगवन्नूर्ध्वपुंड्रविधिं द्रव्यमंत्रस्थानादियुतं मे ब्रूही'त्यादिभिरूर्ध्वपुंड्रधारणविधिना वासुदेवी महादीक्षा श्रूयते। स्कांदे च स्मर्यते

१ एवं छांदोग्ये यथा गृहिणा ब्रह्मविद्यायां सर्वाश्रमिसंग्रहः तथा मुंडकोपनिषदि अंत्याश्रमवचनमपि वेदांतविज्ञानसुनिश्चितार्था इति पारिव्राज्यैकांतधर्मप्रतिपादनत्वमपि। २ अनाविष्काराधिकरणम्।

'वानप्रस्थश्च संन्यास इत्युभावाश्रमौ मुने, दुष्करत्वात्कलियुगे न ग्राह्याविति निश्चयः। श्रीवासुदेवभक्ता ये तीव्रवैराग्यशालिनः, तेषां धर्मस्तु तत्सेवा प्रोक्तोऽहस्सु च रात्रिषु। एकोऽपि च क्षणस्तेषां ज्ञानविज्ञानभूयसाम्, भक्तिं नवविधां विष्णोर्विना व्यर्थो न वै भवेदि'ति। एवं च सति गृहिणां वैराग्यवतां मुमुक्षुजनानां वासुदेवीदीक्षाग्रहणं युक्तमिति निर्णयः। एवं भुक्तिमुक्तिहेतुतयेदं व्रतं नारायणप्रसादकरं श्रुतय एव वर्णयंति तथाहि 'पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः अतप्ततनुर्न तदामोऽश्नुते शृता स इद्वहंतस्तत्समाशततपोष्पवित्रं विततं दिवस्पदे शोचंतोऽस्य तंतवो व्यस्थिरन् अवंत्यस्य पवितारमाशवो दिवस्पृष्ठमधितिष्ठंति चेतसे'ति ऋग्वेदसंहितायां सप्तमाष्टके तृतीयेऽध्यायेऽष्टमे वर्गे इयमेव श्रुतिः किंचित्पाठांतरेण सामवेदे उत्तरग्रंथे द्वितीये प्रपाठकेऽस्ति। तत्र ऋग्वेदश्रुतिभाष्यम्-पवित्रमिति; हे ब्रह्मणस्पते! ब्रह्मणोऽक्षरब्रह्मणः पतिः स्वामी तत्संबुद्धौ हे वासुदेवेत्यर्थः, ते तव पवित्रमतिशुद्धं विततं सर्वत्र व्याप्त्या विस्तृतं अक्षराख्यं स्थानमस्तीति शेषः, एतादृशः प्रभुः समर्थस्त्वं तप्तत्वदायुधधारकस्य गात्राण्यंगानि पर्येषि परिगच्छसि तत्समीपे नित्यं तिष्ठसीत्यर्थः। यः विश्वतो विश्वस्मिन् जगति अतप्ततनुश्चक्रादित्वदायुधैरसंतप्तगात्रः तत् स आमो भगवदुपासनमार्गे पक्वताहीनः, अतस्तत् त्वद्धाम नाश्नुते न प्राप्नोति शृता स इत् तप्तमुद्राधारणपक्वदेहा एव वहंतो दिव्यां भागवतीं तनुं प्राप्नुवंतः संतः तत्तव स्थानं समाशत व्याप्नुवंति तत्प्रविशंतीत्यर्थः। तपोष्पवित्रमिति, तपोः स्वभक्तशत्रूणां तापकस्य तव पवित्रमतिशुद्धं स्वरूपं दिवः पदे द्युलोकात् श्रेष्ठे अक्षराख्ये स्थाने विततं निजैश्वर्यविस्तारेण स्थितम्; अस्य त्वद्दिव्यस्वरूपस्य तंतवः किरणाः शोचंतो देदीप्यमानाः व्यस्थिरन्—बद्धमुक्तांतर्यामितया विविधं तिष्ठंति; अस्य त्वत्स्वरूपस्य आशवः स्वभक्तसुखप्रदाने सत्वरास्ते तंतवः पवितारं संतप्तचक्राद्यायुधधारणेनात्मानं पवित्रीकुर्वाणं निजभक्तम् अवंति पालयंति; एवंभूतं त्वां चेतसांतःकरणेन ध्यातारो ये ते दिवस्पृष्ठं दिव्यंति भगवंतं स्तुवंति इति देवाः स्तोतारो महामुक्तास्तैः स्पृष्टं अधिष्ठितं त्वद्धाम अधितिष्ठंति आश्रयंते इति श्रुतितात्पर्यार्थः। 'स होवाच याज्ञवल्क्यस्तत्पुमानात्महिताय हरिं भजेत्, पुण्यश्लोकमौलेर्वर्माण्यग्निना संदधत' इति,

'धृतोर्ध्वपुंड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा।
स्वरेण मंत्रेण सदा हृदि स्थितं परात्परं याति महान्महांतम्'॥ इति.

'धृतोर्ध्वपुंड्रः परमेशितारं नारायणं सांख्ययोगादिगम्यम्।
स्मृत्वा विमुच्येत नरः समस्तैः संसारपाशैरभियाति विष्णुम्'॥ इति.

इदं च व्रतं पंचरात्रतंत्रे पुराणेषु च बहुधा प्रसिद्धम्।

[1]ऐहिकमप्रस्तुतप्रतिबंधे तद्दर्शनात् ॥ ५० ॥

उक्तक्रमोपासननिष्ठानामैहिकं मुक्तिफलम् उत जन्मांतरे वा भवतीति विचार्यते। इहैव जन्मनि मुक्तिर्जायतामित्यभिसंधाय पुरुष उपासने प्रवर्त्तते नतु जन्मांतर इति को वा पुरुषः प्रयोजनस्य विलंबं करोति न कोऽपि; तस्मादैहिकमेव मुक्तिफलं न जन्मांतरीयमिति प्राप्ते सिद्धांतं वदामः-अप्रस्तुतप्रतिबंधे प्रकृतप्रबलकर्मांतरप्रतिबंधाभावे परमात्मोपासनफलमिह जन्मनि भवति; [2]तद्भावे तु जन्मांतरे यथाभ्युदयरूपं फलं स्वसाधनभूतपुण्यकर्मानंतरमेव संपद्यते, तत्[3]प्रतिबंधकसद्भावे तु जन्मांतरे भवति तद्वत् वामदेवादिषु जन्मांतरश्रवणादिबलेन तत्फलदर्शनात् ततो नैहिकत्वे मुक्तिफलस्य नियम इति।

[4]एवं मुक्तफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥

केवलकर्मफलाभ्युदयवत् मुक्तिफलमपि कर्मांतरप्रतिबंधाभावे भवतीति निरूपितम्। तन्न्यायेन कर्मफलवत् ज्ञानोपासनफलभूतस्यापि मोक्षस्य न्यूनाधिकत्वे नियमोऽस्ति नवेति संशयः। किंतावदत्र प्राप्तं कर्मफलवन्मुक्तिफलमपि न्यूनाधिकमस्तीति पूर्वः पक्षः। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'वाजपेयेन स्वाराज्यकामो यजेते'त्यादिभिः कर्मफलस्य न्यूनाधिकत्वमवगम्यते तद्वज्ज्ञानोपासनफलस्यापीति प्राप्तेऽभिधीयते-कर्मफलस्येव ज्ञानोपासनफलस्य न न्यूनाधिकत्वनियमः, कुतः-तदवस्थावधृतेः ब्रह्मभावावस्थाया एव पार्षदत्वरूपमुक्तिफलावधृतेः। सर्वेषामपि परविद्यावतां ब्रह्मात्मकपार्षदत्वस्यैकत्वात् न वैषम्यकथात्र संभवति। द्विरुक्तिरध्यायसमाप्तिं द्योतयति।

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यश्रीमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने तृतीयाध्यायस्य चतुर्थपादः समाप्तः ॥ ४ ॥ समाप्तश्चायं तृतीयाध्यायः ॥ ३ ॥



---

१ ऐहिकाधिकरणम्। २ प्रबलकर्मांतरसद्भावे तु। ३ अभ्युदयफलप्रतिबंधप्रबलकर्मांतरसद्भावे तु। ४ मुक्तिफलाधिकरणम्। ५ चतुर्थपादेऽधिकरणानि १६ सूत्राणि ५१।

# अथ चतुर्थाध्याये प्रथमः पादः ॥

## [1]आवृत्तिरसकृदुपदेशात् ॥ १ ॥

तृतीयाध्याये खलूपासकोपास्योपासनभेदा आश्रमधर्मादयश्च निर्णीताः । इह पुनश्चतुर्थाध्यायस्याद्यपादे उपासनप्रकारः, द्वितीये पादे जीवकलापस्योपासकस्योत्क्रांतिदशा च तृतीये पादे अर्चिरादिगतिश्च चतुर्थे पादे परब्रह्मप्राप्तस्य भक्तस्यावस्था च वर्ण्यते। अत्र प्रथमाधिकरणे 'ब्रह्मविदाप्नोति परं तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'यदा पश्यः पश्यते रुक्मवर्णं' इत्यारभ्य 'निरंजनः परमं साम्यमुपैतीति' 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्वतः, त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुने'ति, 'बहवो ज्ञानतपसा पूता मद्भावमागताः' इत्यादिषु मोक्षसाधनत्वेन विहितं वेदनं सकृदनुष्ठेयं उतावर्त्तनीयमिति संशयः। किंतावत्प्राप्तं सकृदनुष्ठेयम्; सकृत्कृतेऽपि शास्त्रार्थे कृतः शास्त्रार्थ इतिन्यायात्प्रयाजादिवत्; सकृदनुष्ठानेऽपि परस्परपर्यायभूतवेदनज्ञानशब्दार्थसिद्धेरिति प्राप्ते ब्रूमः-मोक्षसाधनतया विहितं वेदनमसकृदावर्त्तनीयं कुतः उपदेशात्-'ब्रह्मविदाप्नोति परमि'त्यादिवाक्यसमानार्थेषु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः, 'ततस्तु स पश्यते निष्कलं ध्यायमान' इत्यादिवाक्येषु ज्ञानस्य ध्यानरूपत्वोपदेशात्। 'मनो ब्रह्मेत्युपासीत भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद यस्तद्वेद यत्स वेद स मयैतदुक्तः अनुम एतां भगवो देवतां शाधि यां देवतामुपास्स' इत्यादिश्रुतिषु उपक्रमोपसंहारयोर्[2]विद्युपास्योर्व्यतिकरोपदेशेन मोक्षसाधनरूपस्य वेदनस्योपासनरूपत्वावगमाच्च; [3]ध्यानोपासनशब्दयोश्च स्मृतिसंतानवाचित्वात्; यदुक्तं प्रयाजादिवदिति तदत्र नोचितं तस्य प्रयाजादेरदृष्टफलत्वात्, यदुक्तं सकृदनुष्ठानं वेदनफलस्य हरिसाक्षात्कारस्य तु दृष्टत्वात् तस्याऽऽफलोदयमावृत्तिर्व्रीह्यादेरवघातादिवदिति युक्तम्।

---

१ आवृत्त्यधिकरणम्। २ विद्युपास्योश्च वेदांतेषु व्यतिकरेण प्रयोगो दृश्यते क्वचिद्विदिनोपक्रम्योपासिनोपसंहरति यथा यस्तद्वेद यत्स वेद स मयैतदुक्त इत्यत्रानुम एतां भगवो देवतां शाधि यां देवतामुपास्से इति क्वचिच्चोपासिनोपक्रम्य विदिनोपसंहरति यथा मनो ब्रह्मेत्युपासीतेत्यत्र भाति च तपति कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेदेति। ३ ध्यानं चिंतनं तच्च स्मृतिसंतानरूपं न स्मृतिमात्रम्; उपास्तिरपि तदेकार्थः, एकाग्रचित्तवृत्तिनैरंतर्ये प्रयोगदर्शनात्।

## लिंगाच्च ॥ २ ॥

अस्मिन्विषये लिंगं स्मृतिश्चास्ति–'तद्रूपप्रत्यये चैका संततिश्चान्यनिस्पृहा। तद्ध्यानं प्रथमैः षड्भिरंगैर्निष्पाद्यते तदे'ति 'अनन्येनैव योगेन मां ध्यायंत उपासते। तेषामहं समुद्धर्त्ता मृत्युसंसारसागरादि'त्यादिस्मृतिकलापः। अतश्च परब्रह्मवेदनस्यावृत्तिरिति।

## [1]आत्मेति तूपगच्छंति ग्राहयंति च ॥ ३ ॥

पूर्वत्रावृत्तिमत्परब्रह्मण उपासनमभिहितम्। उपासितुर्जीवात्मनः तत्परब्रह्मोपासनं प्राप्ताक्षरब्रह्मैक्येन उतार्थांतरत्वेनेति संशयः। सुषुप्त्युत्क्रांत्योर्भेदेन' 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इत्यादिषु परब्रह्मोपासितुर्जीवकलापस्याक्षरब्रह्मणः सकाशादर्थांतरत्वेनोपपादनात् तदन्यत्वेनोपासनं कर्त्तव्यमिति पूर्वः पक्षः प्रवर्त्तते। सिद्धांतस्तु 'देवो भूत्वा देवं यजेत' 'अहं ब्रह्मास्मीति' 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' ॥ इति.
'आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे।
कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥
परिनिष्ठितोऽपि नैर्गुण्ये ह्युत्तमश्लोकलीलया।
गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥
नैर्गुण्यस्था रमंते स्म गुणानुकथने हरेः।'

इत्यादीनि शास्त्राणि परब्रह्मोपासितुर्जीवात्मनोऽक्षरब्रह्मैक्येनोपासनं ग्राहयंति। तुशब्दोऽवधारणे। अत आत्माऽक्षरब्रह्म मम स्वरूपमेवास्तीति परब्रह्मोपासितारोऽक्षरात्मभावेन परब्रह्मोपासनमुपगच्छंति; अतो मुक्तावस्थायामपि ते ब्रह्मपुरे सदावस्थितस्य परब्रह्मशब्दाभिधेयस्य पुरुषोत्तमनामकस्य नारायणस्य परिचर्यायां तत्समानधर्मया ब्रह्मरूपया भागवतीतन्वा सततं तिष्ठंति। तथाहि श्रूयते 'अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुरि'ति 'स्वभक्तभ्यो रमते स मे सर्वस्वमि'ति, 'गुणापाये ब्रह्मशरीरमेति' 'ब्राह्मीं संविशते तनुमि'ति 'निरंजनः परमं साम्यमुपैती'ति, 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैती'ति। स्मर्यते च–'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायंते प्रलये न व्यथंति च' इति। 'प्रवर्त्तते यत्र रजस्तम-

---

१ आत्मत्वोपासनाधिकरणारंभः।

स्तयोः सत्वं च मिश्रं न च कालविक्रमः। न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरा सुरार्चिताः। श्यामावदाताः शतपत्रलोचना' इति 'ददर्श तत्राखिलसात्वतां पतिं श्रियःपतिं यज्ञपतिं जगत्पतिम्। सुनंदनंदप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिषेवितं प्रभुम्' इति. 'प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुमि'ति पार्षदत्वरूपया भागवतीतन्वा भगवत्परिचर्यारूपा मुक्तिरिति सर्वश्रुतिस्मृतितात्पर्यादक्षरात्मभावेन परब्रह्मोपासनमुपासितुर्मुक्तिकरम्; [1]अन्यथा [2]संसारानिवृत्तिरिति निर्णयः। विशेषमाह–

## [3]न प्रतीकेन हि सः ॥ ४ ॥

'मनो ब्रह्मेत्युपासीते'त्यादिश्रुतिषु मनःप्रभृतीनां ब्रह्मत्वेनोपासनमवगम्यते, तेष्वप्यात्मैकत्वेनोपासनमुत भिन्नत्वेनेति संशये पूर्वपक्षः–'मनो ब्रह्मेत्युपासीते'त्यादिश्रुतिसिद्धेषु प्रतीकोपासनेषु ब्रह्मदृष्ट्या संस्कृतं मनःप्रभृतिकमुपास्यमवगम्यते, अतः प्रतीकमुपासकेन ब्रह्मतया भावितमित्यात्मैकतया [4]तदुपासने को विरोध इति एवं प्राप्ते उच्यते-नात्मैकत्वग्रहणं प्रतीकेषु, तेषु हि न परं ब्रह्मोपास्यं, किंतु ब्रह्मदृष्ट्या मनःप्रभृतिकमुपास्यम्। [5]तत्र मनआदिविशिष्टस्य ब्रह्मण एवोपास्यत्वेऽपि मनआदेर्ब्रह्मगुणत्वाभावात् विकारत्वयुतमनआदिविशिष्टे ब्रह्मणि नात्मैकत्वग्रहणं किंतु सत्यत्वादिविशिष्टेऽक्षरब्रह्मण्येवात्मैकत्वग्रहणम्; अन्यथा ह्यात्मनोऽपि विकारास्पदत्वं स्यात्, अतः प्रतीके मनःप्रभृत्यंगोपासने ह्यात्मैकत्वग्रहणं नोपासकानाम्; नहि [6]तत्र नारायणः साक्षादुपास्य इति।

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

प्रतीकोपासनेषु मनआदित्यादिप्रतीके ब्रह्मदृष्टिरुपासकेन कर्त्तव्या उत ब्रह्मणि [7]तद्दृष्टिरिति संदेहे पूर्वः पक्षः–मनआदीनां दृष्टिं ब्रह्मणि कृत्वा ब्रह्मोपासनीयं, मनआदित्यादेरेव फलदातृत्वादित्येवं प्राप्ते उच्यते–'अधिकं तु भेदनिर्देशात्' 'अक्षरात्परतः परः' 'परात्परतरो ब्रह्म तत्परात्परतो हरिरिति' 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' इत्यादिषु उत्कर्षात्–परब्रह्मण उत्कृष्टत्वागमात्, ब्रह्मदृष्टिः–परब्रह्मदृष्टिरेव निकृष्टेषु मनआदिषु कर्त्तव्या। लोके हि निकृष्टे भृत्यादौ राजदृष्टिं कृत्वा राजवत्त-

१ अक्षरात्मैकभावेन भगवदुपासनमंतरा। २ संसरणहेतुभूतानाद्यविद्यात्मककारणशरीरभंगाभाव इति निर्णयः। ३ प्रतीकाधिकरणारंभः। ४ मनःप्रभृतिप्रतीकोपासने। ५ प्रतीकेषु। ६ मनःप्रभृत्यंगेषु। ७ मन आदित्यादिदृष्टिः।

मुपासते नतु भृत्यदृष्टिं कृत्वा राजानमुपासते केचिदपि; इदमेव च परमौचित्यं यदुत्कृष्टं वस्तु तदेव सर्वे संमानयंति; अतः परं ब्रह्म सर्वोत्कृष्टतयैव सर्वोपास्यमवगम्यते। एवं सर्वोत्कृष्टस्य नारायणस्य सर्वत्र व्याप्तिदृष्ट्या सर्वेषां मनःप्रभृतीनां प्रतीकानामुपास्यत्वं सिद्धम्।

[1]आदित्यादिमतयश्चांग उपपत्तेः ॥ ६ ॥

पूर्वत्र ब्रह्मण उत्कृष्टत्वादादित्यादिषु तद्दृष्टिरुपासनेऽभिहिता। इह 'य एवासौ तपति तमुद्गीथमुपासीते'त्यादिषु कर्मांगोपासनेषु उद्गीथादिषु आदित्यादिदृष्टिः कार्या उत विपर्यासेनैवेति संशयः। किं तावत्प्राप्तम्-उद्गीथादीनामादित्यादीनां च कर्मांगत्वब्रह्मरूपत्वाविशेषात् अनियम इति पूर्वपक्षे प्राप्ते सिद्धांतं वदामः-उपपत्तेः-आदित्यादीनां कर्माराध्यत्वेनोत्कृष्टत्वोपपत्तेः कर्मांग उद्गीथादौ आदित्यादिमतयस्तद्दृष्टयः कार्याः[2], तद्दृष्टिसंस्कृतोद्गीथाद्यंगयुक्तस्य कर्मणः फलातिशयसंभवात् यत्खलु स्वतो वीर्यवत्क्रियमाणं च तस्यैव[3] विद्यया संस्कृतस्य वीर्यवत्तरत्वरूपफलातिशयः 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति वाक्यादवगम्यते। एवं च ब्रह्मात्मत्वादिसाम्येऽप्युद्गीथादिक्रियाचोदनादुद्गीथादेः क्रियमाणत्वेन फलसाधनत्वादुद्गीथादिविपरीतसिद्धस्वभावस्यादित्यादेस्तथाफलसाधनत्वाभावादादित्यादिदृष्टिरुद्गीथादिष्वंगेष्विति निर्णयः।

[4]आसीनः संभवात् ॥ ७ ॥

उपपादितमुपासनाव्यवस्थापनम्। इहोपासनस्य आसननियमोऽस्ति नवेति संशयः। क्वचिदप्यासीन उपासीतेति नियमाश्रवणात् मानसव्यापाररूपस्योपासनस्य सर्वावस्थायामपि संभवादुपासने नास्त्यासननियम उपासकस्येति पूर्वः पक्षः। सिद्धांतस्तु आसीन एव ब्रह्मोपासीत तस्यैवैकाग्र्यसंभवात् तथाहि श्रूयते—

'यदा तु ध्यायते मंत्रं गात्रकंपोऽभिजायते।
आसनं पद्मकं बध्वा यच्चान्यद्वापि रोचते ॥
कुर्यान्नासाग्रदृष्टिं च हस्तौ पादौ च संयुतौ'।

इति 'विविक्तदेशे तु सुखासनस्थः शुचिः समग्रीवशिरःशरीर' इत्यादिनोपासने नियमोऽस्तीत्यवगम्यते; अत आसीन एव ब्रह्मोपासीतेति निर्णयः।

---

१ आदित्यादिमत्यधिकरणारंभः। २ आदित्यादिपूद्गीथादिदृष्टिः कार्येति। ३ कर्मण एव। ४ आसीनाधिकरणारंभः।

## ध्यानाच्च ॥ ८ ॥

'स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्यन्निगूढवत्' ॥

इत्यादिश्रुतौ नारायणदर्शनजनकोपासनस्य ध्यानरूपत्वावगमात् ध्यायतेश्च 'ध्यायति बको, ध्यायति प्रोषितबंधुरि'त्यादिवचने प्रशिथिलांगचेष्टेषु प्रतिष्ठितदृष्टिषु एकविषयाक्षिप्तचित्तेषु जंतुष्वर्थव्यवहारात् विजातीयज्ञानांतराव्यवहिते तैलधारावदविच्छिन्नस्मृतिसंतानरूपध्याने चित्तैकाग्र्यावश्यंभावाच्च ध्यानसिद्धयेऽवश्यमासननियम आदर्त्तव्यः।

## अचलत्वं चापेक्ष्य ॥ ९ ॥

पृथिव्यादीनामचलत्वमपेक्ष्य 'ध्यायतीव पृथिवी ध्यायतीवांतरिक्षमि'त्यादिप्रयोगाच्चासीन एवोपासीत; ध्यानसंततिर्हि पृथिव्यादिवदचलत्वेनासीनस्यैव संभवति।

## स्मरंति च ॥ १० ॥

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥
तत्रैकाग्र्यं मनः कृत्वा यतचित्तेंद्रियक्रियः ।
उपविश्यासने युंज्यात् योगमात्मविशुद्धये' ॥

इत्युपासकानामासननियमस्मरणाच्च आसीन एव ब्रह्मोपासीत ।

## यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

उक्त उपासकस्यासननियमः । तद्वद्दिग्देशकालनियमोऽस्ति नवेति संदेहे सत्यस्तीति युज्यते। यथा चोदिते कर्मणि ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशीति दिग्नियमः, प्राचीनप्रवणे वैश्वदेवेन यजेतेति देशनियमः, अपराह्णे पिंडपितृयज्ञेन चरंतीति कालनियमः, तथात्रापि चोदितत्वाविशेषादुपासने दिगादिनियमो युक्त इति पूर्वः पक्षः। सिद्धांतस्तु उपासने नास्ति दिगादिनियमः। ऐकाग्र्यं हि ध्यानस्य प्रधानसाधनं नहि तस्य दिगाद्यपेक्षा। यत्र रागद्वेषादिकालुष्यहेतुर्नास्ति तत्र हि मनस ऐकाग्र्यं भवति, ऐकाग्र्यं यस्मान्मुख्यतमं साधनं भवति तस्मादैकाग्र्यमात्रसाधनकस्य ध्यानरूपोपासनस्य न दिग्देशकालनियमः ।

१ दिशि देशे काले वा । २ दिशि देशे काले वा ।

## [1]आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

पूर्वत्र ब्रह्मोपासने दिगादिनियमाभाव उक्तः। इह पुनस्तस्योपसंहारोऽस्ति नवेति विचारे यावदिच्छा तावदुपासना कर्त्तव्या। अन्यथा तदुपसंहार इति पूर्वपक्षे प्राप्ते सिद्धांतः-आप्रायणादामरणादहरहरुपासना कार्या, न कदाचिदपि तदुपसंहारः। तत्रापि 'यावदायुःकालेऽप्युपासनं दृष्टं हि अहरहर्वा एवंवित्स्वर्गं लोकमेति स खल्वेवं वर्त्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यत' इत्यादावाप्रायणात् उपासनश्रवणात् परब्रह्मस्वरूपसाक्षात्कारसंपादिन्यास्तद्ध्रुवानुस्मृतेर्मध्ये विच्छेदो न कार्यः। स्वहृदि नैरंतर्येण तु ब्रह्मणि भाविते हि तद्रूपमुपासकेषु प्रकाशते, अतः सर्वज्ञं नित्यतृप्तं स्वयंप्रकाशं स्वतंत्रमलुप्तशक्तिकं परं ब्रह्म नैरंतर्येण भावनीयं तत्स्वरूपप्रकाशाय। तथा श्रूयते ब्रह्मरूपमुपासकेषु प्रकाशत इति 'यमेवैष वृणुते तेन लभ्यः विवृणुते तनुं स्वामि'तिः एवमुपासकानामक्षरात्मभावमुपगतेषु स्वात्मसु परब्रह्मस्वरूपस्य प्रकाशनात्तत्कारणभूता ध्रुवानुस्मृतिर्यावदायुषं कर्त्तव्या न कदाचिदपि विच्छेद्येति निर्णयः।

## [5]तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

पूर्वत्र प्रकर्षेणोपासकानां ब्रह्मस्वरूपं प्रकाशत इति सोपपत्तिकमुपपादितम्। इह तेषां पापक्षयोऽस्ति नवेति संशयः। किंतावत्प्राप्तम् उपासकानामपि भोगमंतरेण पापक्षयो न भवति 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी'ति वचनात्। भोगाय शरीरापत्तौ पुनरपि कर्मापत्तिरिति न मोक्षावसर इत्येवं प्राप्ते क्षीयते पापं कर्मोपासकानामिति ब्रूमः। कथमिति चेत्तत्राह-तदधिगमे परब्रह्मोपासनप्राप्तौ तत्सामर्थ्यादेव परब्रह्माज्ञानुवर्त्तिनो भागवतधर्मपालनशीलस्योपासकस्य पूर्वाघनाशः, उत्तराघाश्लेषश्च भवति। कुतः तद्व्यपदेशात्-श्रुतिस्मृतिषु पूर्वोत्तराघविनाशाश्लेषयोर्व्यपदेशोऽवगम्यते।तथाहि 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयंते तद्यथा पुष्करपलाश आपो न श्लिष्यंते एवमेवंविदि पापं कर्म न श्लिष्यत' इति, 'क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति, 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा॥ ज्ञानाग्निदग्धकर्माण' मिति। विद्यावतः पूर्वोत्तराघविनाशाश्लेषयोः स्वरूपं त्वेवं वेदितव्यं-तत्र विद्योत्पत्त्युत्तरकालभाविनोऽघस्याश्लेषकरणं हि वैदिककर्मानुष्ठानायोग्यतासंपादिकया

---

१ आप्रायणाधिकरणारंभः। २ ब्रह्मोपासनस्य। ३ ब्रह्मोपासनोपसंहारः। ४ परब्रह्मस्वरूपाविच्छिन्नस्मृतेः। ५ तदधिगमाधिकरणारंभः।

दुर्वासनया तदननुष्ठानजन्यप्रत्यवायहेतुतच्छक्त्युत्पत्तिप्रतिबंधकरणं यत्तदेव कृतान्यघानि च जनस्य वैदिककर्मानुष्ठानायोग्यतां सजातीयकर्मांतरारंभरुचिं तदननुष्ठानजन्यप्रत्यवायं च कुर्वंति; विद्योत्पत्तेः प्राचीनस्याघस्य विनाशकरणं तु तदुत्पन्नायाः शक्तेर्विनाशकरणं यत्तदेव, तच्छक्तिरपि श्रीहर्यप्रसन्नतारूपैव; एतदुक्तं भवति-विद्याज्ञातुर्जनस्य विद्यातिप्रियत्वात्स्वयं विद्याशक्तिरपि वेद्यभूतश्रीहर्युपासनस्वरूपा, तस्य निरतिशयप्रिया सती तेन पूर्वकृताघसमूहोत्पन्नां श्रीहर्यप्रीतिं विनाशयति; सैव विद्याशक्तिः स्वोत्पत्त्युत्तरकालभाव्यघहेतुकां श्रीहर्यप्रीत्युत्पत्तिं प्रतिबध्नाति। एवं च सति यदघाश्लेषवचनमाम्नायते तत्प्रामादिकविषयं मंतव्यम्।

'नाविरतो दुश्चरितान्नाशांतो नासमाहितः।
नाशांतमानसो वापि प्रज्ञानेनैनमाप्नुयात्' ॥

इत्यादिश्रुतिभिर्यावज्जीवं प्रत्यहमुत्पद्यमानाया उत्तरोत्तरातिशयवर्द्धमानाया विद्याया दुश्चरितपरिहाणेनैव निष्पाद्यत्वावगमात्। एवं सत्युपासकानां पूर्वोत्तराघस्थानीययोः संचितक्रियमाणयोरश्लेषविनाशौ विद्यया भवत एव। यदुक्तं नाभुक्तं क्षीयत इति। तस्य हरिस्वरूपज्ञानहीनपुरुषविषयत्वादविरोधः।

## [१]इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पूर्वत्र विदुषः [२]पापलेपो न भवतीति निरूपितम्। इह तद्विरोधि[३]पुण्यलेपोऽस्ति नवेति विचारः। किं प्राप्तं विद्याविरोधिनः पापस्य क्षयो युक्तः नतु पुण्यस्य; कुतः तस्य विद्यांगत्वेनानुवृत्त्यौचित्यादित्येवं प्राप्ते निरूप्यते-विदुषि इतरस्य [४]पुण्यस्यापि एवं पापवन्मोक्षविरोधित्वेनानिष्टफलत्वसाम्यादश्लेषविनाशौ विद्यया स्याताम्। विद्यानुगुणस्यारोग्यादिफलस्य पुण्यस्य शरीरपाते लयः, विद्यांगकर्मणस्तु काम्यफलादिसंबंधाभावान्न श्लेषः, अतो विदुषः [५]पुण्यलेपोऽपि नास्तीति निर्णयः।

## [६]अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

पूर्वत्र विदुषः पुण्यपापयोरुत्तरपूर्वयोर्विद्याहेतुकावश्लेषविनाशौ निरूपितौ। इह प्रारब्धकार्ययोस्तयोः स्थितिरस्ति नवेति संशयः। 'सर्वे पाप्मानः प्रदूयंत' इत्यविशे-

---

१ इतराधिकरणारंभः। २ पूर्वोत्तरकालिकः। ३ पूर्वोत्तरकालिकः। ४ पूर्वोत्तरकालिकस्यापि। ५ पूर्वोत्तरकालिकोऽपि। ६ अनारब्धकार्याधिकरणारंभः।

पश्रवणान्नास्तीति पूर्वः पक्षः। सिद्धांतस्तु विद्याधिकृतेर्नरस्य पूर्वे पूर्वकृते अनारब्धकार्ये फलप्रदानायाप्रवृत्ते पुण्यपापे एव विद्यया विनश्यतः नतु प्रारब्धे पुण्यपापे। कुतः तदवधेः-तस्य तावदेव चिरं यावन्न विमोक्ष्ये इति तयोः शरीरपातावधिः श्रूयते; अतः प्रारब्धयोः पुण्यपापयोर्यावदायुर्न विलयः 'मुक्तोपि तावद्बिभृयात्स्वदेहं प्रारब्धमश्नन्नभिमानशून्य' इति, 'तत्तेऽनुकंपां मुसमीक्षमाणो भुंजान एवात्मकृतं विपाकमि'त्यादिस्मरणाच्च ।

[3]अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

पूर्वत्र विदुषः पुण्यपापाश्लेषविनाशौ विद्यानिमित्तौ निरूपितौ। यावदायुषमुपासनावृत्तिरप्युपपादिता। इह पुनरग्निहोत्राद्यनुष्ठानमपि यावच्छरीरपातमनुवर्त्तते उत मध्ये विच्छिद्यत इति विचारः। किं प्राप्तम्-अग्निहोत्रादिकमाप्रायणं नानुष्ठेयम्। अनुष्ठितस्यापि तस्य फलानुसंधानहीनत्वेन नाशाभ्युगमात्, अप्रयोजने तत्करणे कस्य मनः प्रवर्त्तते इति पूर्वपक्षे प्राप्ते सिद्धांतं ब्रूमः—गृहिणाऽग्निहोत्रादिकं प्रवृत्तं त्यागिना च तपोजपज्ञानध्यानादिकं निवृत्तं च कर्माप्यामरणमनुष्ठेयं तत्कार्यायैव विद्यारूपप्रयोजनसंपादनायैव; कुतः तद्दर्शनात्-तथाहि दृश्यते 'तमेवं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेने'त्यादि। अत्र वेदानुवचनं वेदाभ्यासः-नारायणप्राप्तिसाधनपरमज्ञानहेतूनां अध्यात्मवादिनां वेदमंत्राणां जपावृत्तिः, एतेषां नारायणपराणां वेदमंत्राणां पापक्षयद्वारा परमज्ञानहेतुत्वेन मोक्षसाधनत्वावगमात् तदभ्यासः कर्त्तव्यो विद्यावतापि यावज्जीवम्; एवमग्निहोत्रादीनामपि यज्ञानां नारायणसमर्पितफलानां तदाज्ञासिद्धत्वात् तदाराधनरूपत्वाच्चाभ्यासः कार्यः। एवं दानादीनामपि, तस्माद्विदुषापि विद्यानिष्पत्तिकार्यायाग्निहोत्रादिकमनुष्ठेयमिति; कर्म तपोजपध्यानज्ञानरूपं नारायणोपासनम्; तत्र कर्माग्निहोत्रादिकं तपो नियमः कायशोषणं वा जपो नारायणनामप्रणवतन्मंत्राद्यावृत्तिः। एतेषां पापशोषणद्वारा मोक्षहेतुत्वं, ध्यानज्ञानयोस्तु साक्षाद्ब्रह्मस्वरूपप्राप्तिहेतुत्वम्; अतः सर्वेषामेषामनुष्ठानं कार्यम्। ननु यद्यग्निहोत्रादि साधुकृत्या विद्योत्पत्त्यर्था तदन्या च, पूर्वकृता साधुकृत्या विद्यारंभे सति विद्यया विनष्टा तर्हि 'सुहृदः साधुकृत्यामित्यस्य को विषय इत्याशंक्याह—

१ जन्मांतरसंचिते अस्मिन्नपि च जन्मनि प्राक् ज्ञानोत्पत्तेः संचिते सुकृतदुःकृते विद्याधिगमात्क्षीयेते न त्वारब्धकार्ये सामिभुक्तफले याभ्यामेतद्ब्रह्मविद्यायतनं जन्म निर्मितम्। २ तस्मादनारब्धकार्ययोरेव सुकृतदुःकृतयोर्विद्यासामर्थ्यात् क्षय इति निर्णयः। ३ अग्निहोत्राद्यधिकरणारंभः। ४ वेदमंत्राभ्यासः।

## अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अतो विद्यानिष्पत्त्यर्थाग्निहोत्रादिसाधुकृत्योया अन्या प्रबलकर्मांतरप्रतिबद्ध-फला साधुकृत्या भवति । सा च विद्यानुगुणान्नारोग्यचित्तशुद्ध्यादिजननयोग्यतया विद्यानुगुणफलत्वात् विद्ययाप्यविनष्टा अपि समुच्चये तेन समुच्चिता उभयोर्विद्याधिगमात्पूर्वोत्तरकालयोः कृता श्रीहरितदीयजनातिद्रोहरूपा विद्ययाप्यविनष्टा तयाऽनारब्धफला अत्यधिकपापापरपर्यायभूता या चासाधुकृत्या वर्त्तते तद्विषयमेकेषां शाट्यायनशाखिनां वचनं 'तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां दुर्हृदः पापकृत्यामि'ति ।

## [3]यदेव विद्ययेति हि ॥ १८ ॥

'यदेव विद्यया करोती'त्यत्रोद्गीथविद्यया सह कृतस्याग्निहोत्रादिशुभकर्मण इतरकर्मफलेनाप्रतिबंधकतया वीर्यवत्तरत्वोक्तेः प्रबलकर्मांतरेण तदितरकर्मणां फलप्रतिबंधसद्भावोऽवगम्यते । अतो विद्यावतो विद्यानुगुणकर्मणां फलप्रतिबंधोच्छेदायाप्यग्निहोत्रादिकमनुष्ठेयमिति भावः ।

## [5]भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ १९ ॥

इह विद्यावतामधिकारपदे[6] स्थितानां वसिष्ठादीनामधिकारे समाप्ते सति मुक्तिफलमस्तीतरथा वेति संशये यावदधिकारं प्रारब्धकर्मभोगाय प्रयोजनवशाद्बहुजन्मस्वीकारे पूर्वार्जितविद्यालोपः स्यात्, पूर्वार्जितविद्यायां च लुप्तायां सत्यां यत्कर्म क्रियते तदपि फलभोगहेतुर्भवति, अतो जन्मपरंपरायाः संभवान्न तेषां मुक्तिरिति पूर्वपक्षे प्राप्ते सिद्धांतं ब्रूमः—तु शब्दः पूर्वपक्षं व्यावर्त्तयति । इतरे आरब्धफले पुण्यपापे कर्मणी तत्फलभोगेन क्षपयित्वा अथ तत्फलभोगसमाप्त्यनंतरं ब्रह्मविद्यावान्पुरुषः ब्रह्म संपद्यते प्राप्नोति । ते चारब्धे पुण्यपापे एकशरीरे भोग्यफले स्यातां चेत्तर्हि तु तच्छरीरावसानेनाधिकारसमाप्तौ ब्रह्मविद्ब्रह्म संपद्यते ते चानेकशरीरभोग्यफले चेत्तर्हि त्वनेकशरीरावसा-

१ निष्कामकर्मरूपाया इति शेषः । २ काम्यशुभकर्मरूपेति शेषः । ३ पूर्वोक्तमनुष्ठितस्यापि कर्मणः फलप्रतिबंधसंभवं सूचयन्नाह । ४ तस्मादुद्गीथविद्यासहकृताग्निहोत्रादिशुभकर्मणः सकाशादितरकर्मणाम् । ५ इतरक्षपणाधिकरणारंभः । ६ सांप्रतं प्रारब्धकर्मनिवृत्तिप्रकारं वक्ति । ७ वसिष्ठादीनाम् । ८ ययोः पुण्यपापयोरश्लेषविनाशावुक्तौ ताभ्यामितरे । ९ आरब्धपुण्यपापे ।

नेनाधिकारसमाप्तौ सोऽधिकारी वसिष्ठादिर्ब्रह्म संपद्यते, तयोरारब्धफलयोः कर्मणोर्भोगेनैव क्षपयितव्यात्; तस्य तावदेव चिरं यावन्न विमोक्ष्य इति भोगेन तयोः कर्मणोर्मोक्ष उक्तः। अनेन प्रकारेणाधिकारिकवसिष्ठादीनां तयोर्देहावधिनियमाश्रवणात् यावदधिकारमवधिनियमः, तत उपलब्धब्रह्मविद्यायाः पूर्वानुष्ठितमभुक्तफलमनारब्धफलं च पुण्यपापरूपमनादिकालार्जितमसंख्यं कर्म ब्रह्मविद्यामाहात्म्याद्विनश्यति, विदुषां विद्यारंभोत्तरकालेऽनुष्ठितं कर्म च न श्लिष्यति; तच्च न विद्यालोपहेतुः, अतस्तेषां मुक्तिरेव तत्र पुण्यरूपं सर्वं विदुषां सुहृदो गृह्णंति पापं च द्विषंत इति निर्णयः। आधिकारिकाणां वसिष्ठादीनां तु सुषुप्तिव्यवधानवन्मरणव्यवधानं न विद्यालोपहेतुरिति सिद्धम्। प्रत्यक्षपुरुषोत्तमानन्योपासकानामाधिकारिकाणां तु पुरुषोत्तमेच्छैव नियामिका नतु प्रारब्धकर्मफलभोगनियामकः पुरुषोत्तमेच्छाया नियामकाभावादित्यपि पक्षांतरनिर्णयः।

इति श्रीशुद्धैकान्तधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाऽभिप्रायबोधके द्वैपानीयशारीरकसूत्रभाष्यरत्ने चतुर्थाध्यायस्य प्रथमपादः समाप्तः ॥ १ ॥



## चतुर्थाध्याये द्वितीयपादः

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

### अतएव च सर्वाण्यनु ॥ २ ॥

पूर्वमुपासकस्योपासनव्यवस्थानादिकमुक्तम्। इह पादेऽस्य शरीरादुत्क्रांतिर्निरूप्यते। 'अस्य सौम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामि'ति श्रुतौ गच्छतो जीवस्य वागादीनां मनसि लयोऽवगम्यते। लयोऽयमुपपन्नो नवेति संशयः। किं प्राप्तं कार्यस्य सुपादाने लयः, एतन्न्यायस्य मृद्घटादौ व्याप्तिदर्शनात् वागादीनां प्रधानमुपादानं न मनः। अतः अस्मिन्नेव तेषां लयो युक्त इति पूर्वपक्षे प्राप्तेऽभिधीयते-'अस्य सौम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यत' इतीं-

१ विद्याधिगमात्काले उपार्जितं विद्यानुगुणं विद्ययाप्यविनष्टं पुण्यरूपम्। २ विद्याधिगमात्पूर्वकालिकं भगवत्तदीयजनातिद्रोहोत्पन्नं ब्रह्मविद्ययाप्यविनष्टमत्यधिकपापम्। ३ अधिकरणानि १३ सूत्राणि १९। ४ उपासकस्य। ५ म्रियमाणस्य। ६ प्रधाने एव।

द्रियैर्मनसि संपद्यमानैरिति च शब्दाद्वचनादुत्क्रांतौ मनसः प्रागेव वागादीनामुपरम-दर्शनाच्च वाङ्मनसि प्रथमं संपद्यते; अतएव तदनु सर्वाणींद्रियाणि च मनसि संपद्यंते। यदुक्तमुपादान एव लय इति तत्र स्वरूपलयस्यैवोपादानापेक्षा, वागादीनां मनसि न स्वरूपलय उच्यते, किंतु वृत्तिलयः। यथा जलमध्ये क्षिप्तस्यांगारस्य प्रकाशादिवृत्तिलयः तथानुपादानेऽपि मनसि वागादीनां वृत्तिलयो युक्त एव। वृत्ति-मतो वागादेर्लयश्रवणेन वृत्तिलयो लक्ष्यते, वृत्तिवृत्तिमतोरभेदोपचारात्।

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

मनः प्राण इति वागादिसर्वेंद्रिययुक्तस्य मनसः प्राणे लयः श्रूयमाणः कीदृश इति संशयः। वागादीनामनुपादाने मनसि वृत्तिलयोऽस्तु, मनसस्तु प्राणे स्वरूपलय एव, तस्य प्राणोपादानकत्वात् 'अन्नमयं हि सोम्य मन आपोमयः प्राण' इति श्रुतेर-न्नमयत्वेन पार्थिवस्य मनसो जलमयत्वेनोपादाने प्राणे स्वरूपलयस्याविरोधात्तस्य प्राणे स्वरूपलय एवेति पूर्वः पक्षः। सिद्धांतस्तु पूर्ववन्मनसोऽपि प्राणे वृत्तिलय एव। तथा सूत्रार्थेनोच्यते-तत्सर्वेंद्रिययुक्तं मनः स्ववृत्त्यैव प्राणे संपद्यते, कुतः उत्तरात्-मनः प्राणे प्राणस्तेजसीत्युत्तरवाक्ये मनःप्रभृतीनामुत्तरोत्तरेषु संपत्तिश्रवणात्। तथा सति न स्वरूपलयः प्राणस्य मुख्योपादानत्वाभावात् मनसस्तत्र स्वरूपलयानुत्पत्तेः, प्राणे मनसो वृत्तिलय एव न्याय्यः।

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

पूर्वत्र सर्वेंद्रिययुक्तस्य मनसः प्राणे लयः प्रतिपादितः। इह तस्य प्राणस्य कुत्र लय इति संशयः। किं प्राप्तं प्राणस्तेजसीति श्रुतेः प्राणस्य तेजसि लय इति पूर्वपक्षे प्राप्ते सिद्धांतं ब्रूमः—स प्राणः अध्यक्षे जीवे संपद्यते न तस्य तेजसि लयः, कुतः तदुपगमादिभ्यः—'एवमेवेममात्मानमंतकाले सर्वे प्राणा अभिसमायांती'त्यादिश्रुतिषु तस्य जीवोपगमनादिश्रवणात्। एवं च सति प्राप्तं प्राणस्तेजसीति श्रुतिविरोधं परिहरति—

## भूतेषु तच्छ्रुतेः ॥ ५ ॥

प्राणस्तेजसीत्यत्र भूतांतरसंसृष्टतेजोऽभिधानश्रवणात् प्राणो जीवेन सह भूतेषु संयुज्यत इति न विरोधः।

---

१ वागनु। २ लयवाक्ये। ३ मनसः। ४ मनसः। ५ प्राणे। ६ प्राणेंद्रियाधिपे। ७ स्ववृत्त्येति शेषः। ८ प्राणस्य। ९ प्राणस्य। १० ननु प्राणस्तेजसीत्यत्र केवलस्य तेजस एव श्रवणाद्भूतांतरसंसृष्टतेजोऽभिधानमिति युक्तमिति चेत्तत्राह।

## नैक[1]स्मिन्दर्शयतो हि ॥ ६ ॥

न तेजोमात्रे प्राणलयः त्रिवृत्करणश्रुतिः तदंतरप्रतिपत्तौ रंहतीति सूत्रं च हि यतस्तेजःप्रभृतीनांभूतांतरसंसृष्टिं दर्शयतः। अतो भूतेषु जीवेन सह प्राणः संपद्यत इति न श्रुतिविरोधः।

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

इह निरूप्यमाणोत्क्रांतिरर्चिरादिगत्युपक्रमात् प्राग्विद्वदविदुषोस्समाना उत भिन्नेति संशयः। किं तावत्प्राप्तं संसारफलस्य मोक्षफलस्य चातिवैषम्यादज्ञानिज्ञानिनोरसदृश्येवोत्क्रांतिरित्येवं प्राप्ते ब्रूमः-आसृत्युपक्रमात्-अर्चिरादिमार्गोपक्रमात् प्राग्विद्वदविदुषोस्समानैवोत्क्रांतिः, ज्ञानिनस्तु अनुपोष्य च-उपासनारंभपरिकररूपं सूक्ष्मशरीरेंद्रियादिसंबंधमदग्ध्वैव मूर्द्धन्यनाड्या निष्क्रांतिरमृतत्वं च नेतरस्येति वैषम्यम्। 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका, तयोर्ध्वमापन्नमृतत्वमेति विष्वङ् अन्या उत्क्रमणे भवंती'तिश्रुतेरतः प्रागुत्क्रांतिः समानैव।

## तदाऽपीतेः संसारव्यपदेशात् ॥ ८ ॥

पूर्वमुपपादिता मूर्धन्यनाड्या विदुष उत्क्रांतिस्ततोऽर्चिरादिगतिरिति, इह देहादुत्क्रांतस्य विदुषोऽर्चिरादिगतिरुपपद्यते नवेति संदेहः।'यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि स्थिताः, अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इति देहपातानंतरमेवामृतत्वं श्रूयते, तेऽर्चिषमभिसंभवंतीत्यर्चिरादिगतिश्च श्रूयते। एवमुभयश्रवणात् अयं संदेहः। तत्र ब्रह्मणि लीनानां वागादीनां पुनरुत्पादनासंभवान्मुक्तस्य गत्यनुपपत्तेरर्चिरादिगतिर्न मुक्तात्मनामिति प्राप्ते सिद्धांतः—तस्योत्क्रांतस्य विद्यावतः आपीतेरर्चिरादिना ब्रह्मप्राप्तेः प्राक् संसारव्यपदेशात्—शरीरसंबंधव्यपदेशाच्च संसारापगमः। अमृतत्ववचनमासन्नामृतत्वाभिप्रायम्; अत उत्क्रांतस्यार्चिरादिगतिरुपपन्ना। यदुक्तं वागादिविलयात्तस्य गत्यनुपपत्तिरिति तत्राह—

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

शरीरादुत्क्रांतस्यापि सूक्ष्मशरीरमनुवर्त्तते; अन्यथा चंद्रसंवादाद्यनुपपत्तिः। कथमिदमवगम्यते? प्रमाणेन तथोपलभ्यते, श्रूयते हि पर्यंकविद्यायां देवयाने पथि वि-

---

१ तेजसा सूक्ष्मात्मतया संसृष्टेषूत्तरशरीरारंभकेषु। २ सुषुम्णानाडीप्रवेशनात्प्रागित्यर्थः। ३ संदेहः। ४ अथ मर्त्योऽमृतो भवत्यत्रेत्यादिकम्। ५ विदुषः। ६ विदुष इति शेषः।

दुपः चंद्रमसा संवादः 'ये वै के चास्माल्लोकात्प्रयंति चंद्रमसमेव ते सर्वे गच्छंती'त्युपक्रम्य 'एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चंद्रमाः तं यः प्रत्याहतमतिसृजते अथ य एतं न प्रत्याहतमिह वृष्टिर्भूत्वा वर्षति स इह कीटो वा पतंगो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान्वा पुरुषो वा अन्यो वै तेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यं तमागतं पृच्छति कोऽसीति प्रतिब्रूयादि'त्यादि । अतः[1] शरीरादुत्क्रांतस्य विदुषोऽर्चिरादिगतिरुपपन्ना ।

## नोपमर्देनातः ॥ १० ॥

अत 'उक्तन्यायादथ मर्त्योऽमृतो भवति' इत्यमृतत्ववचनं स्थूलदेहसंबंधोपमर्देन तदानीमेवामृतत्वं न वदति किंतु सूक्ष्मदेहेनार्चिरादिगत्यनंतरं तत्संबंधत्यागेन वै ।

## [2]अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

अस्य सूक्ष्मशरीरस्य स्थूलदेहे विद्यमानत्वोपपत्तेश्च जीवे ह्युत्क्रांते सति सूक्ष्मशरीरगुणस्योष्मणः स्थूलदेहेऽनुपलब्धिः, अत उत्क्रामतो विदुषोऽपि[3] स्थूलदेहे ऊष्मा नोपलभ्यते एव । जीवेन सह सूक्ष्मशरीरगमनाभावे तु स्थूलदेहेऽप्यूष्मोपलब्धिर्भवेत् [4]तत्रोष्मलब्ध्यभावात् विद्वान् सूक्ष्मशरीरेणोत्क्रामति ।

## प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ १२ ॥

बृहदारण्यके 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामंतं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंती'त्यादिवाक्यैरविदुषोऽपि उत्क्रांत्यादिप्रकारमभिधायेति तु कामयमान इत्यविद्वद्विषयं वचनं परिसमाप्य अथवा 'कामयमानो योऽकामो निष्कामति आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामंति ब्रह्मैव सन् ब्रह्माप्येती'ति विदुषः प्राणोत्क्रांतिप्रतिषेधाद[5]त्रैव ब्रह्मप्राप्तिरिति चेन्न, विदुषः शरीरादुत्क्रममाणस्यार्चिरादिगमनाय प्रस्थितस्य प्राणास्तस्माच्छरीराज्जीवान्न विश्लिष्यंते इति ह्युच्यते ।'न तस्य प्राणा उत्क्रामंती'त्यस्यार्थ एकेषां माध्यंदिनानां शाखायां स्पष्टोऽभिधीयते—योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामंतीति ।

---

१ सूक्ष्मशरीरसत्वात् । २ विदुषः स्थूलशरीरोत्क्रांत्यनंतरमपि सूक्ष्मशरीरसत्वांगीकारात । ३ सूक्ष्मदेहसद्भावे ह्युष्णताचिह्नकमनुमानं वक्ति । ४ स्थूलदेहे । ५ अमृतत्वसाधनपूर्वकोपासनवेलायामेव ।

## स्मर्यते च ॥ १३ ॥

विदुषो मूर्द्धन्यनाड्या गमनं स्मर्यते 'ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमंडलम्, ब्रह्मलोकमतिक्रम्य तेन याति परां गतिमि'ति। अतोऽर्चिरादिगतिरुपपद्यते विदुष उत्क्रांतस्य। केचिदिहैवाक्षरब्रह्माख्यस्थानस्थितपुरुषोत्तममूर्त्तिं सततं पश्यतामुपासीनानां शरीरपात एव मोक्ष इत्यर्चिरादिगत्यनियमतामाहुः। एतत्प्रतिपादिकापीयं श्रुतिः 'न तस्य प्राणा उत्क्रामंति ब्रह्मैव सन् ब्रह्माप्येती'ति; तथाऽन्यत्रापि श्रूयते 'तस्य प्राणा नोत्क्रामंति तत्रैव संविलीयंते विमुक्तश्च विमुच्यते' इति।

## तानि परे तथा ह्याह ॥ १४ ॥

## अविभागो वचनात् ॥ १५ ॥

पूर्वत्र प्राणेंद्रियसहितस्य जीवस्य तेजउपलक्षितेषु भूतेषु लय उपपादितः। इह 'तेजः परस्यां देवतायामि'ति श्रूयमाणो यो भूतांतरसंसृष्टस्य प्राणेंद्रियसहितजीवयुक्तस्य तेजसः परस्यां देवतायां लयः स किं स्वरूपलयः उताविभागापत्तिमात्रमिति संशयः। उपादानकारणत्वात्परदेवतायां तस्य[1] स्वरूपलय इत्येव युक्तमिति पूर्वपक्षे प्राप्ते सिद्धांतयति—अविभागोऽपृथग्भावापत्तिमात्रमिति; तथाहि तदेवोपपादयति विदुष उत्क्रांतिवेलायां विद्यासामर्थ्यादाविर्भूते परे परदेवतापरपर्यायभूते परब्रह्मणि तानि जीवपरिष्वक्तानि वागादींद्रियाणि भूतानि च पृथग्व्यवहारानर्हतया संपद्यंते ननु स्वरूपेण लीयंते इत्याह श्रुतिः 'तेजः परस्यां देवतायामि'ति। नन्वस्यां संपत्तिशब्दानुपलंभात्कथमेवं निर्णीयत इति चेतत्र हेतुमाह-वचनादिति;'तेजः परस्यां देवतायामि'त्युत्तरवाक्येऽपि 'वाङ्मनसि संपद्यत' इति पूर्ववाक्यात्संपत्तिशब्दानुषंगात् संसर्गमात्रवाचकस्यैकस्य संपत्तिशब्दस्यार्थांतरत्वे प्रमाणाभावाच्चैवं निर्णयः। एवं च सति सुषुप्तिप्रलययोर्यथांतर्यामिणा सह संपत्त्या सुखदुःखोपभोगापगमविश्रामस्तथोत्क्रांतिवेलायामपि मनःप्रभृतिवत्तस्य वृत्तिलयरूपविश्राम एवेति तात्पर्यम्।

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १६॥

पूर्वत्र विद्वदविदुषोरर्चिरादिगत्युपक्रमपर्यंतमुत्क्रांतिः समानेत्युक्तम्; निष्क्रमण-

---

१ भूतांतरसंसृष्टजीवसंयुक्ततेजसः।

वेलायामुभयोर्विशेषोऽस्ति नवेति विचार्यते। 'तेजः परस्यां देवतायामि'ति भूतैः सह परदेवे परे ब्रह्मणि महाकाशरूपे विद्वानविद्वांश्च विलीयाविभागेन क्षणं विश्रम्य तिष्ठतीति समभिहितम्; अतः समानैवोत्क्रांतिस्तयोर्हृत्प्रद्योतनादेः समत्वश्रवणात् 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य' इति श्रूयते, अतः समानत्वादुत्क्रांतेस्तयोर्निष्क्रमणसमये ह्यविशेष इति पूर्वपक्षे प्राप्ते विशेषोऽस्तीति सिद्धांत उच्यते-तथाहि हार्दाख्यस्य नारायणस्याराधनरूपविद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च विद्यांगगत्यनुसंधानयोगाच्च हार्दानुगृहीतः-प्रीतेन तेन हार्देन हृदयगतेन सर्वानुग्राहकेण स्वस्वरूपावरणमलध्वंसनविदग्धयानुग्रहदृष्ट्या निरीक्षितः, अतस्तदोकोऽग्रज्वलनं तस्योपासकस्य ओको हृदयम् अग्रे ज्वलनं प्रकाशनं यस्य तथाभूतं भवति। एवं तेन दृग्गोचरेण नारायणेन प्रकाशितद्वारः प्रद्योतितनाडीमार्गो विद्वान् शताधिकया सुषुम्णाख्यया मूर्द्धन्यया नाड्या निष्क्रामति; न तथा नारायणानुग्रहशून्यो ह्यविद्वान् किं त्वल्पप्रकाशयुताभिरितरनाडीभिरेव। तथा च श्रुतिः 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका, तयोर्ध्वमायन्नमृतत्वमेति विष्वङ् अन्या उत्क्रमणे भवंती'ति स एष विदुष उत्क्रमणे विशेषः।एतदुक्तं भवति 'अंतः प्रविष्टः शास्ता जनानाम् एष मे आत्मांतर्हृदय' इत्यादिश्रुतिषु 'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिरि'ति 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'त्यादिस्मृतिषु च सकलजनहृदयगतो हि नारायणोऽत्र गम्यते। स्वेंद्रियवृत्तिभिस्सह हृदये सुषुप्तो जीवो यत्सुखलेशमनुभवति स खलु हृदयगतो हार्दः परब्रह्मपरममंगलस्वरूपः राधालक्ष्मीपतिर्नारायणः परमात्मा स्वाज्ञारूपश्रुतिचोदितेषु कर्मस्वग्निहोत्रादिषु स्वाराधनरूपेषु नियतं निर्मुक्तसकलाविहितकर्मलेपं स्वार्पितसकलकर्मफलं स्वायत्तचित्तं स्वज्ञानामृतपरिपूर्णं निरस्तकाम्यफलं विवेकादिसाधनसंपन्नं स्वभक्तिमात्रैकनिरतं स्वप्रसादाकांक्षिणं विद्यावंतं साधकमवलोक्य शरीरपरित्यागसमये तद्विषयसंपन्नप्रसादस्तस्मिन्संसारमलकलंकापकर्षिणीमनुग्रहदृष्टिं निदधाति। तदनुग्रहविशेषेणासौ विनष्टसकलसांसारिकमलस्तत्प्रद्योतितमूर्द्धन्यनाड्या निर्गत्यार्चिरादिना तदीयं सर्वोत्कृष्टमप्राकृतं निरतिशयानंदं ब्रह्मपुराख्यं पदं प्राप्य तत्समानधर्मा पार्षदो भूत्वा तत्परिचर्यायां नित्यं तिष्ठति। तस्मादविदुषो विदुषश्च गतिवैषम्यमस्तीति युक्तमेव।

---

१ तद्विषय-उपासकसंबंधिसंपन्न उपपन्नःप्रसादोऽनुग्रहो यस्य स उपासकोपरि कृतानुग्रह इत्यर्थः।

## रश्म्यनुसारी ॥ १७ ॥

पूर्वत्र साधकस्य हृदयगतनारायणानुगृहीतस्य मूर्द्धन्यनाड्या निर्गम उक्तः। निर्गतस्य तदूर्ध्वगमनं निशि दिवा चेत्युभयत्र संभवति नवेति संशयः। किं तावत्प्राप्तं 'यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमत' इति समुत्क्रांतस्य भानुरश्मिसंबंधेनोर्ध्वदेशाक्रमणमवगम्यते। रश्मिसंबंधस्तु दिवैव संभवति नतु रात्राविति प्राप्ते ब्रूमः—उत्क्रांतो विद्वान् रश्मिसंबंधादेवोर्ध्वं गच्छतीति सत्यं तत्तु दिवा च रात्रौ च संभवति। निदाघेपूष्मदर्शनेन हेतुना दूरगतस्य ब्रह्मांडस्थस्य सूर्यस्य निश्यपि रश्मिसत्वात् हेमंतादौ तु हिमाभिभवाद्दुर्दिन इवोष्मानुपलंभः, तस्माद्दिवा च रात्रौ च रश्म्यनुसारी गच्छत्यूर्ध्वमिति निर्णयः।

## निशि नेति चेन्न संबंधस्य यावद्देहभावित्वाद्दर्शयति च ॥१८॥

निशि मृतस्यापि विदुषो रश्मिसंबंधेन ब्रह्मप्राप्तिरभिहिता, सा न संभवति। 'दिवा च शुक्लपक्षश्च उत्तरायणमेव च, मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितमि'ति निशामरणनिंदनादिति चेन्न, संसारबंधस्य यावद्विद्या न स्यात्तावद्भावित्वाद्विद्यया प्रारब्धेतरेषु बंधहेतुषु कर्मसु नाशितेष्वनुवर्त्तमानस्य प्रारब्धसंबंधस्यापि यावद्देहभावित्वात् यावच्चरमदेहावसानं तावद्भावित्वात् चरमदेहावसाने प्रारब्धेऽपि नष्टे सति ब्रह्मप्राप्तौ पुनर्विघ्नहेत्वभावात्। तथा दर्शयति श्रुतिः 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य' इति निशादिर्निंदा त्वितराज्ञपुरुषविषया, अतो निश्यपि मृतस्य विदुषो ब्रह्मप्राप्तौ न विरोधः।

## अतश्चायनेऽपि दक्षिणे ॥ १९ ॥

अत एवोक्ताद्बंधहेत्वभावादेव दक्षिणायने मृतस्यापि विदुषो ब्रह्मप्राप्तिरस्त्येव।

## योगिनः प्रतिस्मर्यते स्मार्त्ते चैते ॥ २० ॥

ननु विदुष एव मुमूर्षून् प्रति पुनरावृत्त्यपुनरावृत्तिहेतुत्वेन कालविशेषः स्मर्यते—

---

१ श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः, तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छंतीमं चामुं च अमुष्मादादित्यात् प्रतायंते ( विस्तृता भवंति ) ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायंते तेऽमुष्मिन्नादित्ये सृप्ताः ( संबद्धाः ) इति। २ भीष्मादीनां योगप्रभावात्स्वच्छंदमरणानां धर्मप्रवर्द्धनायोत्तरायणप्राशस्त्यप्रदर्शनार्थाय च तथा प्रतीक्षा।

'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यांति तं कालं वक्ष्यामि भरतर्षभ ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते ॥
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्त्तते पुनः' ॥ इति.

तस्मादविद्वद्विषया निशा दक्षिणायनादिर्निंदेति यदुक्तं तदयुक्तमिति शंक्यते चेत्तत्रोत्तरयति–विदुषामर्चिरादिगतिः तद्विपरीतान्येषामिति योगिनो योगयुक्तान् प्रति योगांगतया प्रतिदिनं स्मार्ते स्मृतिविषयभूते स्मर्त्तव्ये देवयानपितृयानाख्ये एते गती इति स्मर्यते यत्र काले त्वनावृत्तिमित्यादिना, नतु विदुषः प्रति मरणकालविशेषः स्मर्यते; 'नैते पार्थ सृती जानन्योगी मुह्यति कश्चन' 'तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुनेति' उपसंहारात् 'अग्निर्ज्योतिर्धूमो रात्री'ति श्लोकयोर्देवयानपितृयानगतिप्रत्यभिज्ञानाच्च । यत्र काले त्विति कालशब्दस्त्वातिवाहिकगणस्य कालाभिमानिदेवतानां च स्थानभूतमार्गोपलक्षकः । अतः सर्वथा विदुषां ब्रह्मप्राप्तौ निशादक्षिणायनकृष्णपक्षनिषेधो नास्त्येव। यदा देहापगमस्तदानीमेव तत्प्राप्तिरिति सिद्धम्।

इति श्रीशुद्धैकान्तधर्मप्रवर्त्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## चतुर्थाध्याये तृतीयपादः

### अर्चिरादिना तत्प्रथितेः ॥ १ ॥

पूर्वत्रोपासकस्योपासनसामर्थ्याद्धृदयाविर्भूतेन नारायणेन प्रकाशितनाडीमार्गस्य सुषुम्णाख्यया मूर्द्धन्यया नाड्या देहादुत्क्रमणमभिहितम् । एवंभूतस्य विदुषः

१ यस्मिन्मार्गे । २ मार्गम् । ३ इदं द्वयं अर्चिषोऽभिमानिदैवतम् । ४ देवयाने । ५ पितृयाने । ६ अधिकरणानि ८ सूत्राणि २० ।

परब्रह्मप्राप्तिरर्चिरादिना मार्गेणैव उतान्यथापि संभवतीति, प्रथममिह विचिंत्यते। तथाह्येकेत्र 'यत्रासौ केशांतो विवर्त्तते व्यपोह्य शीर्षकपाले भूरित्यग्नौ प्रतितिष्ठति भुव इति वायौ, स्वरित्यादित्ये, मह इति ब्रह्मणि, आप्नोति स्वाराज्यमि'ति ब्रह्मप्राप्ते-रर्चिरादिगतिमंतरेणाप्युपपत्तिरवगम्यते, तस्मात् ब्रह्मप्राप्तौ नार्चिरादिनियम इति प्राप्तेऽभिधीयते-विद्वानर्चिरादिनैव ब्रह्म प्राप्नोति। कुतः, तत्प्रथितेः-पंचाग्निविद्यादिषु 'तेऽर्चिषमभिसंभवंती'त्यादिनोक्ताया अर्चिरादिगतेर्ब्रह्मप्रापकत्वेन प्रसिद्धत्वात्; भूरित्य-ग्नावित्यादिषु न ब्रह्मप्राप्तिमार्ग उच्यते, किंतु तत्तंद्विभूतिप्राप्तिरेव; अतस्तदितरोपास-कानां पुण्यकर्मणां च नार्चिरादिगतिः न परब्रह्मप्राप्तिश्चेति निर्णयः। तथाहि स्मर्यते-

'देवान्देवयजो यांति पितॄन्यांति पितृव्रताः।
भूतानि यांति भूतेज्या यांति मद्याजिनोऽपि माम्' ॥ इति.
'त्रैलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम्।
योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः॥
महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः'। इति.

## वायुमब्दादविशेषाभ्याम् ॥ २ ॥

अत्र श्रुतस्यार्चिरादिक्रमस्य मध्ये श्रुत्यंतरसिद्धक्रमोऽत्रे निवेशनीयः, अथवा अयमेव क्रम इति संदिह्यते।'अर्चिषमभिसंभवंत्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाण-पक्षाद्यान् षडुदङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याचंद्रमसं चंद्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'त्यर्चिरादिक्रमः छांदोग्य-सिद्धः। बृहदारण्यके 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छती'ति ब्रह्मपथे वायुः श्रूयते सं तत्रै पठितयोः संवत्सरादित्ययोर्मध्ये निवेश्यो नवेति संश-

---

१ आनंदवल्ल्युपनिषदि। २ अग्न्यादि। ३ ब्रह्मेतरोपासकानाम्। ४ छांदोग्ये। ५ छांदोग्ये। ६ छांदोग्यसिद्ध एव। ७ यान षण्मासान् सवितोदगुत्तरां दिशमेति गच्छति तान् षण्मासान्। ८ पुरुषोक्तं ध्याता लोकादेहात् प्रैति–तदेति शेषः। तस्मै प्राणाय धात्रे स वायुः तत्र विजिहीते–छिद्रं करोति; यथा रथचक्रस्य खं छिद्रं तेन वायुदत्तेन छिद्रेण द्वारेण ऊर्ध्वमा-क्रमते स ध्याता क ऊर्ध्वस्तमाहादित्यमिति। ९ तस्मै स तत्र विजिहीते यथाडंबरस्य खं तेन स ऊर्ध्व आक्रमते स चंद्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुंदुभेः खं तेन स ऊर्ध्व आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समाः। १० वायुः। ११ छांदोग्ये।

ये न निवेश्योऽश्रवणात् इति प्राप्ते ब्रूमः-गुणोपसंहारन्यायेन तत्रै संवत्सरादूर्ध्वमादित्यात्पूर्वं वायुर्निवेश्यः, बृहदारण्यक एवान्यत्र मासेभ्यो देवलोकं देवलोकादादित्यमि'ति पठितेऽर्चिरादिक्रमे छांदोग्यश्रुतित उपसंहार्यान्मासाधिककालरूपत्वेन मासेभ्य उपरि निवेशनीयात् संवत्सरादुपरि देवलोकः श्रुतः सोऽपि वायुरेव; देवलोकशब्दो देवानां लोक इति व्युत्पत्तेरविशेषेण वायुवाचकोऽस्ति। वायुशब्दश्च तस्यैव वाचक इत्यविशेषविशेषाभ्यां देवलोकवायुशब्दाभ्यां वायुरेक एवाभिहित इत्यब्दादूर्ध्वमादित्यात्पूर्वं वायुं निवेशयेत्। वायुर्देवानामासनभूत इति श्रूयते 'योऽयं पवन एष देवानां गृह' इति।

## तडितोऽधि वरुणः संबंधात् ॥ ३ ॥

कौषीतकिनामुपनिषदि श्रूयते'स एतं देवयानं पंथानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इंद्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमि'ति। तत्राग्निलोकशब्दोक्तस्यार्चिषः प्राथम्यमविरुद्धं श्रुत्यंतरसिद्धश्रौतक्रमेणात्रत्यपाठक्रमबाधात् संवत्सरादूर्ध्वं वायुस्तत ऊर्ध्वमादित्यश्च निवेश्यः। अत्र वरुणादयोऽपि श्रुताः तेऽर्चिरादिमार्गे निवेशयितुं शक्या उत न शक्या इति संशये नियामकाभावादशक्यसन्निवेशा इति प्राप्ते ब्रूमः—नियामकवाक्याभावेऽपि गुणोपसंहारन्यायेन यत्रार्चिराद्यध्वन्यश्रुतानामपि वरुणादीनां निवेशः कार्यः तत्रै विद्युल्लोकस्योपरि वरुणलोकस्य संबंधवशात् व्यवस्था। विद्युत्पूर्वकवृष्टिगतनीरस्य वरुणोऽधिपतिः प्रसिद्ध इति विद्युद्वरुणयोः संबंधः, तदनंतरमिंद्रप्रजापतिलोकौ परिशेषावित्यविरोधः।

---

१ छांदोग्ये। २ यदा वै पुरुषोऽस्मादिति ग्रंथादुत्तरत्र। ३ य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसंभवंत्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासान् मासेभ्यो देवलोकं देवलोकादादित्यं आदित्याद्वैद्युतं वैद्युतात्पुरुषोऽमानवः स एतान् (एत्य) ब्रह्मलोकान् गमयति। ४ स विद्वांस्तत्तल्लोकं प्राप्तस्तत्तल्लोकस्वामिनाऽग्न्यादिना नीयते इत्यर्थः। ५ कौषीतकिश्रुत्युक्तपाठक्रमबाधात्। ६ श्रुत्यंतरे मासेभ्यः संवत्सरं संवत्सरादादित्यमित्यादि छांदोग्यश्रुतौ यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छतीति बृहदारण्यकश्रुत्युक्तवायोर्गुणोपसंहारन्यायेन संवत्सरादूर्ध्वमभिनिवेशतया पुनर्बृहदारण्य एव देवलोकादादित्यमादित्याच्चंद्रमसमिति श्रुत्युक्तदेवलोकशब्दवाच्याद्वायोरूर्ध्वमादित्यस्याभिनिवेशतया च संसिद्धो यः श्रौतक्रमस्तेन। ७ कौषीतक्युपनिषदि। ८ वरुणादीनामर्चिरादिमार्गे निवेशकरणे।

## [1]आतिवाहिकास्तल्लिंगात् ॥ ४ ॥

किमर्चिरादयो मार्गचिह्नभूताः स्थानभेदा उत विदुषां गमयितारो देवताविशेषा इति संदेहः। किं प्राप्तं स्थानभेदा अर्चिरादयः, तच्चिह्नदर्शनात्। लोके हि गेहान्निर्गत्य चतुष्पथं गत्वा ततो नदी गंतव्येति व्यवहारो दृश्यते तद्वदर्चिरादयोऽपि स्थानभेदा इति पूर्वपक्षे प्राप्ते सिद्धांतोऽभिधीयते—आतिवाहिकाः-ज्ञानिहरिभक्तानामतिवाहे—स्वधामप्रापणे नारायणेन नियुक्ताः अर्चिरादिमार्गाभिमानिनो ज्ञानिभक्तानां गमयितारो देवताविशेषाः, कुतः इदमवगम्यते तल्लिंगात्—तेषामातिवाहिकानां लिंगात्-श्रुतिस्मृतिषु ज्ञापनात्। तथाहि 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'ति, 'सूर्यद्वारेण ते विरजाः प्रयांति यत्रामृतः पुरुषो ह्यव्ययात्मे'ति,

'मेरोः शृंगेऽथ विजने शुचिः कृतदृढासनः।
दध्यौ स्वहृदयांभोजे स्वेष्टदेवं रमापतिम् ॥
त्यक्त्वा देववपुः सोऽथ योगधारणया मुनिः।
ततः सूक्ष्मशरीरेण प्राप भास्करमंडलम् ॥
यदाहुर्नैष्ठिकानां च मुक्तिद्वारं हि योगिनाम्।
तत्तेजोदग्धसूक्ष्मांगः सद्वि पोऽतिनिर्मलः ॥
स बभूव महाभागः संक्षीणाशेषवासनः।
ततस्तन्मंडलगतैरातिवाहिकदैवतैः ॥
स निन्ये वैष्णवं धाम श्वेतद्वीपाख्यमद्भुतम्।
स हि द्वीपो भुविस्थोऽपि भवत्यप्राकृतो मुने ॥
हरिभक्तजनावासः प्राप्य एकांतभक्तिभिः।
स गोलोकब्रह्मपुरवैकुंठानां च सुव्रत ॥
द्वारभूतोऽस्ति भक्तानां तल्लिप्सूनां महात्मनाम्।
यस्य यद्धाम्न इच्छा स्यात्तद्व्रजतस्तं तदेव ।ह ॥
प्रापयंति श्वेतमुक्ता मुने प्रागुक्तलक्षणाः।'

इत्यादिश्रुतिस्मृतिष्वेकेन विद्युत्पुरुषगमयितृत्वलिंगेनान्येषामर्चिरादिमार्गाभिमानिनामातिवाहिकसंज्ञदेवताविशेषाणामपि गमयितृत्वमेव संबध्यते इति निश्चय उत्पन्नः। ननु विद्युत्पुरुषस्यैव ब्रह्मगमयितृत्वश्रवणात्ततः परेषां वरुणादीनां तन्न युक्तमिति शंक्यते च तत्रोत्तरमाह—

---

१ एवमर्चिरादीनां क्रमं निरूप्य तेषामेव स्वरूपं निरूपयति।

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

वैद्युतेन—विद्युल्लोकमागतेनामानवेनातिवाहिकगणस्थेन देवताविशेषेणैव ततो विद्युल्लोकादूर्ध्वं नीयमानाः कृष्णोपासकाः परब्रह्म प्राप्नुवंति, कुतः तच्छ्रुतेः-तस्मिन्नर्थे 'तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयती'ति श्रुतेः। वरुणादीनां तु तदनुग्राहकत्वेन[1] गमयितृत्वमिति न विरोधः। स एतान् ब्रह्म गमयतीत्यत्र शंकयन्नाह—

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥

किममानवः पुरुषोऽर्चिरादिमार्गेण कार्यभूतहिरण्यगर्भाख्यब्रह्मोपासीनान् तद्गमयति उत परब्रह्मोपासीनान् तन्नयति अथवा शुद्धजीवात्मस्वरूपं निरवयवं ब्रह्मरूपत्वेन तदुपासकान् गमयतीति संदेहे पूर्वः पक्षः—कार्यभूतं हिरण्यगर्भाख्यं ब्रह्म तदुपासकान् गमयति; कुतः अस्य गत्युपपत्तेः-अस्य हिरण्यगर्भाख्यब्रह्मोपासकस्यैवार्चिरादिमार्गे[2] गतिरुपपद्यते नतु सर्वगतस्य परब्रह्मणः प्राप्तये तदुपासकानां तत्रै गतिरुपपद्यते, नित्यं सर्वत्र तत्प्राप्तेः[3], अतोऽविद्यानिवृत्तिरेव परब्रह्मोपासकैः कार्या। उत परब्रह्मोपासीनान् तन्नयतीत्यपरपक्षे स एनान् ब्रह्म गमयतीति परब्रह्मप्राप्तिरेवोचितार्चिरादिमार्गेण ब्रह्मशब्दस्य परब्रह्मण्येव प्रधानत्वात्। तथाहि अविद्यानिवृत्तेः फलानुसंधानहीनाग्निहोत्रादियज्ञकर्मापेक्षावच्छ्रवणमननाद्यपेक्षावच्चोपासकानां परब्रह्मणः सर्वोत्कृष्टत्वदर्शनाय गतिश्रुत्यभिहितस्य[4] देशविशेषस्य दर्शनापेक्षा विद्यते इति निश्चयः। तृतीयपक्षो यथार्थनिर्णयश्च सिद्धांतेनोच्यते। परब्रह्मोपासकानन्यानपि[5] अर्चिरादिमार्गे नयति 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवंती'ति पंचाग्निविदां परब्रह्मोपासीनानां चाभेदेनार्चिरादिगतिश्रुतेः पंचाग्निविद एव हि प्रकृतिवियुक्तशुद्धजीवात्मस्वरूपभूतब्रह्मविदः। ते च तदेव[6] प्राप्य न पुनरावर्त्तंते परब्रह्मोपासीनाश्च यथावस्थितं परं ब्रह्म प्राप्य न पुनर्निवर्त्तंते इत्थमुक्तानुभयविधानभेदेनोपादाय 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवंती'त्यर्चिरादिगतिश्रुतेः 'एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तंत' इत्यपुनरावृत्तिश्रुतेश्चापुनरावृत्तिं गतानामुभयविधानां तेषामुक्तम-

१ कृष्णोपासकानुग्राहकत्वेन; अनुग्राहकत्वं नाम तन्मार्गांतराले अप्रतिबंधकरणं साहाय्यानुष्ठानं च। २ अर्चिरादिमार्गे। ३ परब्रह्मलब्धेः। ४ अर्चिरादिगतिः। ५ ब्रह्मात्मकतया शुद्धात्मोपासकानपि। ६ प्रकृतिवियुक्तशुद्धजीवात्मस्वरूपमेव।

कारेण प्राप्यभेदो निश्चीयते। यथार्थतया सूत्रार्थो वर्ण्यते-कार्यं हिरण्यगर्भाख्यं ब्रह्म तदुपासीनानातिवाहिकदेवगणो गमयतीति बादरिराचार्यो मन्यते। अस्यं तत्रैवं गत्युपपत्तेः परब्रह्मोपासकानां तु न तत्प्राप्तये अर्चिरादिगतिरुपपद्यते परब्रह्मणः सर्वगतत्वात् ।

## विशेषितत्वाच्च ॥ ७ ॥

'पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयती'ति श्रुत्यंतरे लोकानिति बहुवचनेन निजलोकसहितहिरण्यगर्भाख्यवैराजब्रह्मणो ग्रहणात् प्रजापतेः सभां वेश्म प्रपद्य इत्यत्राप्यर्चिरादिना तत्समीपगमनेन प्राप्यलोकस्य विशेषितत्वाच्च हिरण्यगर्भाख्यं वैराजपदमेव सगणो गमयति । हिरण्यगर्भशब्दस्य वैराजवाचकत्वे श्रुतिः-'हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीदि'ति ।

## सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥

'यो ब्रह्माणं विदधाती'ति हिरण्यगर्भब्रह्मणि पुंल्लिंगनिर्देशात् तत्राघटमानः 'स एनान् ब्रह्म गमयती'ति नपुंसकव्यपदेशस्तु परब्रह्मावतारत्वेन तत्सामीप्योद्भवति। 'जगृहे पौरुषं रूपं भगवान् महदादिभिरि'ति प्रथमावतारत्वस्मरणादस्यं तत्-सामीप्यमवगम्यते ।

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥

उपासकानां प्रथमं हिरण्यगर्भपदप्राप्तावपि तेषामपुनरावृत्तिश्रुतिर्न विरुध्यते; तदेव सूत्रार्थेनाह-कार्यात्यये-हिरण्यगर्भलोकरूपकार्यात्यये तदध्यक्षेण सह-तस्य लोकस्याध्यक्षेण हिरण्यगर्भाख्यवैराजब्रह्मणा सह अतः कार्यभूततल्लोकात्परं ब्रह्मपुराख्यं परमं पदं ते गच्छंति; कुत इदमवगम्यते तथाभिधानात्-'ते ब्रह्मलोके तु परांतकाले परामृतात्परिमुच्यंति सर्वे' इति श्रुतौ तथाभिधीयते, अतो न विरोधः ।

## स्मृतेश्च ॥ १० ॥

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यांते कृतात्मानः प्रविशंति परं पदम्' ॥

---

१ हिरण्यगर्भाख्यब्रह्मोपासकस्य । २ अर्चिरादिमार्ग एव । ३ तदैक्यात् । ४ हिरण्यगर्भब्रह्मणः । ५ परब्रह्मसामीप्यम् । ६ हिरण्यगर्भोपासकानाम् । ७ प्रतिसंचरो महाप्रलयः तस्मिन्प्राप्ते परस्य हिरण्यगर्भस्य अंतोऽधिकारसमाप्तिस्तदा कृतात्मानः शुद्धधियो ब्रह्मलोकवासिनः परं पदं प्राप्नुवंतीति योजना ।

इति स्मृतेरप्येवमवगम्यते, अतो हिरण्यगर्भपदमर्चिरादिगणो नयति प्रथमं ततः प्रलये परंब्रह्म प्राप्यते तेन सहेति।

## परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥

परं ब्रह्म तदुपासितॄनातिवाहिकदेवगणो गमयतीति जैमिनिर्मन्यते; कुतः मुख्यत्वात्—'स एनान् ब्रह्म गमयती'ति ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात्। ब्रह्मलोकानिति ब्रह्मलोकशब्दश्च निपादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्तत्वात्तत्रैवोपपद्यते। एवं च निर्णीते बहुवचनमदितिः पाशानितिवदुपयुक्तं तत्रोपपत्तिमाह—

## दर्शनाच्च ॥ १२ ॥

'सोऽध्वनः पारमाप्नोति, तद्विष्णोः परमं पदमि'ति तत्पदस्य प्राप्यत्वं दृश्यते; 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति तत्स्वरूपप्राप्त्यनंतरमुपासकस्य स्वस्वरूपाविर्भावश्च दृश्यते, अतश्चातिवाहिकदेवगणोऽर्चिरादिना मार्गेण परब्रह्मैव गमयतीति निर्णयः।

## न च कार्ये प्रत्यभिसंधिः ॥ १३ ॥

प्रजापतेः सभां वेश्म प्रपद्य इति यदुक्तं तत्रोत्तरं—कार्ये—कार्यभूते हिरण्यगर्भाख्ये वैराजब्रह्मणि नायं प्रत्यभिसंधिरनुसंधानं किंतु परब्रह्मण्येव; कुतः 'यशोऽहं संभवामि ब्राह्मणानामि'ति तद्वाक्यशेषे श्रीहरितदेकांतिकव्यतिरिक्तसर्ववस्तुषु सर्वथा रागप्रहाणपूर्वकतद्विषयसर्वात्मकभावानुसंधानात् 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमि'ति तत्रैवाकृतं ब्रह्मलोकमिति विशेषितत्वेन तल्लोकस्यानादिसिद्धत्वश्रवणाच्च; अत उपासकान् परब्रह्मैव गमयत्यर्चिरादिमार्गेणातिवाहिको देवगण इति जैमिनिमतम्। सांप्रतं भगवान् बादरायणः स्वमतं स्वसिद्धांतेन ब्रवीति—

## अप्रतीकालंबनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥

स गणः केवलं कार्यभूतं हिरण्यगर्भाख्यं वैराजब्रह्मोपासितॄन्नयतीति पक्षो न संभवति, केवलं परब्रह्मोपासकान् नयत्यपि नियमो न भवति; कुतः उभयथा च

---

१ हिरण्यगर्भेण। २ परब्रह्मण्येव। ३ स एतान् ब्रह्म गमयतीति ब्रह्मशब्दस्य परब्रह्मणि प्रवृत्तौ। ४ युक्त्यंतरम्। ५ प्रजापतेः सभामिति श्रुतिवाक्यशेषे। ६ श्रीहरिविषय। ७ प्रजापतिः सभामिति श्रुतिप्रकरणे। ८ ब्रह्मलोकस्य। ९ अर्चिरादिः।

दोषात्। तथाहि केवलं कार्यभूतं हिरण्यगर्भाख्यवैराजब्रह्मोपासितॄन्नयतीति पक्षे 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्यादिश्रुतयः, ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवंती'ति प्रदूष्येयुः। केवलं परब्रह्मोपासकान्नयतीत्यपि नियमे 'तद्य इत्थं विदुरि'ति पंचाग्निविद्योदितशुद्धात्मस्वरूपप्राप्तिबोधनपरागतिश्रुतिः प्रदूष्येत् तस्मादप्रतीकालंबनान्-अप्रतीकम् अंगभूतहिरण्यगर्भादिदेवतेतरन् मूर्त्तिमदंगि परब्रह्म आलंबंते उपासते इति तथाभूतान् परब्रह्मोपासीनान्; पक्षांतरे अप्रतीकं निरवयवं प्रकृतिविनिर्मुक्तं शुद्धात्मस्वरूपमालंबंते उपासते इति तथाभूतान् केवलात्मनिष्ठान्; एवमुभयविधांस्तानातिवाहिको देवगणस्तत्तदुपासकान् तत्तन्नयतीति भगवान् बादरायणो मन्यते। प्रतीकालंबनास्तु अचेतनमिश्रं केवलं हिरण्यगर्भादिदेवतांतरं सिंहो देवदत्त इतिवद्ब्रह्मदृष्ट्योपासते; उपासनसिद्धौ तत्तद्देवतांतरं प्राप्नुवंति; ते च पुनरावर्त्तंते, परब्रह्मोपगताः शुद्धात्मस्वरूपोपगताश्च न पुनरावर्त्तंते इति बादरायणमतम्। 'तद्य इत्थं विदुर्ये चेमेरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवंती'ति श्रुतेः परब्रह्मोपासकानां निरवयवशुद्धात्मस्वरूपनिष्ठानां चार्चिरादिमार्गगमनबोधनपरत्वनिर्णयात्। इमं चार्थमाह श्रुतिन्यायेन तत्क्रतुश्चेति—तस्योपासकस्य यद्देवताविषयकः क्रतुः स्यात् स तादृक् प्रेत्य भवति। तथा च श्रुतिः 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती'ति अचिन्मिश्रदैवतं केवलमचिद्वस्तु चोपासीनानां तत्क्रतुन्यायेनैव पुनरावृत्तिरवर्जनीयेति सिद्धम्।

## विशेषं च दर्शयति ॥ १५ ॥

किंच 'यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवती'त्यादिका श्रुतिः नामादिप्राणपर्यंतोपासकानामर्चिरादिगत्यनपेक्षं परिमितफलविशेषं दर्शयति। तस्मादचेतनमिश्रं देवादिकं केवलमचेतनं वस्तु वा ब्रह्मदृष्ट्या ब्रह्मदृष्टिवियोगेन च य उपासते न तानातिवाहिको देवगणो गमयति, किंतु परब्रह्मोपासितॄन् प्रकृतिवियुक्तं शुद्धात्मस्वरूपमक्षरात्मतयोपासीनांश्च स गणोऽर्चिरादिमार्गेण नयति। हिरण्यगर्भलो-

१ हिरण्यगर्भादिदेवतांतरोपासकाः। २ ऋग्यजुःसामाथर्ववेदेतिहासपुराणव्याकरणश्राद्धकल्पगणितोत्पातज्ञानमहाकालादिनिधिशास्त्रतर्कशास्त्र निरुक्तशिक्षाकल्पछंदोरूपत्रयीविद्याभूततंत्रधनुर्वेदज्योतिर्विद्यासर्पविद्यागंधर्वोक्तनृत्यगीतवाद्यशिल्पादिज्ञानानि एतःसर्वं नाम वाक् मनःसंकल्पं चित्तं ध्यानज्ञानबलान्नाप्तेज आकाशस्मरतृष्णाप्राण।

क्रमाप्तिवचनं तत्र निवासवचनं च प्रबलपुण्यकर्मिपरं तदुपासकपरं च वासनायुक्तपरब्रह्मोपासकपरं चापि बोध्यमिति निश्चीयते ।

इति श्रीशुद्धैकान्तधर्मप्रवर्तकश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरकसूत्रभाष्यरत्ने चतुर्थाध्यायस्य तृतीयः पादः समाप्तः ॥



## चतुर्थाध्याये चतुर्थपादः

### संपाद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

पूर्वत्रार्चिरादिना मार्गेण परविद्यावतां हिरण्यगर्भत्रिलोचनादिदेवतास्थानातीतं पुरुषोत्तमाभिधस्य परब्रह्मणो नारायणस्य परमसुखरूपं ब्रह्मशब्दवाच्यं पदं प्राप्यं निरूपितं प्रकृतिवियुक्तमात्मानमक्षरब्रह्मात्मकतयोपासीनानामपुनरावृत्तिलक्षणा गतिश्च निरूपिता; इह परब्रह्मप्राप्तानां स्वरूपाविर्भावादिप्रकारो निरूप्यते। 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति परंज्योतिः सर्वोत्कृष्टं प्रकाशबहुलावृतं नारायणस्वरूपं प्राप्तस्य जीवस्योपासितुः स्वरूपाविर्भाव उच्यते । तच्च स्वरूपं तस्य तत्कालसंभूतं पूर्वसिद्धं वेति संशयः । न पूर्वसिद्धं किंतु अभिनिष्पत्तिश्रवणात् देवादिस्वरूपवदागंतुकमेव। पूर्वसिद्धत्वे च कुतोऽस्य संसारबंधः, अतस्तदुपासनजन्यमुक्तिफलवदाविर्भूतं स्वरूपं स्वागंतुकमेवेति पूर्वपक्षे प्राप्ते सिद्धांतं ब्रूमः- परब्रह्मस्वरूपं प्राप्तस्य जीवस्यानाद्यविद्यारूपमलतिरोहितं चैतन्यस्वरूपं पूर्वं वर्तमानमेव मलरूपावरणापगमात्प्रकाशबहुलावृतमाविर्भवति स्वेन शब्दात्—'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति स्वेन रूपेणेति विशेषणशब्दात् तथावगम्यते। अन्यथा हि देवादिस्वरूपवदागंतुकस्यापि स्वरूपस्यात्मरूपत्वाभावात् स्वेनेति विशेषणमनर्थकं स्यात् । अत्रायमाशयः-भक्तानुग्राहकस्य परब्रह्मणो नारायणस्य प्रसादेन स्वाविद्यारूपे मले विगलिते सति शुद्धे जीवात्मन्येव परमात्मध्यानबलेन तत्समानगुणा तत्परिचर्यार्हा पार्षदरूपा भागवती तनुः कीटपेशस्कृत्स्वरूपापत्तिन्यायेन प्रादुर्भवति, न देवादितनुवदात्मनः सकाशाद्भिन्नेयमुपपद्यते अविद्यारूपमलस्या-

१ अधिकरणानि ५ सूत्राणि १५। २ आविर्भूतम् । ३ उपासकस्य । ४ उपासनानंतरकालिकम् । ५ भागवती तनुः ।

नादित्वाज्जीवस्यानादिसंसारबंधोपपत्तिः। अतः स्वाभाविकमेवाविद्यामुक्तस्य स्वरूपं परमात्मध्यानबलेन चिदानंदघनं सर्वज्ञत्वादिगुणविशिष्टं भागवतीतनुसंज्ञमाविर्भवति, केवलात्मनिष्ठस्य त्वक्षरतेजसि निरवयवत्वेन लीनत्वमेव भवतीति परब्रह्मोपासना-दक्षरब्रह्मोपासने कनीयस्त्वं श्रूयते स्मर्यते च 'ततो भूय इव ते तमो ये उ विद्यायां रता इति; अस्या अर्थः–ततोऽन्यस्यां विद्यायां केवलाक्षरात्मोपासनायां ये रतास्ते भूयो बहुतरं तम इवाज्ञानसदृशं निरवयवं घनतेजोमयं ब्रह्म सुषुप्तिभूतमक्षरात्मस्वरूपं प्रविशंतीति; 'कृष्णस्यानुग्रहो यस्मिन्स तेजसि तमीक्षते, केवलं तेज एवान्ये पश्यंति नतु तं मुने' इति; 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनमि'ति। सूत्रा-र्थवर्णनम्ः–नारायणध्यानबलेन तं संपद्य स्वेन रूपेण शुद्धजीवात्ममय्या भागवती-तन्वा भक्तस्याविर्भावोऽवगम्यते; कुतः स्वेन रूपेणाभिनिष्पद्यते इति शब्दात्। किंच–

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

आत्मस्वरूपमात्रस्य प्रागेव सिद्धत्वेऽपि [1]मलविनिर्मुक्तस्य [2]विद्याबलेनापरिच्छि-[3]न्नानंदाद्याविर्भाव उच्यते 'एतं त्वेवं ते भूयोऽनुव्याख्यास्यामी'ति प्रजापतिवाक्ये [4]पूर्वं जागरिताद्यवस्थारूपमलप्रयुक्तस्य पश्चात्तद्विनिर्मुक्तस्य शुद्धस्य जीवात्मन एव मुक्त इति वक्तव्यतया प्रतिज्ञानात्। किंच—

## आत्मा प्रकरणात् ॥ ३ ॥

'ते भूयोऽनुव्याख्यास्यामी'ति वाक्ये पूर्वप्रकृतापहतपाप्मत्वादिगुणक आत्मा परविद्याबलेन प्राप्तायां मुक्तावस्थायामेव व्यक्तव्यः, नतु बद्धावस्थायामिति 'उत्तराच्चे-दाविर्भूतस्वरूपस्त्वित्यत्राभिहितात्प्रकरणादवगम्यते। य आत्मा अपहतपाप्मेत्यादि प्रकृत्यैव 'भूयोऽनुव्याख्यास्यामी'त्युक्तत्वात्परमात्मप्राप्तिबलेन प्रादुर्भूतापहतपाप्म-त्वादिगुणको मुक्त आत्मा परब्रह्मसमानधर्मः पार्षद इति सिद्धम्।

## अविभागेन दृष्टत्वात् ॥ ४ ॥

पूर्वसूत्रे ब्रह्मगुणस्वरूपसदृशे मुक्तस्य गुणस्वरूपे इति प्रतिज्ञातं तत्सादृश्यं मुक्तस्योपपद्यते नवेति विचारः। किं प्राप्तं 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'एको ह

---

१ मलशब्देनानाद्यविद्योच्यते। २ परब्रह्मोपासनसामर्थ्येन। ३ अनवधिकातिशयानंदा-दिगुणगणाविर्भावः। ४ एतं त्वेव यत्पूर्वं मया अक्ष्यादौ द्रष्टृत्वेन दृश्यत इत्युक्तस्तमेवात्मानं पूर्वव्याख्यातमपि भूयः पुनरप्यनुव्याख्यामीत्युवाच प्रजापतिरित्यर्थः। ५ परविद्याबलेनोपगत-परब्रह्मस्वरूपात्प्राक्। ६ परब्रह्मस्वरूपप्राप्त्यनंतरम्। ७ जागरिताद्यवस्थारूपमलरहितस्य।

वै नारायण आसीन्न ब्रह्मा नेशानः' 'एकमेवाद्वितीयं' 'न तिष्ठति सदृशे रूपमस्ये'ति, 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' 'निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नम' इत्यादिश्रुतिस्मृतिषु परब्रह्मेतरस्य तत्सादृश्यनिषेधात् कस्यचिदपि बद्धस्य मुक्तस्य वा तत्सादृश्यमनुपपन्नमित्येवं प्राप्ते सिद्धांत उच्यते-मुक्तस्य ब्रह्मणा सादृश्यमस्ति; कुतः 'निरंजनः परमं साम्यमुपैति' 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । बहवो ज्ञानतपसा पूता मद्भावमागताः'–इत्यादिषु मुक्तस्य ब्रह्मगुणस्वरूपाविभागेन ब्रह्मसमानत्वदृष्टत्वात्; अतो 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिना परब्रह्मसाधर्म्यमेवोच्यते । तत्समानगुणरूपो मुक्त आत्मा पार्षदतया निरतिशयानंदं परब्रह्मस्वरूपं सेवमानस्तत्सुखमनुभवति कश्चिदतिप्रेम्णा तस्मिन् विलीयते चेत्तर्हि तु परब्रह्मस्वरूपमविभागेनानुभवतीति निर्णयः। 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिना मुक्तानां परब्रह्मसादृश्यनिषेध इति यदुक्तं तत्तु यथा तारकाणामल्पप्रकाशमयरूपाणां भास्करसादृश्यं तद्वज्ज्ञेयम् । मुक्तानां परब्रह्मणा सादृश्योक्तिस्तु तारकाणां प्रकाशरूपधर्मलेशतया सूर्यसादृश्यमिव परब्रह्मधर्मलेशप्राप्त्या ज्ञेया तथा तेषां स्वतंत्रतया जगद्व्यापाराद्यभावादपि भोगमात्रसाम्यलिंगाच्चेति वक्ष्यमाणेन सूत्रेण परब्रह्म इव तेषां सकलकामावाप्तिरभिहिता, अतोऽपि तत्साम्यमवगम्यते; तथा श्रूयते 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते'ति । एवं मुक्तानां ब्रह्मणा सादृश्यं चाविरुद्धम् ।

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

पूर्वत्र स्वयंप्रकाशमपहतपाप्मत्वादिगुणविशिष्टं च ब्रह्मसदृशं मुक्तानां स्वरूपमाविर्भवतीत्युक्तम्; तदुभयविशिष्टस्वरूपत्वं संभवति नवेति संशयः। एवं सति मतांतरेण पूर्वपक्षः प्रवर्त्तते-स्वेन रूपेणेति स्वरूपाविर्भावो ब्राह्मेण-ब्रह्मसंबंधिनाऽपहत-

१ अविभागेन नाम तादात्म्येन; तादात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वं यथा मधुनि लिप्युरशेषरसास्तद्वत; न चात्राद्वैतप्रसंग इति वाच्यवस्तुभिन्नत्वात् ये चात्रात्यंतस्नेहिनस्ते तु तद्धरिमूर्त्तौ नितरां मग्ना एव स्युः । २ कश्चित्समये अतिस्नेहाद्गाढानुरागवशात्तदंगे हृदयाद्यंगे स्युरिति शुकमुनिवाक्यात् स. जी. हे. टी. तस्यांगं हृदयादि तस्मिन्नेव सायुज्येन स्युरिति शतानंदमुनिवाक्यात् शि. प. ह. त. ८ अतिस्नेहेन लक्ष्मीवत्प्राप्नोत्यैक्यम् कश्चिद्धरौ सा. ११ तथैव मे भक्तोऽपि प्रेमातिशयेन विलीयते कदाचिद् मयि । ३ ताभ्यामुभाभ्यां स्वयंप्रकाशत्वापहतपाप्मत्वादिगुणाभ्यां विशिष्टं यत्स्वरूपं तस्य भावस्तत्त्वम् ।

पाप्मत्वादिकेन श्रूयते। दहरविद्यायामाम्नातास्ते ब्रह्मगुणाः प्रत्यगात्मन्यपि संतीति प्रजापतिवाक्ये य आत्मा अपहतपाप्मेत्याद्युपन्यासात् 'जक्षत् क्रीडन् रममाण' इत्यादिश्रवणाच्चावगम्यते; अतो ब्रह्मणा गुणसाम्यमिति जैमिनिर्मन्यते।

**चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥**

चितितन्मात्रेण चैतन्यमात्रेणात्मनः स्वरूपाविर्भावोऽवगम्यते न तूक्तगुणैः[1]। कुतः तदात्मकत्वात् 'स यथा सैंधवघनोऽनंतरोऽवाह्यः कृत्स्नो रसघन एव एवं वा अरे अयमात्मा अनंतरोऽवाह्यः कृत्स्नः प्रज्ञानघन एव विज्ञानघन एवे'ति तावन्मात्रकत्वावधारणात्। एवं विज्ञानस्वरूपमात्रेण साम्यमित्यौडुलोमिराचार्यो मेने। एवं मुक्तात्मसु मतद्वयोक्तोभयपक्षदर्शनात् गुणसाहित्येन गुणराहित्येन च सविशेषत्वं निर्विशेषत्वं च सिद्धम्। एवं च सति युगपदुभयपक्षासंभवाद्देहत्यागानंतरं सद्य एव परमात्मोपासनबलेन स्वस्वरूपमात्राविर्भावान्निर्विशेषत्वं, ततः परं चिरकालेन परमात्मगुणानामाविर्भावात्सविशेषत्वमिति मतांतरनिर्णयः। सांप्रतं भगवान् बादरायणः स्वमतसिद्धांतमाह—

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥**

बादरायणस्त्वेकांतोपासनेन परब्रह्मस्वरूपमापन्नस्य मुक्तस्य[2] स्वरूपे ह्युभयश्रुत्यवगतगुणप्रकाशद्वयं[3] देहविनाशानंतरक्षण एव युगपदाविर्भवतीति मन्यते। तथाहि 'विज्ञानघन एवे'ति श्रुतिस्तदेकांतोपासनेन देहापगमानंतरकाल एवोपलब्धस्वविषयस्वस्वरूपप्रकाशक आत्मेति बोधयति; प्रजापतिवाक्ये 'य आत्मापहतपाप्मे'त्याद्युपन्यासोऽपि, अतः पूर्वेषां दहरविद्याम्नातानामात्मशब्दवाच्यपरमात्मविषयाणामपहतपाप्मत्वादिगुणानां तत्र देहप्रहाणानंतरक्षण एव सद्भावं परमात्मोपासनेनावगमयति; अतो युगपदाविर्भूतमुभयप्रमाणसिद्धमस्यै स्वरूपे द्वयमविरोधं परस्परविरोधशून्यमित्युभयविशिष्टस्वरूपं समुचितम्; अतो विज्ञानरूपत्वेन स्वयंप्रकाशमपहतपाप्मत्वादिपरमात्मगुणयोगात् कल्याणगुणविशिष्टं च ब्रह्मसदृशं मुक्तस्वरूपमिति युक्तमिति तन्मतम्[4]।

**संकल्पादेव तच्छ्रुतेः ॥ ८ ॥**

पूर्वत्र मुक्तस्य परब्रह्मप्राप्त्या प्रादुर्भूतस्वरूपस्य सत्यसंकल्पत्वादिकमभिहितं[5]

१ आत्मनि। २ मुक्तस्यात्मनः। ३ स्वप्रकाशत्वमपहतपाप्मत्वादिगुणाश्चेत्युभयम्। ४ बादरायणमतम्। ५ अपहतपाप्मत्वादिसत्यसंकल्पत्वपर्यंता गुणा उक्तास्तत्र सत्यसंकल्पत्वादिकमुपादाय संदिह्यते।

तत्केवलस्वतंत्रतया उत परब्रह्मानुग्रहदृष्टिसंपादितस्वतंत्रत्वेन वर्त्तते इति संदेहः। किं तावत्प्राप्तं कर्दमादिमुक्तानां केवलस्वतंत्रत्वेनैव स्वसंकल्पादिसिद्धिरिति पूर्वपक्षे प्राप्ते सिद्धांतं वदामः-परब्रह्मोपासनेन मुक्तभावमुपगतानां कर्दमादीनां भगवदनुग्रहकृपाकटाक्षसंपादितस्वतंत्रत्वसंभूतात् संकल्पादेव-संकल्पमात्रेणैव सकलभोग्यवस्तुसिद्धिरवगम्यते। कुतः तच्छ्रुतेः-'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठंती'ति तेषां स्वरूपाविर्भावसत्यसंकल्पत्वादिश्रवणात् विद्यासामर्थ्याद्धार्दानुगृहीत इत्यधिकरणांशवचनाच्च 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' इति स्मरणाच्च नारायणानुग्रहदृष्टिसंपादितस्वतंत्रत्वानां मुक्तानां संकल्पमात्रमेव समस्तभोग्यवस्तुसंपादने हेतुः, न तु हेत्वंतरापेक्षा; अतः केवलस्वतंत्रतया सत्यसंकल्पत्वादिकं नारायणस्यैवास्ति, इतरेषां तु तदनुग्रहदृष्ट्या संभवति न त्वितरथेति निश्चीयते—

## अत एव चानन्याधिपतिः ॥ ९ ॥

किंच यतएव नारायणानुग्रहेण ब्रह्मभावमपहतपाप्मत्वादिगुणगणं चोपगतः अतएवानन्याधिपतिः-न विद्यतेऽन्यः परब्रह्मेतरश्चेतनाचेतनकलापोऽधिपतिर्नियामको यस्य एवंभूतः स्वतंत्रो नारायणपार्षदाभिधेयो मुक्तगणः कदाचिदपि मायाकालकर्माधीनो न भवति; अतोऽयमनन्याधिपतिः।

## अभावं बादरिराह ह्येवम् ॥ १० ॥

सर्वत्र मुक्तस्य स्वयंप्रकाशत्वं सत्यसंकल्पत्वादिवैशिष्ट्यं चोपपादितम्; इह तस्य सशरीरत्वमशरीरत्वं चोभयं वेति विचारः प्रवर्त्तते। बादरिस्तावत् मुक्तस्य देहेंद्रियाद्युपकरणाभावं मेने; कुतः 'आह ह्येवं न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वा वसंतं न प्रियाप्रिये स्पृशतः' इति शरीरसंबंधे दुःखस्यावर्जनीयत्वमभिधायास्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति मुक्तस्य शरीरराहित्यं श्रुतिरेव ब्रवीति। स्मृतिरप्याह 'देहेंद्रियासुहीनानां वैकुंठपुरवासिनामि'ति।

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिस्तु मुक्तस्य देहेंद्रियादिभावं मेने; कुतः विकल्पामननात्। 'स एकधा भवति त्रिधा भवति पंचधा सप्तधे'त्यादौ विविधः कल्पो भेद आम्नायते, अत एक-

रूपस्याच्छेद्यस्यात्मनो वैविध्यासंभवाच्छरीरद्वारेण विविधत्वं श्रूयते इत्येवं प्राप्ते भगवान् सूत्रकारः स्वमतेन सिद्धांतं ब्रवीति—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥**

अत उभयश्रुतेरुभयविधमशरीरत्वं सशरीरत्वं च मुक्तस्य। तत्राशरीरत्वं प्राकृतशरीरनिषेधतयावगंतव्यं सशरीरत्वं च दिव्याप्राकृताविनाशिशरीरसहिततया बोध्यमिति भगवान् बादरायणो मन्यते। [1]द्वादशाहवत्–यथा 'द्वादशाहमृद्धिकामा उपेयुः' '[2]द्वादशाहेन प्रजाकामं न याजयेदि'त्युभयश्रुतेर्विधिनिषेधौ भवतस्तद्वत् अयथा पुरुषोत्तमो लीलार्थं धर्मदशरथवसुदेवकश्यपादिपितृप्रभृतिकं सृष्ट्वा तैः सह मनुष्यधर्मरूपलीलारसं भुंक्ते। यथा च विधिपरिहितवत्सगोपादिसदृशरूपाणि कृत्वा रमते तथा मुक्तात्मनोऽपि स्वेच्छया सर्वं संभवति। नन्वात्माणुपरिमाण इत्यभिहितं कथमणुमात्रस्य तस्यैकस्यानेकदेहेष्वात्माभिमानसंभव इत्याशंकायामाह—

**प्रदीपवदावेशस्तथाहि दर्शयति ॥ १३ ॥**

सूचितं हि पूर्वत्र मुक्तात्मनोऽपि स्वेच्छयानेकशरीरपरिग्रहणसामर्थ्येन व्यापकत्वं तदिह युज्यते नवेति विचार्यते। 'सर्वेषु लोकेषु कामचारो भवति इमान् लोकान् कामान्नीकमरूप्यनुसंचरन्' इत्यादिषु मुक्तस्य परिच्छिन्नतया संचारावगमात् न व्यापकत्वमुचितम्; अतो बहुशरीरपरिग्रहणं क्रमेणैव न युगपदिति पूर्वः पक्षः। सिद्धांतस्तु प्रदीपवत्–यथा घटाद्यावृतस्य प्रदीपस्य घटाद्यावरणापाये तस्यैकस्यैकदेशवर्त्तिनोऽपि स्वप्रभयानेकप्रदेशेषु प्रवेशस्तथा परविद्याबलेनाविद्यारूपावरणापाये परमात्मसाधर्म्यं प्राप्तस्यैकदेशवर्त्तिन एकस्यापि मुक्तात्मनः स्वप्रभारूपेण ज्ञानेनानेकशरीरेष्वावेशः। यथासंकल्पमात्माभिमानानुगुणं व्यापकत्वं तथाहि दर्शयति श्रुतिः'बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः स चानंत्याय कल्पते' इति; तथा स्मृतिश्च 'पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मीति'। अत्र मुक्तानां स्वेच्छयैव देहांतरप्रवेशः, बद्धानां तु कर्माधीनतयैवेत्युभयेषां वैषम्यं विज्ञायते।

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १४ ॥**

ननु ब्रह्मप्राप्तस्यांतरबाह्यज्ञानलोपमाह श्रुतिः 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नांतरमि'ति कथं तस्य ज्ञानरूपया प्रभया व्याप्तिरुच्यते इति न शंक्यम्;

---

१ उभयविधस्वीकारे दृष्टांतः द्वादशाहवदिति। २ द्वादशाहकर्मणः स्वीकृताविति शेषः। ३ द्वितीयाध्यायस्य तृतीयपादे।

कथमिति चेत्तत्राह नेदं वेदनाभावबोधकं श्रुतिवचनं मुक्तविषयम्, किंतु बद्धजीवस्यास्वाप्ययसंपत्त्योः स्वाप्ययः सुषुप्तिः संपत्तिर्मरणं च तयोर्मध्येऽन्यतरात्र भारतपौराणिकी भणितिः। 'अनिंद्रिया निराहारा अनिस्पंदाः सुगंधिनः। एकांतिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः।। दृष्टा वः पुरुषाः श्वेताः सर्वेंद्रियविवर्जिता' इति। 'देहेंद्रियासुहीनानां वैकुंठपुरवासिनामिति, 'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः। श्यामावदाताः शतपत्रलोचनाः पिशंगवस्त्राः सुरुचः सुपेशस इति' ।।'अतींद्रिया निर्गतसर्वपापा निष्पंदहीनाश्च सुगंधिनश्च। द्विबाहवः केऽपि चतुर्भुजाश्च श्वेताश्च केचिन्नवनीरदाभाः ।। पद्मच्छदाक्षाः समसानगात्राः सुरूपदिव्यावयवाः सुसाराः। विकीर्णकेशाश्च सदा किशोराः सद्भिश्च चिह्नैर्निखिलैरुपेताः ।। सरोजरेखांकितपाणिपादाः षडूर्मिहीना मिहिरातितेजसः। सितांशुका ध्यानपराश्च सौम्याः कालोऽपि येभ्यो भयमेति नित्यम् ।। सावर्णिरुवाच—

'अतींद्रिया निरातंका अनिष्पंदाः सुगंधिनः।
के ते नराः कथं जातास्तादृशाः का च तद्गतिः ।।
श्वेतद्वीपः पयोंऽभोधौ वर्त्तते हि धरातले।
तद्वासिनामपि कथं प्रोक्ताऽतींद्रियता त्वया ।।
ये ब्रह्मण्यक्षरे धाम्नि सच्चिदानंदरूपिणि।
स्थिताः स्युश्चिन्मया मुक्तास्ते तथा स्युर्नहीतरे ।।
एतं मे संशयं छिंधि परं कौतूहलं हि मे।
त्वं हि सर्वकथाभिज्ञस्ततस्त्वामाश्रितोऽस्म्यहम्' ।।

स्कंद उवाच—'एकांतोपासनेनैव प्राक्कल्पेषु रमापतेः।
ये ब्रह्मभावं संप्राप्ता अजरामरतां गताः ।।
अक्षराख्याः पुमांसस्ते श्वेतद्वीपेऽत्र धामनि।
सेवितुं वासुदेवं तं स्थिता देवर्षिणेक्षिताः ।।
प्राप्ते प्रलयकाले तु पुनश्चाक्षरधामनि।
स्थास्यंति ते स्वतंत्राश्च कालमायाभयोज्झिताः' ।।

इत्यादिषु ब्रह्मभावमुपगतानां मुक्तानामदेहत्वं सदेहत्वं च निर्णीतम्; एवं भगवद्धाम्नि मुक्तानां सशरीरत्वाशरीरत्वप्रकारं निरूप्य सांप्रतं तेषां ततोऽत्रागमनप्रकारो वर्ण्यते—

## तन्वभावे संध्यवदुपपत्तेः ॥ १५ ॥

भगवति परब्रह्मणि निष्कारणनिरवधिकातिशयदयालुत्वाज्जनकल्याणनिष्पाद-

नादिकार्यचिकीर्षावशतया तेन स्वस्थानादिह प्रेषितस्य यस्य कस्यचिन्मुक्तस्य तन्त्वभावे-स्वेच्छोत्थसंकल्पसंगृहीतस्थूलशरीराद्युपकरणाभावेऽपि तत्स्रष्टैस्तैरुपकरणैस्त-च्चिकीर्षितस्य जनकल्याणनिष्पादनादिकार्यस्योपपत्तेः। सत्यसंकल्पोऽपि स्वयं तानि न सृजति, एतद्दृढीकर्त्तुं संध्यवदिति दृष्टांतं बद्धपुरुषस्य स्वप्ने स्वकर्मफलभोगार्थं स्वांत-र्यामिणा समर्पितोपकरणमात्रपरतया योजयति। यथा संध्यो जाग्रत्सुषुप्त्योः संधिभवो यः स्वप्नस्तत्र जातं यद्राज्याद्यल्पसुखं तस्य तत्स्रष्टै रथाद्युपकरणैरेव तस्य भोगोप-पत्तिर्नतु स्वसृष्टैस्तैस्तद्वत् ।

भावे जाग्रद्वत् ॥ १६ ॥

मुक्तेष्वेकान्तोपासनेनापहतपाप्मत्वाद्यष्टभगवद्गुणाविर्भावोक्तेरितरतदीयगुणावि-र्भावोपलक्षणत्वादाविर्भूतापारकारुण्यवश्यतया भगवत्स्वरूपबोधनेनानेकजननिःश्रेय-सं विधातुं यः कश्चिन्मुक्तस्तदादेशमंतरापि यदि कदाचिद्ब्रह्मपुरादिह यियासति तदा स्वसंकल्पादेव स्वसृष्टदेवमनुष्यशरीराद्युपकरणभावेऽगीकृते सति जाग्रद्वत्–जागरिता-वस्थायां बद्धपुरुषस्य स्वसंपादितोपकरणैर्भोगवन्मुक्तोऽपि स्वसृष्टस्थूलशरीराद्युपकरणैः स्वाश्रितजनार्पितान् नानाभोगान् यथोचितं भुंजानस्तेषां भगवत्स्वरूपबोधनाय स्वस्वधर्मपथे तदुपासनापथे च प्रवर्त्तयन् सन् तन्निःश्रेयसं विदधाति। किंचा-पेक्षमेकापेक्षम्; तथाहि–'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति ना एवेमानि भूतानी'ति, सुषुप्तौ 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ती'ति मरणे चानया श्रुत्या तथैव तदाविष्कृतं हि ततो बद्धजीवविलक्ष-णतयाभिहितस्य मुक्तस्य सुषुप्तिमरणयोर्नाज्ञत्वादिकं किंत्वविद्यारूपमलतिरोधानेन नारायणोपासनेन च सर्वज्ञत्वादिगुणवैशिष्ट्यमस्ति; अतो न मुक्तात्मनि ज्ञानादिनि-षेधसंभव इति निश्चीयते ।

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

उक्तं नारायणेन सह साम्यं मुक्तानां स्वप्रकाशत्वव्यापकत्वसर्वज्ञत्वादिभिस्तथा सति जगत्सृष्ट्यादावपि साम्यं दुर्वारं 'परमं साम्यमुपैती'ति निर्विशेषश्रवणात्; जग-त्सृष्ट्यादिसाम्याभ्युपगमे च परब्रह्मानेकत्वावगमात्तस्याद्वितीयत्वाभावप्रसंगः, अतः कीदृशं साम्यं नारायणेन सह मुक्तानां विवक्षितं जगत्सृष्ट्यादिव्यापारयुक्तं तद्वर्जं

१ एवं जाग्रदाद्यात्मवत् खल्वयं सुषुप्तावस्थोऽप्यात्मा संप्रतीदानीमयमहमस्मीत्यात्मानं नाह नैव सम्यक् जानाति, इमानि प्रसिद्धानि भूतानि च नो एव नैव जानाति। २ अवस्थाद्वयेऽ-पीति शेषः ।

चेति संशयः। किं प्राप्तं 'स यदि पितृलोककामो भवती'त्यादिषु संकल्पमात्रात् पितृलोकादिसृष्टिसामर्थ्यश्रवणात् 'इमान् लोकान्कामान्नीकामरूप्यनुसंचरन्नि'त्यादिवाक्येषु सर्वत्र व्यापारश्रवणाच्च नारायणसाम्ये संकोचायोगेन मुक्तानां जगत्सृष्ट्यादिव्यापारोऽप्यस्तीति प्राप्ते ब्रूमः–मुक्तानां सर्वज्ञत्वादिगुणलेशतया नारायणसाम्येऽपि जगद्व्यापारवर्जं चेतनाचेतनात्मकजगत्सृष्टिस्थितिनियमनादिव्यापारं वर्जयित्वैव परब्रह्मभोगमात्रे तदनुग्रहेणैव स्वातंत्र्यं भवति। ननु यतोऽक्षरपुरुषादयो मुक्ता अपि स्वतंत्रतया जगत्सृष्ट्यादिव्यापारं कुर्वंति, अतो जगद्व्यापारवर्जमिति कुत उक्तमिति चेत्तत्राह–'यतो वा इमानि भूतानि जायंते येन जातानि जीवंति, सदेव सौम्येदमग्र आसीत्, तदैक्षत बहु स्यां प्रजायेय, ब्रह्म ह वा इदमेकमेवाग्र आसीत्, आत्मैवेदमग्र आसीत् पुरुषविधः, एको ह वै नारायण आसीत्, हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति, 'पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान' योऽस्योत्प्रेक्षक आदिमध्यनिधन' इत्यादिषु जगदुद्भवादिकर्तृबोधकश्रुतिस्मृतिवाक्येषु स्वतंत्रतया नारायणस्यैव प्रकरणात् असन्निहितत्वाच्च तेषु वाक्येषु मुक्तस्वातंत्र्यस्य सान्निध्यरहितत्वाच्च नारायणस्यैकस्यैव स्वतंत्रतया जगदुद्भवादिव्यापारोऽवगम्यते, तदितरेषां तु तादधीन्येन। किंच तेषां हरिकृपाकटाक्षेणैव भोगमात्र एव स्वतंत्रतया परब्रह्मसाम्यं श्रूयते 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति आक्षिप्य परिहरति—

**प्रत्यक्षोपदेशादितिचेन्नाधिकारिकमंडलस्थोक्तेः ॥ १८ ॥**

'स स्वराट् भवती'त्यारभ्य 'इमान्लोकान्कामान्नीकामरूप्यनुसंचरन्नि'त्यादिना प्रत्यक्षेण श्रुत्यामुक्ते व्यापारस्योपदेशात् अस्य जगद्व्यापारसंबंधोऽस्तीति चेन्न, तत्र कामानिति कामभोगसंबंधात् आधिकारिकाणां ब्रह्मरुद्रेंद्रादीनां मंडलेषु स्थितभोगानुषंग एवोच्यते, अतोऽस्य न जगद्व्यापारः। तथा सति तस्य भोगानुषंगाद्विकारित्वमित्यत आह—

**विकारावर्त्ति च तथाहि स्थितिमाह ॥ १९ ॥**

चकारोऽवधारणार्थः। जन्ममरणादिविकारेषु न वर्तते इति विकारावर्त्ति विकृतभावानुषंगरहितं विशुद्धं निरतिशयानंदस्वरूपं परब्रह्मैव मुक्तस्य भोग्यमस्ति। तथाहि मुक्तस्य खलु स्थितिमाह श्रुतिः 'रसो वै सः रसं ह्येवायं लब्ध्वानंदी भवती'ति, परब्रह्मस्वरूपं हि 'सत्यं ज्ञानमनंतं ब्रह्म, आनंदो ब्रह्मे'त्यादिष्वविकृतं सुखमयं चैव श्रूयते, अतो न विकारिप्रपंचसुखसदृशं मुक्तप्राप्यं परब्रह्मसुखम्;

को वात्राशयः-आधिकारिकाणां ब्रह्मरुद्रेंद्रादीनां मंडलेष्ववस्थितानां जनानां परब्रह्मो-पासनोपदेशाय स्वेच्छया संचरमाणः स्वेच्छारूपी विगलितमनुष्यादिदेहाभिमानो मुक्तः सविभूतिकं ब्रह्मानुभवं स्वीकुर्वन्नवतिष्ठते न त्वाधिकारिकमंडलस्थानपि भोगान् भुंक्ते अतोऽमुक्तानां ब्रह्मानंदानुभवमंतरेण जगत्सृष्ट्यादिव्यापारः स्वेच्छया न संभवति।

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

एवमुक्तमर्थं प्रत्यक्षानुमाने श्रुतिस्मृती दर्शयतः 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः, भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेंद्रश्च मृत्युर्धावति पंचमः, एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठतः, एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय, रसो वै सः रसं ह्येवायं लब्ध्वानंदी भवति, एष ह्येवानंदयति निरंजनः परमं साम्यमुपैती'त्या-दिश्रुतिकलापः, 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्, अप एव ससर्जादौ, 'पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्, योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्त-जीवेश्वरो यं संपद्य जहात्यजामनुशयी, 'मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् वर्षतींद्रो दहत्यग्निर्मृत्युश्चरति मद्भयात्, 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते, ब्रह्मणो हि प्रतिष्ठाहममृतस्या-व्ययस्य च। शाश्वतस्य च धर्मस्य सुखस्यैकांतिकस्य च, 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः, 'यं लब्ध्वा चापरं लाभं मन्यते नाधिकं तत' इत्यादि स्मृतिकला-पश्चेत्युभौ कलापौ जगदुद्भवनियमनादिकं नारायणस्यैव कर्म दर्शयतः। मुक्तस्य तु तदनुभवरूपमेव भोगं च। मुक्तस्य परब्रह्मणा सह भोगतुल्यत्वं दर्शयितुमिदं सूत्रमारभते—

## भोगमात्रसाम्यलिंगाच्च ॥ २१ ॥

मुक्तस्य भोगमात्रेणैव परब्रह्मसाम्यमवगम्यते, ननु जगत्सृष्ट्यादिव्यापारेण, कुतः तस्य साम्यस्य लिंगात् 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति अक्षरं ब्रह्म च प्रकृतिपुरुषौ च जीवेश्वरौ चेति विविधं वस्तु पश्यंत्या चिच्छब्द-वाच्यया ज्ञानशक्त्या युक्तं पुरुषोत्तमशब्दाभिधेयं परब्रह्म विपश्चिदित्युच्यते; यया स्वाभाविक्या स्वरूपस्थितया सर्वांतर्यामिणो नारायणस्य परब्रह्मणः सर्वज्ञत्वं सर्वकारणत्वमनादिबोधत्वं सकलचेतनाचेतनात्मकत्वं सर्वशक्तित्व-मलुप्तदृष्टित्वं सदा स्वतंत्रत्वं नित्यतृप्तत्वं निरतिशयैश्वर्यवत्त्वं भक्तानुग्राहक-त्वमेकांतिकभक्तमुक्तयोग्यरसरूपमूर्तित्वं च संभवति। तादृग्गुणयुक्तं नारायणश-

ब्दाभिधेयं परं ब्रह्म विपश्चित्; तेन सह स तत्समानधर्मा मुक्तोऽपि सर्वान् कामान् रमणसंलापनप्रवेशनादिसुखरूपान् तद्दर्शनस्पर्शनश्रवणस्मरणकीर्त्तनपरिचर्यादिजन्यसुखरूपांश्च भागवतीतनुसंज्ञेनाप्राकृतेन दिव्यविग्रहेणापि समश्नुते-भुंक्ते। तथाहि स्मर्यते 'आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे। कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिरि'ति, इति श्रुतितात्पर्यार्थः। एवं श्रुतिप्रमाणात् जगद्व्यापारवर्जमित्यधिकरणांशवचनाच्च भोगमात्रसाम्यं मुक्तस्य ब्रह्मणा सहेति निश्चीयते॥

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

उक्तं परब्रह्मणा नारायणेन साधर्म्यम् मुक्तानां भोगादिसाम्यादिह तेषां कदाचिदपि पुनरावृत्तिर्यथा यज्ञादिशुभकर्मणा देवेंद्रादिलोकारूढानां भवति तथा भवति नवेति संदिह्यते। किं तावत्प्राप्तमिति चेत्तत्राह-'कामान्नीकामरूप्यनुसंचरन्नि'त्यादिष्वनेकशरीरसंबंधोऽवगम्यते। मुक्तानां तत्संबंधे सति पुनरपि शुभाशुभकर्मकर्तृत्वं प्रतीयते। पूर्वकृतस्य परब्रह्मोपासनस्य बहुकालभोगेन तत्फलक्षये सति तात्कालिककर्मसंबंधात् पुनरपि तुच्छसुखसंसारापत्तिर्भवेत्। तथाहि यथा देवेंद्रादिलोकारूढानां यज्ञादिशुभकर्मक्षये पुनरावृत्तिर्विंशादिदेहप्राप्तिश्च भवति तथा वैकुंठादिपरब्रह्मपदारूढानां भोग्यवस्तुभोक्तृत्वादिसंबंधेन भोगस्य चोपासनारूपप्रबलपुण्यकर्मक्षयहेतुत्वेन च तेषां पुनरावृत्तिरूपः संसारः संभवतीति पूर्वपक्षे प्राप्ते सिद्धांतं वदामः-साक्षात्कृतपरब्रह्मस्वरूपाणां तत्पदारूढानां मुक्तानामनावृत्तिः संसारे पुनरावृत्तिर्न भवति,कुतः शब्दात्-'एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तंते' इति 'यद्गत्वा न निवर्त्तेत योगी लिंगाद्विनिर्गमे,'यद्गत्वा न निवर्त्तंते तद्धाम परमं मम' 'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवंति महात्मानः संसिद्धिं परमां गताः' 'मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते' 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायंते प्रलये न व्यथंति च' इत्यादिश्रुतिस्मृतिवचनवृंदात्। अतो मुक्तानामेकांतोपासकानां परब्रह्मपदारूढानां न पुनरावृत्तिरवगम्यते। अनावृत्तिः शब्दादिति द्विरुक्तिस्तु ग्रंथपरिसमाप्तिद्योतनार्था।

उच्चैः पीठवरे महासदसि सद्भक्तव्रजानां स्थितम्।
सर्वैर्मुक्तगणैः कृतांजलिपुटैः संस्तूयमानं मुदा॥
बिभ्राणं तुलसीस्रजं वरकरे दक्षे वलक्षांबरम्।
मुक्तानंदमुनिर्नमामि तमहं श्रीस्वामिनारायणम्॥ १॥
ध्यात्वा भक्त्यांघ्रिपद्मं निजहृदि ललितं स्वामिनारायणस्य।
मुक्तानंदेन दुर्गं पुरमधिवसता भाष्यरत्नं मयेदम्॥

सूत्राणामुत्तमानां रचितमवितत यर्हि शारीरकाणाम् ।
गोपालानंदनामालिखदतिनिपुणो मत्कृतौ मत्सहायी ॥ २ ॥

तत्प्रसादसमवाप्तसमुद्धिः साधुसेवनहरीक्षणचित्तः ।
तर्हि साधुरपि माधवदासस्तावुभावुरुमुदाधिसिषेवे ॥ ३ ॥

व्यासाभिप्रायबोधं शुभमिदमखिलं श्रीहरेः संप्रसादात् ।
संपूर्णं जातमित्थं सुमतिरुचिकरं भाष्यरत्नं सुबोधम् ॥

युक्ताः सल्लक्ष्मभिर्ये भगवदुरुमुखाः लेशमात्रं मुरारे- ।
र्दूरे स्थातुं न शक्ताः प्रकटहरिमुदो वीक्ष्य संतु प्रसन्नाः ॥ ४ ॥

श्रीमन्मौक्तिकपुष्पहारहृदयं श्रीवत्सलक्ष्मांकितम् ।
देवच्छंदललंतिकामुखवराकल्पं ललामं सताम् ॥

तं कार्त्तस्वरभास्वरांबरधरं यष्टिं करे बिभ्रतम् ।
दिव्याकारमहं नमामि सहजानंदं हरिं शर्मदम् ॥ ५ ॥

श्रीमत्कौसुमहारराजिरुचिरं कर्णोल्लसत्कुंडलम् ।
चंचच्चारुचलद्विचित्रवसनं प्रोत्फुल्लपद्मेक्षणम् ॥

तं स्मेरास्यवितर्जितोज्ज्वलतरप्रालेयरश्मिश्रियम् ।
वंदे भूषणभूषणांगमनिशं श्रीनीलकंठं हरिम् ॥ ६ ॥

श्रीमच्चंद्रनिभाननस्मितसुधासंपृक्तबिंबाधरम् ।
मालां श्रीहरिकृष्णमार्त्तिशमनं दक्षे करे बिभ्रतम् ॥
मंदारस्थलपद्महारततिभिः सच्चंदनैरर्चितम् ।
भक्तैः कौसुमशेखरैस्तमनिशं श्वेतांबरं चिंतये ॥ ७ ॥

अंभोजायतपत्रनेत्रयुगलं स्मेरास्यमिंदीवर-
श्रेणीश्यामलकोमलांगमुरुधा सद्वेदवृंदस्तुतम् ।
दिव्यं दीर्घविशालभालतिलकं श्रीभक्तिधर्मात्मजम्
सर्वाधारमहं नमामि सहजानंदं मुनीशं मुदा ॥ ८ ॥

इति श्रीशुद्धैकान्तधर्मप्रवर्त्तकसंसारसिंधुनिमग्नजनवर्गनिष्कासकाधर्मतिमिरविनाशकभास्करप्रकटपुरुषोत्तमश्रीसहजानंदस्वाम्युपासकाग्रगण्यमुक्तानंदमुनिविरचिते व्यासाभिप्रायबोधके द्वैपायनीयशारीरसूत्रभाष्यरत्ने चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥
समाप्तश्चायं चतुर्थाध्यायः ॥ ४ ॥

समाप्तमिदं ब्रह्मसूत्रभाष्यरत्नम् ॥

